

महर्षि दैवरात, गोकर्ण (१८९२-१९७५)

विश्वामित्र गोत्र, विघ्नेश्वर भदाति-नागवेणी सुतः

(Photograph and Life sketch from elsewhere)

**Chronology of the Main Events of Daivarata's life.**

| | Event | Date |
|---|---|---|
| 1. | Birth | **4th Jan. 1892 A.D.** |
| 2. | Upanayana | **1899 A.D.** |
| 3. | Mother's death | **1899 A.D.** |
| 4. | Father introduced the *Ṛgveda* | **1899 A.D.** |
| 5. | Joined the *pathashala* of Krishna Bhat | **1900 A.D.** |
| 6. | Met Ramadasa Swamy | **1904 A.D.** |
| 7. | Ran away from Gokarn to meet Ramadasa Swamy avoiding marriage. | **1905 A.D.** |
| 8. | Returned to Gokarn from his first phase of wanderings with Ramadasa Swamy | **1907 A.D.** |
| 9. | Joined the *haṭhayoga* classes of Balavant Rao | **1907 A.D.** |
| 10. | Marriage with Arundhati | **1908 A.D.** |
| 11. | Met Tembe Maharaj for the first time | **1909 A.D.** |
| 12. | Met Vāsiṣṭha Gaṇapati Muni for the first time | **1910 A.D.** |
| 13. | Served Vāsiṣṭha Muni for more than three years during Muni's stay at Gokarn. | **1910-1913 A.D.** |
| 14. | Went with Tembe Maharaj and Vāsiṣṭha Muni | **1913 A.D.** |
| 15. | Tembe Maharaj died Daivarata's "*Panchagavya Vrata*" | **1914 A.D.** |
| 16. | Met Ramana Maharshi | **1915 A.D.** |

| | | |
|---|---|---|
| 17. | Became the Seer of new *mantras* | **1917 A.D.** |
| 18. | Establishment of Ashrama at Gokarn | **1919 A.D.** |
| 19. | Second marriage | **1920 A.D.** |
| 20. | Stayed for two months at Benares Hindu University | **1935 A.D.** |
| 21. | *Veda-vedikā* published | **1957 A.D.** |
| 22. | His Lectures at Benares Hindu University | **1963 A.D.** |
| 23. | Participated in the Vedic conference at Tirupati. Also, presided over the "*Veda-Pariṣat*" at New Delhi, where, he was honoured with the title "*Vidyā-vācaspati*" | **1964 A.D.** |
| 24. | "*Vedavācāspati*" an honorific title conferred upon Daivarata by Bharatiya Vidya Bhavan, Bombay. | **1966 A.D.** |
| 25. | *Chhando-Darśana* published | **1968 A.D.** |
| 26. | Felicitated in Lal Bahadur Shastri Sanskrit Vidyapeetha, New Delhi. | **1970 A.D.** |
| 27. | Visited foreign countries | **1971 A.D.** |
| 28. | *Vāk-sudhā* published | **1972 A.D.** |
| 29. | Met with an accident | **1972 A.D.** |
| 30. | Died | **13th Aug. 1975 A.D.** |

**Special note :** The chronology of Daivarata is prepared on the basis of some published articles and profiles of Daivarata. The book of Tembe Maharaj which is published by Samaj Pustakalaya, Dharwad, helped a lot in this matter. Also, the manuscript of the unpublished biography is the main source for this life-sketch. God willing, a detailed biography of Brahmarshi Daivarata is intended to be published.

ईं ॐ श्रीः

# वेदार्थ-कल्पलता

## पूर्वपीठिकासहिता

वेदमन्त्राणां श्लोकरूपभाष्येण
सङ्कलिता
मन्त्रपाठेन पदपाठेन च युक्ता

रचयिता
दैवरातः

काशी हिन्दू विश्वविद्यालय
वाराणसी-५

प्रकाशक
काशी हिन्दू विश्वविद्यालय
वाराणसी-५

मूल्य—पचीस रुपए

मुद्रक
रवीन्द्रकुमार बेरी
काशी हिन्दू विश्वविद्यालय प्रेस

पूर्वपीठिका

# ( वेदार्थकल्पलतिका )

## विषय-सूची

# वेदार्थ-कल्पलता

## विषय-सूची

"ई ॐ श्रीः"

"ॐ भद्रं नो अपि वातय मनः"

# "वेदार्थकल्पलतिका"

## "पूर्वपीठिका"

### "आद्यं मङ्गलं पद्यम्"

"श्रीमद् भारतमातृभूमिविजयस्वानन्दसन्दोहिनी
विद्या-बुद्धि-महःसुवीर्य-विभव-प्रज्ञानसन्धायिनी ।
नाद-ब्रह्म-पराक्षराभयकरा वेदार्थवाक् कामधुग्
भूयात् "कल्पलता" समस्तजनतानन्दाभिवृद्ध्यै चिरम्" ॥

"विदितमस्तु तत्रभवताम्"—

"अस्मिन्" विश्वस्मिन् प्रपञ्चे परिदृश्यमानायां अस्यामीशसृष्टौ परिवर्तमानानामस्माकं सर्वेषां मानवानां आर्षेयं वैदिकं तत्त्वज्ञानं, आर्षेयी दिव्यसत्त्वमयी वैदिकी सद्विद्या-संस्कृतिः, स्वतन्त्रं पवित्रं च शास्त्रीयं जीवनं, कर्तव्यकर्मानुसरणं, प्रापञ्चिकी शान्ति-शक्ति-रससत्त्वपूर्णा प्रवृत्तिः, जनता-जगदीशसेवानुवृत्तिः समभावानुदर्शनप्रगतिः,—इत्येवमादीनि साधनानि सर्वसम्पत्तिसमृद्धानि सर्वेषामपि इष्टतमानीति सर्वानुमतं शास्त्रीयं तत्त्वम् इति प्रतीयते । तथा तत्साध्यं च सर्वेषां प्राणिनां शान्ति-सम्पदादिभाग्योदयदर्शनं प्रापञ्चिकम्, पारमार्थिकम् अमृतत्वादिरूपं सम्पत्तिसत्त्वमेव परमं ध्येयम् इति च विदितचरमेव विदुषाम् । तेनैव सदसद्विवेकशालितादिना दिव्यसत्त्वेन यथोक्त-युक्ततरगुणसम्पन्नया सौजन्यसद्विभूत्या मानवतायाः सार्थकतादिसत्त्वसिद्धये दैवीसम्पदभ्युदयार्थं च "सद्विद्यैव" सर्वथा शरणमिति निर्विवादमभ्युपगन्तव्यं भवति, तच्च तादृशं दिव्यं हृदय्यं सद्विद्यासरवमपि सदसतोर्विमर्शात्मकेनान्तर्येण हृदय्येन तपसा धीयोगेन च सुसम्पाद्यं सदेकसत्त्वप्रतिपत्तिरूपं दिव्यं "सुविज्ञानमेव" भवितुमर्हति, येन पूर्णात्मतत्त्वानुभावोदयः, दिव्यात्मस्वरूपाविर्भावः, परमशान्ति-शक्तिरसानुभवश्च सम्पद्यते इत्यनुश्रूयते, तथा च वसिष्ठार्षेयं ऋङ्मन्त्रदर्शनम्—

"सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत् सत्यं यतरदृजीयस्तादित् सोमोऽवति हन्त्यासत्" इति ॥

(ऋ. ७, १०४, १२)

**तस्यायमर्थः**—अस्मिन् लोके बहिः अस्मिन् अन्तःशरीरे वा यस्मिन् कस्मिंश्चिद् वा विषये वस्तुतत्त्वे च शास्त्रीयेन युक्तेन निर्णयेन यदि कश्चित् पुरुषः तदनुभूतिज्ञानं प्राप्तुं अभिलषति चेत् तस्मै तद्वस्तुतत्त्वजिज्ञासवे शास्त्रदृष्ट्या तद्विमर्शनपरायणाय तद्विज्ञानोदयार्थं च सदसद्रूपात्मके वचसी तथा तदर्थरूपे विषयात्मके च सदसद्वस्तुनी स्पर्धयतः-परस्परं अहमहमिकया इव स्वस्वविजयार्थं सप्रयत्नं जिज्ञासूनां तत्त्वविमर्शनार्थं प्रयतमानानां तेषां अग्रे अन्तर्हृदये

धीन्द्रियपदे च स्व-स्वबलेन युध्यतः; सोऽयं प्रत्यक्षसिद्धः सर्वानुभवप्रतीति शुद्धः वास्तविको विषयः, तस्यां सदसद्वस्तुविषयप्रवर्तितायां स्पर्धायाँ अन्ततः सतः एव विजयो भविता । तथा असतः एव पराजयः इति निश्चितोऽर्थः सर्वानुभवसिद्धः—वेदोपनिषदादिवेदितश्च, तथा च अनुश्रूयते—"सत्यमेव जयते नानृतम्" (मु० उ० ३, १,६) इति वचनोपबृंहितं न्यायतत्त्वसिद्धं च औपनिषदं वैदिकं आर्षेयं वस्तुसत्त्वम्;

तत्र तावत्—सदसतोर्विमर्शने प्रधानकरणस्य मनसः अधिठाता सोमः स्वरसात्मकः तद्विमर्शकः, तथा पवित्रं संशोधकं सौम्यं रसात्मकं सात्त्विकं तत् मनश्च स्वयं प्रभवति" तयोः सदसतोर्मध्ये यत् खलु सत्यं नित्यसिद्धं यथार्थम्, यच्च ऋजीयः=ऋजुतमं कूट-कपटादिरहितं केवलेन वाक्छलादिना कण्टकेन विरहितं, अत एव यच्च तादृशं निष्कटकं ऋजुतमं वस्तुतत्त्वं भवेत् तदेव मनोऽधिपतिः सोमः संरक्षति, तथा "असत्"—असद्विषयकं आहन्ति च–स्वात्मीयेन हृदय्येन सत्त्वेन सर्वात्मना निवारयतीति यावत्"

तदेतदेव मन्त्रान्तरेषु अनुश्रूयते, तथैवाभ्यर्थ्यते च महर्षिभिः ऋङ्मन्त्रवर्णमुखेन"

"अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।।
युयोध्य१स्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ।। इति ।।

(ऋ० १, १८९, १)

"ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्" ।

(ऋ० १, ९०, १,)

इति च सदर्थप्रतिपत्तिः, असदर्थनिवृत्तिः, ऋजुमार्गेण नयनं च प्रतिपादितं स्पष्टतरं प्रतीयते ।।

एवमेव,

"श्रदस्मै धत्त स जनास इन्द्रः"

(ऋ० २, १२, ५)

"श्रद्धां हृदय्य१याऽऽकूत्या श्रद्धया विन्दते वसु"

(ऋ० १०, १५१, ४)

"श्रद्धे श्रद्धापयेह नः"

(ऋ० १, १५१, ५)

"श्रद्धया सत्यमाप्यते"

(शु० य० सं० १९,३०)

"अस्तीत्येवोपलब्धव्यः" (कठोप० ६, १३ ) इति—
"असतो मा सद् गमय" (बृ० उ० १,३,२८)

"असन्नेव स भवति असद् ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः ।।"

इति, (तै० उ० २।६)

इत्यादीनि वेदोपनिषद्वचनानि तदेव सत्त्वं समर्थयन्ति ।। असन्निवारणं च बहुधा उपदिश्यते,—

"चतुरश्चिद् ददमानाद् बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत्"

(ऋ० १, ४१, ९)

"मा वो घ्नन्तं मा शपन्तं प्रति वोचे०"

(ऋ० १, ४१, ८)

"मा गामनागामदितिं वधिष्ट" इति च ।

(ऋ० ८, १०१, १५)

एवं सदसदात्मकयोस्तयोः संनिदर्शनं प्रायः वेदोपदादिषु सत्यानृतशब्दाभ्यां कृतं दरीदृश्यते ।

"सत्यमिद् वा उ तं वयमिन्द्रं स्तवाम नानृतम्" इति ।।

(ऋ० ८, ६२, १२)

अयमभिप्रायः—तं तादृशं परोक्षसिद्धं सत्यमेव इन्द्रं सर्वविभूतिपूर्णं परमात्मानं संस्तुमः, न तु अनृतम् इति, तत्र सत्यमेव इन्द्रः, इन्द्र एव सत्यः, न हि अनृतं इत्युक्तं भवति; अत्रेदं रहस्यं तयोः सत्यानृतयोः सदसदात्मकयोः वस्तुसिद्धम्, वाचिकं सत्यं सत्यमेव, मानसिकं सत्यं तु ऋतमित्युच्यते, तेन च "न ऋतं अनृतं" इति व्युत्पत्त्या मनसा वञ्चितं तत् अनृतं भवतीति गम्यते, एवं प्रकारेण सर्वत्रापि बहुशः–सत्याद् विपरीतं तत् अनृतमेव इति प्रतिपादितमनुश्रूयते"

अत्र सत्यमेव दिव्यं देवतात्मकम्, यथार्थं वाक्सत्त्वकं च, अनृतं तु असदात्मकं मर्त्यमिति विवेकः वैदिकतत्त्वविशिष्टः । अत एव यज्ञादौ व्रतग्रहणे तदेव प्रतिज्ञायते—

तथा हि--

"अनृतात् सत्यमुपैमि । मानुषाद् दैव्यमुपैमि दैवीं वाचं यच्छामि" इति ।।

(तै० ब्रा० १।२।१।१५)

"अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात् सत्यमुपैमि" इति ।।

(शु० य० १, ५)

"द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च, सत्यमेव देवा अनृतं मनुष्याः इति च ब्राह्मणम्" (श० ब्रा० १, १, १, ४)

"सत्यसंहिता वै देवाः, अनृतसंहिता मनुष्याः, तस्माद् दीक्षितेन सत्यमेव वदितव्यम्" इति च, (ऐ० ब्रा० १, ६)

"सत्यं चानृतं च सत्यमभवत्" ( तै० उ० २, ६ ) इति च औपनिषदं वचनमपि तदेवोपोद्बलयति ।।

"सत्यं ब्रूयात् प्रियं ब्रूयात् ० । प्रियं च नानृतं ब्रूयात्" इति मनुः, (४।१३८)

"सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः"

इति ब्रह्मसूत्र-शारीरके भाष्ये वचनं किञ्चिद् विशिष्टार्थकम् ।

**अथ ते एते द्वितये "ऋत-सत्ये" स्वयमेव मिथुनीभूते मनो-वाक्सत्त्वे भावना-क्रियातत्त्वसिद्धे सोमारुद्रदैवत्ये च भवतः, तथा व्यत्यस्तसंस्थे "सत्य-ऋतस्वरूपे वाङ्मनः सत्त्वे च ज्ञान-भावनातत्त्वे ज्योतीरसात्मके अग्नीषोमात्मके च भवतः" तत्र विश्वस्यापि जगतः आदिसृष्टौ परमात्मनो ज्योतिर्मयस्य पुरुषस्य केवलाद् विमर्शरूपात् चेतनाशक्तिप्रदीप्तात् तपसः सकाशात् प्रथमतः आविर्भूतमिदं वस्तुद्वयं मिथुनीभूतं स्वतः सिद्धं "ऋतं सत्यं च" इति अनुश्रूयते, तथा च अघमर्षणार्षेयं ऋङ्मन्त्रदर्शनं अर्धर्चम्—**

"ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत" इति ॥

(ऋ० १०, १९०, १)

**तत्र ऋतं मानसिकं सत्यं, सत्यं तु वाचिकम् इति प्रपञ्चितं पुरस्तात्, एतेन ऋतसत्यात्मकयोः मनो–वाक्सत्त्वयोः समन्वयेन सर्वे यज्ञाः, योगास्तपांसि च सिद्ध्यन्तीति गम्यते, तयोः विश्वविसृष्टियज्ञस्यापिकारणीभूतत्वात्, परब्रह्मात्मनः तस्य पुरुषस्य तथा सर्वेषामपि आध्यात्मिकदिव्यकरणरूपत्वात्, प्रापञ्चिके पारमार्थिके च विषये सबाह्याभ्यन्तरेषु सर्वेष्वपि व्यवहारेषु तयोः वाङ्मनसयोरेव प्रधानसाधनत्वम् इति सर्वेषां अनुभवोदितं प्रत्यक्षसिद्धं वस्तु-तत्त्वम् ।** "ऋतꣳ सत्यं परं ब्रह्म" (तै० अ० १०, १२, १, ना० उ० १२, १) "सत्यं प्रपद्ये ऋतं प्रपद्ये" (तै० ब्रा० ३, ५, १, १) "ऋतं वदिष्यामि, सत्यं वदिष्यामि," (तै० उ० १, १) "ऋतं तपः सत्यं तपः" (तै० आ० १०, ८, १, ना० उ० ८, १) "ऋतं च स्वाध्यायप्रवचने च" "सत्यं च स्वाध्यायप्रवचने च" (तै० उ० १, ९) ।

"ऋतेन सत्यमृतसाप आयन्"

(ऋ० ७।५६, १२)

"सत्यं त्वर्तेन परिषिञ्चामि । ऋतं त्वा सत्येन परिषिञ्चामि इति"

(तै० ब्रा० २, १, ११, १)

**एवमादीनि वेदोपनिषद्वचनानि ऋत-सत्ययोः वस्तुतत्त्वमेव याथार्थ्येन बोधयन्ति, छन्दोदर्शनेऽपि तदिदं स्पष्टमेवानुश्रूयते ।**

"वाचं देवीमृतवतीमनु ब्रवीमि मनसा"

(छं० द० २, १, १)

"या त्वं देवी देवजुष्टा प्रेरिता मनसा स्वयम् ।
चक्षुर्भ्यां दृष्टमनुया तां त्वामृतवतीं विदुः ॥ इति ॥

(२, १, ११)

**अत्र सदसतोः सत्यानृतयोः संशोधनेन कश्चिद् योगः सिद्ध्यति, तत्र मन एव सूक्ष्मं साधनं प्रधानमान्तर्यं हृदय्यं सौम्यं करणमिति युक्तं प्रतीयते, तस्यैषा सदसद्विमर्शनप्रक्रिया आर्षेयी भवति, तथाहि—अस्मिन् समग्रे प्रपञ्चे सामान्यतः सर्वेषां प्राणिनां विशेषतो मानवानां अस्माकं बुध्यादीनि सर्वाण्यपि ज्ञानेन्द्रियाणि बाह्यानामान्तर्याणां च सर्वेषां वस्तूनां शब्दादीनां**

विषयाणां च ज्ञाने तत्सङ्ग्रहणे एव उपकरणानि भवन्ति, इति सर्वानुभवसिद्धमेव, अथ स्वविदितानां ज्ञानरूपेण संगृहीतानां तेषां सर्वेषां अर्थानां प्रकाशने अन्येभ्यो बोधाय वाच एव सामर्थ्यं तद्वैशिष्ट्यं चेति सर्वेषामप्यनुभवसिद्धमेवेति न पुनर्व्याख्येयम्,

तस्मात् सर्वेषा मपि विषयाणां विद्याविशेषाणां च आदाने प्रदाने च, अर्थात् ज्ञाने तदुपदेशे च वागेव सर्वथा शरणं प्रधानं करणमिति च सर्वथा संपद्यतेतराम्, एवमिह ज्ञान-भाव-क्रियादीनामभ्युदयाय वाचः शिक्षणार्थं तत्परिशीलनार्थं च वागेव शरणम्, तथा वाग् द्वारैव सर्वविद्यादिशिक्षणारम्भो भवति, विद्या-ज्ञान-तदुपार्जनतत्प्रकाशनादीनां सर्वेऽपि समारम्भा वाङ्मुखेनैव भवन्ति, ते च मनोयोगेनैव भवितुमर्हन्ति, अत्र तदर्थावबोधकोऽयं प्रसिद्धः बार्हस्पत्यार्षेयः ऋङ्मन्त्र एव प्रमाणम्,

"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ॥
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि ॥"

( ऋ० १०, ७१, २ )

तस्यायमर्थः—पूर्वाचार्यसमर्थितः सर्वविद्वत्सम्मतः सर्वशास्त्रोपबृंहितश्चेति प्रतिज्ञायते,"

अत्र "तितउ परिपवनं भवति" इति (नि० ४, १, ९) यास्कनिरुक्तवचनात् "चालनी तितउः पुमान्" इति अमरकोषवचनाच्च तितउ नामकं चालनी पदवाच्यं पिष्टादि परिशोधकं बाह्यं साधनं भवति, यथा यज्ञादिषु अपां घृतादीनां परिशोधने विहितं कुशादि पवित्रम्, सोम रसादीनां परिशोधकं "दशा पवित्रादिकं" च प्रसिद्धम्,

यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा ब्रह्म तेन पुनीहि नः ॥

( ऋ० ९, ६७, २३ )

इत्यादिमन्त्रवचनात् पदार्थादिपवित्रीकरणे समर्थं बाह्यमाभ्यन्तरं च यत् किञ्चित् साधनमिति गम्यते, तेन "तितउना"—बाह्येन चालिन्यादिना "सक्तुं"=पिष्टं यथा पुनन्ति-शोधयन्ति, तद्वत् सदसद्विवेकशालिना आन्तर्येण सूक्ष्मेण अन्तःकरणरूपेण "मनसा"—धीन्द्रियेण स्वकीया वाग् यथार्था वादिनी यथा भवेत् तथा स्वां वाचं शोधयन्तः असद्भिः पदैः दुष्टैः अर्थैः पदैः पदार्थैश्च विवेचयन्तः यत्र-यस्मिन् विषये धीराः—बुद्धिमन्तः पुरुषाः तां मनःप्रपूतां सत्यां यथार्थां वाचं अनुवदन्ति तत्र तस्मिन् विषये सखायः=समानभाषाभिज्ञाः सद्भावनादि-पूर्णाः प्राज्ञाः सख्यानि—तानि सखिप्रोक्तानि वचनानि तथा तदर्थ रूपाणि वस्तुविषयादि-जातानि च जानन्ति, तेषामेतेषां तस्यां वाचि भद्रा—मङ्गलप्रदा सत्त्वगुणसम्पन्ना बलीयसी च लक्ष्मीः—सर्वलक्षणपूर्णा प्रत्यक्षप्रमाणभूता सर्वार्थज्ञानप्रकाशादिसमर्था सर्वशक्ति-शान्ति-मयी श्रीर्देवता प्रतितिष्ठतीति, एतेन प्रत्यक्ष-परोक्ष-अपरोक्षादि सर्ववस्तुस्वरूपतत्त्वज्ञाने तथा तत्प्रकाशने च वागेव प्रत्यक्षं प्रमाणं प्रधानं साधनं सर्वथा शरणमिति च संपद्यते"

सा च वागपि मनसा परिशोधितैव सत्या भवति, तेनैव वाङ्मनसयोर्योगेन उदितमेव पूर्णतया सत्यतां प्रतिपद्यते, अत एव तयोरेनयोः अन्योऽन्य प्रतिष्ठानमपि संगच्छते, "वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्" इति," (ऐ० उ० शान्तिपाठ) तदनुश्रवणम् शान्ति-मन्त्रे प्रसिद्धतरम् अनेनैव योगेन सर्वो यज्ञोऽपि सिध्यति, सर्वेषां यज्ञानां सञ्चालिके चक्ररूपे एते मनो-वाग्रूपे उभे धी सत्त्वे भवतः, "एष ह वै यज्ञो योऽयं पवते० तस्य मनश्च वाक् च वर्तनी"

(छा० उ० ४, १६, १) "यज्ञस्य वै मनश्च वाक् च वर्तन्यौ" इति च (जै० उ० ३, १६. १) तदनुश्रवणम्,

अत्र यथा रथस्य उभे चक्रे, पुरुषस्य द्वौ पादौ, यथैव बाह्यस्य यज्ञस्य आन्तर्यस्य धीयोगस्य च वाक्-मनश्च उभे समाने चक्ररूपे वर्तनी भवतः, तस्मात् तयोर्मध्ये एकतरेण न्यूने सामर्थ्येन हीने च असमाने अशक्ते च सति रथः पुरुषः यज्ञः योगश्च पतति इत्युक्तं भवति, तदिदमग्नीषोमात्मकं तत्त्वं वाङ्मनः सत्त्वकं सत्यत्वसम्पादकं सर्वार्थसाधकं चेति वेद-शास्त्रादिनिर्णीतोऽर्थः, तत्र वागेव अग्निः, मनः सोमः, "मुखादिन्द्रश्चाग्निश्च" (ऋ० १०, ९०, १२) "मुखादग्निरजायत" (शु० य० सं० ३१, ११) "मुखाद् वाग् वाचोऽग्निः" (ऐ० उ० १, ४,) "अग्निर्वाग् भूत्वा मुखं प्राविशत्" (ऐ० उ० २, ४) इति च वाचः अग्निरूपत्वे मन्त्र-ब्राह्मणरूपाणि वचनानि, सेयं वागेव अन्तरात्मनः ब्रह्मणः चेतनात्मिका ज्ञानप्रधाना संवित्-स्वरूपा काचित् पराशक्तिः, "वागष्टमी ब्रह्मणा संविदाना"—तथा तदुपव्याख्यानम्—वाग्घि अष्टमी ब्रह्मणासंवित्ते "इति च तदनुश्रवणम्" (बृ० उ० २, २, ३) "तेजोमयी वाक्" (छां० उ० ५, ४) इति वाचः तेजोमयाग्निरूपत्वं, अर्थप्रकाशकत्वात्, ज्ञानकरणत्वं च प्राधान्येन इति सिद्धम्,

"चन्द्रमा मनसो जातः" इति (ऋ० १०, ९०, १२) "हृदयान्मनो मनसश्चन्द्रमाः," (ऐ० उ० १, ४) "चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" (ऐ० उ० २; ४) इति च मनसः रसात्मकसोमरूपत्वं प्रतिज्ञायते, तथा

"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्"

(ऋ० १०, १२९, ४)

इति मनसः इच्छासङ्कल्प-भावनादिकरणत्वं प्रतीयते, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" इति (बृ० उ० १, ५, ३) उप-निषत्सु प्रसिद्धं मनस्तत्त्वम्", "मनश्चिन् मनसस्पतिः" (ऋ० ९, ११, ८) सोमस्य मनोऽधि-पतित्वं, मनसः सोम सत्त्वं च अभिमन्यते, एवं "अग्नीषोमात्मकं जगत्" इति च तदनुस्मरणम्।

एतावता ऋत-सत्यात्मकयोः मनो-वाक्सत्त्वयोः, तथा ज्योतीरसात्मनोः वाङ्-मनः सत्त्वयोरग्नीषोमयोः विश्वमूलभूतं सत्त्वं स्वतः सिद्धमेवेति संगच्छते।

एवमेव सत्यत्वरूपे वस्तुतत्त्वे "चक्षुर्मनश्च" आन्तर्यं करणद्वयमपि साधनं भवति, तच्च "चक्षुश्च मनश्च मैत्रावरुणः" इति (ऐ० ब्रा०२।२६) द्विदैवत्यग्रहे यज्ञीये सन्निदर्शनेन सिद्ध्यति, तत्र नाम्नां शब्दात्मकेन सङ्गता वाक् रूपेण अर्थात्मकेन सम्बद्धं चक्षुः, यत् खलु चक्षुषा प्रत्यक्षं दृश्यते, पश्यति च वाचाऽपि तदेव यथादृष्टं अनूद्यते तदेव सत्यतामर्हति, तस्मात् चक्षुरेव सत्यमित्यभिधीयते, "चक्षुर्वै विचक्षणम्" विह्येनेन पश्यतीति "चक्षुर्वै सत्यम्" तस्माद् विचक्षणवतीमेव वाचं वदेत् "इति च तद्विद्विधानम्," (ऐ० ब्रा० १,६) तथा अन्यत्रापि श्रूयते—"चक्षुर्वै ब्रह्मेति, सत्यमित्येनदुपासीत" इति, (बृ० उ० ४, १, ४)।

अत्र मनश्चक्षुषोर्योगः उपदिष्टः सत्यत्वाभ्युदयार्थकः, तदेतदेव सद्विद्याशिक्षायाः तत्परिशीलनस्य च फलरूपेण तयोः चक्षुर्मनसयोः सत्त्वेनैव उभयविधं सामर्थ्यं ब्रह्म-क्षत्ररूपं, मैत्रावारुण्यं क्रतुदक्षात्मकं सम्पद्यते, तथा च एतदर्थावबोधकः ऋङ्मन्त्रवर्णः श्रूयते,

"इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम" इति ॥
(ऋ० ८, ४२, ३)

"भद्रं नो अपि वातय मनो दक्षमुत क्रतुम्" इति च ॥
(ऋ० १०, २५, १)

तस्यैतद् ब्राह्मणानुवचनं तदुपव्याख्यानरूपम् "क्रतुं दक्षं वरुण संशिशाधीति-वीर्यं प्रज्ञानं वरुण संशिशाधीत्येव तदाह" (ऐ. ब्रा. १, १३, २८) "सुतर्माणमधिनावं रुहेमेति–वाग् वै सुतर्मा नौः, यज्ञो वै सुतर्मा नौः, कृष्णाजिनं वै सुतर्मा नौः" इति"(ऐ. ब्रा. १, १३, २८) तस्याः वाचो देव्याः मैत्रावरुणसत्त्वमुपशिक्षितमनुश्रूयते,

"इळामकृण्वन् मनुषस्य शासनीम्" इति ॥
(ऋ० १, ३१, ११)

"इलाऽसिमैत्रावरुणी" इति च, (बृ. उ. ६, ४, २८)

**अत्र एतौ साङ्केतिकावेव क्रतुदक्षशब्दौ ज्ञानक्रियाशक्ति-तत्त्वार्थकौ मैत्रावरुण दैवत्यौ ब्रह्मक्षत्रतेजस्कौ च भवतः, तयोरिदं निर्वचनम्**—"क्रतू-दक्षौह वा अस्य मित्रावरुणौ,–"एतन्वध्यात्मं–स यदेव मनसा कामयते इदं मे स्यादिदं कुर्वीयेति स एव क्रतुः, अथ यदस्मै तत् समृध्यते स दक्षः, मित्र एव क्रतुर्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं वरुणः, अभिगन्तैव ब्रह्मकर्ता क्षत्रियः," इत्यादि,(श० प० ब्रा० ४, १, ४, १-६) **अत्र क्रतु-दक्षयोर्योगेनैव सर्वं ध्येयं सेत्स्यतीति धीयोगशिक्षायाः पूर्ण फलं स्वरूपं सत्त्वं च उपदिष्टं भवति, अस्मिन्नर्थे यजुर्मन्त्रान्तरमनुश्रूयते**—

संशितं मे ब्रह्म संशितं वीर्यं बलम् । संशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥
इति (तै० सं० ४, १, १०, ३)

**तदुपव्याख्यानमनुब्राह्मणमपिभवति"**
**"ब्रह्मणैवक्षत्रँ सँस्यति, क्षत्रेण ब्रह्म,**
**तस्माद् ब्राह्मणो राजन्यवान्-अत्यन्न ब्राह्मणम् ।**
**तस्माद् राजन्यो ब्राह्मणवान् अत्यन्नँ राजन्यम्" इत्यादि" (तै० सं० ५,१,१०, ३)**

**तस्यायमर्थः पूर्वाचार्यसमर्थितः–"सँशितं मे ब्रह्म०" मे-मम ब्रह्म-ज्ञानप्रधानं ब्राह्मं तेजः संशितं– ज्ञानप्रकाशनार्थं तीक्ष्णं संवृत्तम्, तथा तदनुगुणं वीर्यं बलं च सिद्धम्, अपि च यस्य राज्ञः अहं पुरोहितोऽस्मि तस्य जिष्णु जयशीलं क्षत्रं-क्रियाशक्तिप्रधानं क्षात्रं तेजः निशितम्, एतेन ब्रह्म-क्षत्रयोः सहयोगेन सर्वं सेत्स्यतीति सम्पद्यते, इति मन्त्रार्थः" ब्राह्मणार्थस्तु–ब्रह्मणैव ज्ञानरूपेण ब्रह्मतेजसैव क्षत्रं-क्रियारूपं क्षात्रं तेजः तत्कार्यं च संश्यति-तीक्ष्णं भवति, तस्माद् ब्राह्मणः–ज्ञानप्रधानो विप्रः राजन्यवान्–क्रियाप्रधानेन राज्ञा सह अन्यं सर्वं ब्राह्मणं अत्येति, पूजार्हो भवति, तथैव राजन्यः-क्षत्रियः-क्रियाप्रधानः ब्राह्मणवान् ज्ञानप्रधानेन ब्राह्मणेन युक्तः सन् सर्वान् क्षत्रियान् अत्येति ज्ञानप्रकाशनादिकार्येण विजयेन च सर्वेषां राज्ञां श्रेष्ठो भवतीति अर्थः सम्पद्यते,**

एतदर्थप्रतिपादकं तृचमनुश्रूयते—

"स इद् राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति वल्गूयति वन्दते पूर्वभाजम् ॥
स इत् क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते यस्मिन् ब्रह्मा राजनि पूर्व एति ॥
अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः" इति ॥

( ऋ० ४, ५०, ७–९ )

एवं तदिदमुभयविधं ब्राह्म-क्षात्रतेजोमयं ज्ञान-क्रियासत्त्वकं प्रत्यक्-पराग्वृत्तिकं आन्तर्य-बाह्यार्थरूपं, बाह्यान्तर्यविषयकं अधिभौतिकाध्यात्मतत्त्वोपहितं प्रपञ्च-परमार्थसत्त्वकं श्रेयो-निःश्रेयसात्मकं च भवितुमर्हति, तदिदं साङ्केतिकेन तत्त्वभावेन सम्पद्यते, तद् यथा शाम्भवीमुद्रात्मकं योगतत्त्वम् स बाह्याभ्यन्तरदृक्सत्त्वसिद्धम्, "अन्तर्लक्ष्यं बहिर्दृष्टिः मुद्रा-सा शाम्भवी स्मृता" इति, तदेतदेव सव्यसाचित्वरूपं तत्त्वम्, वाम-दक्षात्मकोभयशक्ति-साहित्ययोग साध्यम्, सुप्रसिद्धं चैतत् महाभारते नरवीरस्य अर्जुनस्य ऊर्ध्वाधररूपविरुद्धदिग्-द्वयप्रतिष्ठापितमनो-नेत्रयोगसाधितेन मत्स्यवेधेन, वामदक्षोभयहस्तक्रियाशक्तिसाधितेन महायुद्धेन वैरिविजयद्वारा धर्मराज्यप्रतिष्ठापनं प्रापञ्चिकं प्रत्यक्षसिद्धं गौरवम्, तथा (भक्ति योगादिसाधितेन) भगवदनुग्रहेण विश्वरूपदर्शनं पारमार्थिकं फलम्, एतेषां सर्वेषां मूलभूतं प्रधानं प्रथमं निदर्शनं तु ब्रह्मर्षेर्वसिष्ठस्य दिव्यं तात्त्विकं स्वरूपम्, येन भवान् "मैत्रावरुणिः" इति प्रसिद्धः, तथा तदनुगुणेन नाम्ना रूपेण ज्ञान-क्रियाशक्तितत्त्वेन दिव्येन योगसत्त्वेन च संपन्नोऽनुश्रूयते, तथा च वसिष्ठार्षेयः ऋङ्मन्त्रवर्णः—

"विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।
तत् ते जन्मोतैकं वसिष्ठाऽगस्त्यो यत् त्वा विश आजभार ॥

(ऋ० ७, ३३, १०)

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधि जातः" इति च ॥

(ऋ० ७, ३३, ११)

तत्र अगस्त्यस्यापि मैत्रावरुणित्वं समानम्, तद्वदेव विश्वामित्रस्यापि तदुभयेन ब्रह्म-क्षत्ररूपेण सत्त्वेन योगसिद्धेरभ्युदयः, जन्मना राजर्षित्वं, गायत्रीमन्त्रमुखेन तपसा धीयोगेन च संसिद्धं ब्रह्मर्षित्वं च पुराणेतिहासादिसु प्रसिद्धम्, तत्रेदं विश्वामित्रार्षेयं ऋङ्मन्त्रदर्शनम्—

"अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ॥
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥इति॥

(ऋ० ३, २६, ७)

"अग्निर्ब्रह्मा नृषदने विधर्ता"

(ऋ० ७, ७, ५इ)

"त्वं ब्रह्मा रयिविद् ब्रह्मणस्पते" इति च

(ऋ० २, १, ३,)

तदनुश्रवणम् "आग्नेय यो वै ब्राह्मणः" इति च ब्राह्मणम्, "तस्य जातवेदस्त्वं च ज्ञान-क्रियासत्त्वयोगसिद्धमेव भवितुमर्हति"

"जन्मन्जन्मन् निहितो जातवेदाः"

(ऋ० ३, १, २१)

"यज्जातवेदो भुवनस्य मूर्धन् नतिष्ठो अग्ने सह रोचनेन"

(ऋ० १०, ८८, ५)

"जातवेदसे सुनवाम सोमम्"

(ऋ० १, ९९, १)

इत्यादिषु तदनुश्रवणात्, "तत्रभवान्" भार्गवरामोऽपि ब्रह्म-क्षत्रोभयतेजोविभूतिसत्त्व-सम्पन्न एवेति सुप्रसिद्धमेव, तस्य ब्रह्म-क्षत्रोभयविधविद्याशिक्षणाचार्यत्वप्रसिद्धेः, तदानुगुण्येन योगसत्त्वेन दिव्यसामर्थ्येन च विश्वविजयेन तादृशानेकानेकप्रत्यक्षकृतिसत्त्वादिप्रसिद्धेश्च, तथैव-तच्छिष्यस्य भीष्मप्रपितामहस्यापि तत्समानम्, "इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि" इति तदनुस्मरणात्"। अत्र मित्रावरुणयोः किञ्चित् तात्त्विकस्वरूपमपि निर्वक्तुंयुक्ततरं मन्ये, "मित्रः" असौ ज्योतिर्मयः सर्वलोकप्रत्यक्षः सूर्यः सुप्रसिद्धः, सर्वप्रकाशकश्चेति संस्तुतो वेदेऽनुश्रूयते,

"मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्

मित्रः कृष्टीरनिमिषाऽभि चष्टे मित्राय हव्यं घृतवज्जुहोत" इति,

(ऋ० ३, ५९, १)

"मित्रो जनान् यातयति प्रजानन्० ।

सत्याय हव्यं घृतवद्विधेम" इति"

(तै० सं० ३, ४, ११, ५)

स च "ब्रुवाणः प्रजानन्" इति च पदद्वयेन विशिष्टेन निर्दिष्टः वाङ्मुखेन ज्ञानप्रकाशकः स्वयं ज्ञानस्वरूपः ब्रह्मतेजाः इति प्रतीयते, असौ च मित्रः उषसा प्रशान्तकिरणात्मिकया देव्या संहितः, यस्यां विश्वस्यापि जगतः सञ्जीवनीयं सत्त्वं ज्ञानरससत्वं च प्रतितिष्ठति,

"विश्वस्य हि प्राणनं जीवनं त्वे वि यदुच्छसि सूनरि"

(ऋ० १, ४८, १०)

"एकैवोषाः सर्वमिदं वि भाति"

(ऋ० १, ५८, २)

इति च तदनुश्रवणम्

"वरुणः" रसात्मा रसाधिपतिः, बलस्य च प्राणसत्त्वस्याधिष्ठाता क्षात्रतेजःसम्पन्नः वैद्युतेन तेजसा ऊर्जितः, सोऽसौ वरुणः रात्रिदेव्या विश्वावरणशक्त्या संवृतः सन् स्वयमपि विश्वं वृणोति, ते एते विश्वमातरौ जगत्संचालिके प्रभवतः,

"उषासानक्ता जगतामपीजुवा"

(ऋ० २, ३१, ५)

"नक्तोषासा समनसा विरूपे"

(ऋ० १, ११३, ३)

इति च तदनुश्रवणम्

एते शुक्ल-कृष्णरूपे अहोरात्रसत्त्वे कालात्मिके तदधिदैवतात्मिके च भवतः,

"अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः"

(ऋ० ६, ९, १,)

इति तदनुश्रवणम्,

अमू मातरौ देवतात्मानौ परस्परं विरूपे द्वे दिव्यसत्त्वे भवतः" तथा च कुत्सार्षेय ऋङ्मन्त्रदर्शनम् –

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।

हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ इति

(ऋ० १, ९५, १)

तस्यायमर्थः—अत्र जगतः अस्य विश्वस्यापि प्रपञ्चस्य स्वर्थे सुष्ठु प्रयोजनार्थं समीचीन फलप्रदानार्थं च द्वे उभे विरूपे विरुद्धरूपयुक्ते शुक्ल-कृष्णात्मिके देवतात्मिके शक्ती सदैव संचरतः, ते च "अन्योऽन्यं-वत्सं उपधापयेते" रात्रेः सकाशात् अभ्युदितं सूर्यं मित्रं उषाः धापयति-स्वीयं-रसं पाययति, तथा उषसः सकाशात् अहर्देवतायाः उदितं वरुणं रात्रिः—स्वेन रसेन आप्याययति, तत्र अन्यस्यां—एकस्यां रात्र्यां प्रतिष्ठितः हरिः हरणशीलः आवरणशक्तियुक्तः वरुणः स्वधावान्—रसवान् भवति, अन्यस्यां—उषसि वर्तमानः मित्रः सुवर्चाः—तेजस्वी ददृशे—दृश्यते प्रत्यक्ष सिद्ध इति यावत् ॥

तावेतावेव मित्रावरुणौ नामान्तरेण सूर्याचन्द्रमसौ भवतः ।

ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत ॥

(ऋ० १०, १९०,१)

अहोरात्राणि विदधद् विश्वस्य मिषतो वशी ॥

(ऋ० १०, १९०, २)

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ॥

(ऋ० १०, १९०, ३) इति ॥ तयोः स्वरूपतत्त्वानुश्रवणम् ॥

तावेतावेवाध्यात्मं—सर्वेषामन्तरात्मनि चक्षुर्मनः सत्त्वेन अभ्युदितौ ज्ञान-भावनातत्त्वेन अन्तर्हितौक्रियाशक्तिप्रधानां वाचमधितिष्ठतः, अत एव सा वागपि मैत्रावरुणी इति स्तूयते, "इलाऽसिमैत्रावरुणी" इति, (बृ० उ० ६, ४, २८) तौ च चक्षुर्मनसयोर्योगेन सत्यवचन सहकारिणौ भवतः, तथा तेनैव योगेन यज्ञः तपः परमो योगः सर्वोऽपि व्यवहारश्च सिध्यति, इति वैदिकं तत्त्वम् ॥

सोऽयं यज्ञो विदुषामपि समानः आन्तर्यः आध्यात्मिकसत्त्वसमृद्धः बाह्येन द्रव्ययज्ञादिना तुल्यः, स च आन्तर्यो यज्ञः आन्तर्येण धीयोगेनैव सिध्यति, तस्मात् सः "ज्ञानयज्ञः,ध्यानयज्ञः, विद्वद्यज्ञः, ब्रह्मयज्ञः" इत्यादिभिः संज्ञाभिः शास्त्रेषु विहितः उपवर्णितश्च दृश्यते, तत्र सर्वेऽपि यज्ञाः धीयोगेनैव साध्याः, तथा च मेधातिथेरार्षयः ऋङ्मन्त्रवर्णः,—

"यस्मा॑दृ॒ते न सिध्य॑ति य॒ज्ञो वि॑प॒श्चित॑श्च॒न ।
स धी॒नां योग॑मिन्वति" इति ॥

(ऋ० १, १८, ७)

अस्यायमर्थः—यस्माद् ब्रह्मणस्पतेः ऋते=विना विपश्चितामपि यज्ञः न सिध्यति, स तादृशः ब्रह्मणस्पतिः=वेदवागधिपतिः परमात्मा धीनां=मनोबुद्धिप्रभृतीनां नेत्रादीनां च सर्वेषां धीन्द्रियाणां योगं=संयमादिसम्पन्नं सङ्गममनुलक्ष्य स्वयमेव आविर्भवति प्रकाशते इति तदर्थः ॥

"न ऋ॒ते त्वत् क्रि॑यते॒ किं च॒नारे म॒हाम॒र्कं म॑घवञ्चि॒त्रम॑र्च ॥

(ऋ० १०, ११२, ९)

इति च प्रमाणान्तरं तदेव समर्थयति ॥

ब्रह्मोपदेशार्हे तदर्थमेव विहिते गायत्रीमन्त्रेऽपि अयमेवार्थो वरीवर्ति, "यः धियां प्रचोदयिता तस्य सवितुर्देवस्य तद्वरेण्यं भर्गः धीमहि, इति, अत्र ज्योतिर्ध्यानादियज्ञः तद्वस्तुतत्त्वज्ञानेन स्थिरधारणादिरूपः, अन्तरात्मनि प्रतिष्ठादिरूपश्च गायत्री द्वारैव सिध्यति धीयोगेनेति, ताश्चधियः मन्त्रयोगादिषु साधनेषु सर्वेष्वप्यन्तरवलम्बनार्हाः, ज्ञानेन्द्रियरूपाः, त्रिकरणात्मिकाः प्रधानाः, वाङ्मनःप्राणसंज्ञकाः, संविद्-इच्छा-कृतिशक्तिवृत्तिकाः, ज्ञानोपासनाकर्मयोगपराः, ज्ञान-भावना-क्रियासत्त्वप्रधानाः प्रतिवर्तन्ते ॥

ता एताश्च धियः चिदात्मनः बाह्यान्तर्यसर्वविषयसाधनीभूताः, चेतनात्मिकायाः परस्याः शक्तेः तिस्रः अङ्गभूता भवन्ति, तथा च पतङ्गार्षेयः ऋङ्मन्त्रवर्णः,—

प॒त॒ङ्गो वाच॒ं मन॑सा बिभर्ति॒ तां ग॑न्ध॒र्वो॑ऽवदद्ग॒र्भे अ॒न्तः ।
तां द्योत॑मानां स्व॒र्यं॑ मनी॒षामृ॒तस्य॑ प॒दे क॒वयो॒ नि पा॑न्ति ॥ इति ॥

(ऋ० १०, १७७, २)

अत्र गन्धर्वशब्दः प्राणबोधकः "गन्धर्वो नाम निहितं गुहासु" इति (ना० उ० २, ४) तदनुश्रवणम् ॥

"यत् किंचाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः" (बृ० उ० १, ५, १०) इति प्राणस्य गुह्यरूपत्वं उपदिष्टम्, स च प्राणः गायक इति प्रसिद्धः, "सा हैषा गयांस्तत्रे; प्राणा वै गयाः, तद् यद् गयांस्तत्रे तस्माद्गायत्रीनाम" इति, (बृ० उ० ५, १४, ४)

मन्त्रस्यायमर्थः—पतङ्गः चेतनः सर्वान्तरः आत्मा सूर्यो वा वाचं शब्दशक्तिरूपां स्ववाचकशक्तिमयीं मनसा आन्तरेण करणेन बिभर्ति—धारयति, तां च वाचं गुह्यरूपेण स्थितः प्राणः गन्धर्वरूपः गर्भेअन्तः अन्तर्हृदये अवदत् सदा अनुवदतीति भावः, तां द्योतमानां ज्योतिर्मयीं

ज्ञानादिप्रकाशनसमर्थां स्वयम् आकाशतन्मात्ररूपां मनीषां मनसः ईषयित्रीं चेतनात्मिकां वाचं ऋतस्य — सत्यस्य आत्मनः पदे हृदये कवयः ज्ञानिनः निपान्ति — नितरां रक्षन्ति इति, एतेन वाङ्मनःप्राणा एव आत्मनः सर्वव्यवहारसाधनीभूता इन्द्रियसंज्ञकाः त्रिकरणरूपाः इति सम्पद्यते, अस्मिन् एवार्थे मन्त्रान्तरमपि श्रूयते—

यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥ इति ॥
(ऋ० १०, ८८, ५)

तस्यायमर्थः—तं जातवेदसं अग्निं मतिभिः, गीर्भिः, उक्थैश्च हेम-हुवेम आह्वयामः, येन स यज्ञियः — यज्ञसाधनः भवेत् इति।

अत्र तु उक्थशब्दः प्राणबोधकः, "उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयति उद्धास्मादुक्थविद्वीरस्तिष्ठति" इति, (बृ० उ० ५, १३, १) तदनुश्रवणात् ॥

ता एताः त्रिकरणरूपाः तिस्रो धियः त्रयी विद्यास्वरूपाः, "ऋचं वाचं प्रपद्ये मनोयजुः प्रपद्ये सामप्राणं प्रपद्ये" इति, (शु० य० सं० ३६, १)

तदेतद्भूतत्रयात्मकं करणत्रयम्, देवतात्रयात्मकं च प्रसिद्धम्, "ता इमास्तिस्रो देवताः", "अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्" इति, (छां. उ. ६, ५, ४) औपनिषदं वचनम्, एवमेव आत्मनः भोग्यरूपं अन्नं अङ्गात्मकं च एतत् करणत्रयमिति श्रूयते, "यत् सप्तान्नानि तपसा मेधया जनयत् पिता०—इत्यत्र—"त्रीण्यात्मनेऽकुरुत" इति, "मनोवाचं प्राणं तान्यात्मनेऽकुरुत", "स वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः" (बृ. उ. १, ५, ३) इति च आत्मनः तत्करणत्रययोगेन तन्मयत्वं उपदिश्यते, ततश्च तेषामेव त्रयाणां करणानां अधिलोकं-अधिदैवतं-अधिविद्यं-अधिप्रजं अध्यात्मं इति बहूनां तत्त्वानां योगेन पृथक् पृथक् स्वरूपमपि निर्दिश्यते, "त्रयो लोका एत एव, वागेवायं लोकः, मनोऽन्तरिक्षलोकः, प्राणोऽसौ-लोकः, त्रयो वेदा एत एव, वागेव देवाः पितरोः प्राणो मनुष्या; पितामाताप्रजा एत एव, विज्ञातं विजिज्ञास्यंमविज्ञातं एत एव" (बृ० उ० १, ५, ४-८) इत्यादि विस्तरशः प्रपञ्चितम्।

अथ च अधिदैवतेन तत्त्वेन तेषां अग्नि-सूर्य-चन्द्ररूपत्वं समर्थितं दृश्यते, एकस्मिन्नेव लक्ष्ये पदे वस्तुनि आत्मनि वा त्रयाणां करणानां वाङ्मनःप्राणरूपाणां प्रतिष्ठापनमेव योग इति संभाव्यते, सोऽयं प्रथमो धीयोगः।

॥ अथ पञ्चधीन्द्रिययोगः ॥

एतैरेव त्रिभिः करणैः सह श्रोत्र-नेत्रयोः सहयोगेन ताः पञ्चधियः संपद्यन्ते, एतेषु पञ्चसु अन्तिमं श्रोत्रं नेत्रं चेति द्वयं नामरूपाभ्यां सम्बद्धं श्रवण-दर्शनविषयाभ्यां परिक्लृप्तं भवति,

"भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः"
(ऋ० १, ८९, ८) इति तदनुश्रवणम्।

"आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्म" (छा०उ० ८, १४, १) इति च औपनिषदंवचनम्, अस्य जगतो नामरूपाभ्यां व्याकृतस्य" (ब्र. सू. १, १, २) शारीरकभाष्ये

स्पष्टम्" तदेतद् दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति, (छां० उ० ३, १३, ७) इति च सर्वत्रापि नामरूपयोः श्रवणदर्शनयोः श्रोत्र-नेत्रयोः साहित्येनैव प्रायः प्रयोगदर्शनं दृश्यते ।

ता एताः पञ्चधियः धीन्द्रियात्मकाः करणरूपाः आन्तर्ये ज्ञानयोगे मन्त्रयोगे मुख्य-प्राणाद्युपासनायां तपसि बाह्ये द्रव्ययज्ञादौ च प्रधानसाधनीभूताः भवन्ति, ते च ऋगादिमन्त्रेषु ब्राह्मणेषु आरण्यकेषु उपनिषत्सु च तत्र तत्र शतशः स्थानेषु उपदिष्टाः श्रूयन्ते, अस्मिन् अर्थे स्पष्टार्थकः ऋङ्मन्त्रवर्णो भवति—

वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् ॥
वि मे मनश्चरति दूरआधीः किं स्विद् वक्ष्यामि किमु नू मनिष्ये ॥
(ऋ० ६, ९, ६)

अत्र ज्योतिः शब्दः प्राणबोधकः,—"हृदये आहितं यत्" इति तन्निदर्शनात्, तच्च मुख्य-प्राणात्मकं जीवात्मकं, अन्तरात्मस्वरूपं, चैतन्यज्योतिश्च भवितुमर्हति ।

अथ तासामेतासां सविषय-सवृत्तिकानां चैतन्यमूलसत्त्वानां सर्वासामपि धियां तथा सर्वेषामपि भूतानां विश्वेषां जगतां च अध्यक्षात् परमात्मनः सकाशात् संविद्-इच्छा-कृति-श्रुति-दृष्टिप्रभृतिभ्यः शक्तिरूपाभ्यः ताभ्य एव निजाभ्यः अपरिमिताभ्यः परमाभ्यः धीसत्त्वाभ्यः सोमसूर्यादीनि दैवतानि, तथा रसतेजोमयादीनि तच्छरीररूपाणि सद्भूतसत्त्वानि च आदिसृष्टौ प्रादुर्बभूवुरित्यनुश्रूयते, तथा च नारायणार्षेयः ऋङ्मन्त्रवर्णः प्रसिद्धः—

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥
"दिशः श्रोत्रात्" इति च,
(ऋ० १०, ९०, १३-१४) पुरुषसूक्तम् ॥

तथा तदर्थानुवादकानि उपनिषद्वचनानि च भवन्ति, (१) "मुखाद्वाग् वाचोऽग्निः, (२) नासिकाभ्यां प्राणः, प्राणाद्वायुः, (३) अक्षीभ्यां चक्षुः चक्षुष आदित्यः, (४) कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः, (५) हृदयान्मनो मनसश्चन्द्रमाः, इति (ए. उ. १, ४) ।

ततश्च पुनः तासां देवतात्मनां अग्नि-वायु-सूर्य-दिक्-चन्द्रमः—प्रभृतीनां ज्योतिरसा-दिशरीराणां वाक्-प्राणादिभिर्धीन्द्रियसत्वैः संपन्नानां तदिन्द्रियानुग्राहकाणां तत्प्रेरकाणां च सर्वेषामपि अन्तरात्मनि तत्तदङ्गेषु प्रतिप्रवेशोऽप्यनुश्रूयते

"अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" इति (ऐ. उ. २, ४)

एतेषामेव विश्वेषां धीन्द्रियाणां सदैवतानां योगेन सर्वेषां—अन्तरात्मनि किञ्चिदेकं दिव्यं संवित्सत्त्वं संपद्यते, तदेव सर्वासां धियां सारभूतं रससर्वस्य सत्त्वं भवति, तथा च ऋङ्मन्त्रवर्णः—

ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः ।
विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ॥ इति ॥
(ऋ० ६, ९, ५)

तस्यायमर्थः—सर्वेषां अस्माकं अन्तरात्मनि ध्रुवं नित्यसिद्धं अचलं अजरामरं च सत् 'कं' सुखात्मकं ब्रह्मसत्त्वात्मकं च ज्योतिः दृशये-दर्शनार्थं साक्षात्कारकृते च प्रतिष्ठितमस्ति, यत् तु प्रज्ञानरूपं ब्रह्मसत्त्वपूर्णं केवलं चैतन्यस्वरूपं च स्वयं भवति इत्यर्थः, अन्तः पतयत्सु-प्रवर्तमानेषु सर्वेषु धीन्द्रियेषु सूक्ष्मतरात् आन्तरतराच्च मनसोऽपि जविष्ठं—वेगवद्भूयिष्ठं तद्ज्योति इति, अस्मिन् इदं वैशिष्ट्यम् आत्मनि अन्तर्हितानां तेषां वागादीनां अधिष्ठातारः सर्वेऽपिदेवाः एकीभावेन सङ्गताः सन्तः समनसः—समानमनस्काः ते ज्ञान-भावना-क्रियादीनां समन्वयेन समानं एकं प्रधानभूतं क्रतुं—प्रज्ञानं साधु-सम्यक्तया अभिवियन्ति सर्वतः संपादयन्ति, सर्वधीन्द्रियद्वारा संपन्नं तद् विज्ञानं अनुभूतिरूपं सत्त्वं समानं एकरूपमेव भवतीति यावत्, तदेतेषां तत्तदिन्द्रियाणां तत्तद्विषयाणां च पृथक्त्वेन बहुधाभावेऽपि तत्संपादितं ज्ञानं तु एकरूपमेव भवितुमर्हतीति भावः ।

अत्रेदं हृदयम् सर्वेषां धीन्द्रियाणां मूलभूतस्य अध्यक्षस्य अन्तरात्मनः एकस्यैवकृते परिक्लृप्तैः तैः बहुभिरिन्द्रियैः समर्पितानि तत्तद्विषयकानि सर्वाण्यपि ज्ञानानि अन्तरात्मनि एकत्रैव एकीभवन्ति, तथा एकेनैवात्मना बहुविधधीन्द्रियद्वारा प्रतिसंगृहीतं तद्ज्ञानसर्वस्वमपि आत्मनि एकरूपात्मकं एकमेव भवतीति, सोऽयमेव धीनां समत्वरूपो योगः, "समत्वं योग उच्यते" (भ० गी० २, ४८) इति तदनुस्मरणात्, येन अयमन्तरात्मा स्वयं सम्प्रसादेन अभ्युदेति इति अनुश्रावितं पुरस्तादेव ऋङ्मन्त्रपादेन 'स धीनां योगमिन्वति" इति, (ऋ० १, १८, ७) एतासां धीनां स तादृशो योगः अन्वयेन तथा व्यतिरेकेण च भवितुमर्हति, तत्तल्लक्ष्येषु शब्दादिषु धीन्द्रियविषयेषु प्रवत्त्या तत्समन्वयः, तेभ्यो निवृत्त्याव्यतिरेकः इति विवेक, तत्रेदमस्मिन् अर्थे औपनिषदं अध्यात्मविद्यातत्त्वानुवचनम् ।

"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ॥
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ इति ॥
(केनोप०—१, १)

अत्र "केन-कः" इति पदं प्रश्नार्थकं, प्रजापतिबोधकं, ब्रह्मार्थकं च भवितुमर्हति, प्रश्ने तावत् किमिति पदं प्रसिद्धमेवलोकेऽपि, वेदे तु "कस्मै देवाय हविषा विधेम" (ऋ० मं० १०, १२१, १-९) इति, "कस्य नूनं कतमस्यामृतानाम्" (ऋ० मं० १, २४, १) इति च प्रजापतिबोधकः सः क इति शब्दः, को वै नाम प्रजापतिः, "स प्रजापतिमेव प्रथमं उपससार कस्यनूनं कतमस्यामृतानामिति" (ऐ० ब्रा० ७, १६, ३) क शब्दस्य प्रजापतिबोधकत्वेन निर्देशात् ॥ तथैव औपनिषदतत्त्वेन ब्रह्मवस्तुबोधकः कशब्दः, "कं ब्रह्म खं ब्रह्म, यद्वाकं तदेव खं, यदेव खं तदेव कं" इति (छां० उ० ४, १०, ४-५) श्रवणात्, "ओंखंब्रह्म" इति च, (शु० य० सं० ४०)

अत्र धी एव वस्तुलक्ष्यादि समन्वयेन तद्धीयोगः सिध्यतीति तदर्थः सम्पद्यते, तत्रापि पूर्वोक्तानां पञ्चानां धीन्द्रियाणां निर्देशोऽपि प्रत्यक्षत एव श्रूयते ।

अथ पुनः तत्रैव व्यतिरेकमुखेन तन्निवृत्तियोगोऽपि उपदिश्यते ।

"श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः ॥
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ इति ॥

(के० उ० १, २)

अत्र व्यतिरेकतः तेभ्य एव विषयेभ्यः धीन्द्रियाणां निवृत्या आत्मनि प्रतिष्ठया च कश्चिद्योगः पूर्वविपरीतः उपदिश्यते, तस्यैवेदं स्पष्टार्थतयोपवर्णनम् "न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमः यथैतदनुशिष्यात् ॥ अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ (केनो प० १, ३-४)

तस्यैवेदमनिर्वचनीयतया अनुपासनीयतया च सदनुवचनम् ॥

यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदंश्रुतम् ।
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ इति ॥

(कं० उ० १, ५-८)

एवं वाङ-मनश्चक्षुः-श्रोत्र-प्राणरूपाणां तेषामेतेषां पञ्चानां धीन्द्रियाणां प्रवृत्तिरूपः निवृत्तिरूपः निष्ठारूपश्चेति त्रिधाभावेन स धीयोगः उपदिष्टः आध्यात्मिकः पारमार्थिक-सत्त्वविशिष्टः सर्वेभ्यो योगेभ्यो विशिष्टतमः सम्पद्यते ॥

"भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति ।
तस्मा एतत् प्रोवाच अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ॥

(तैत्ति० उ० ३, १, १)

अत्र पुत्रेण भृगुणा ब्रह्मोपदेशार्थं प्रार्थितः सन् तत्पिता वरुणः तत् परं ब्रह्मवस्तुमुपदिशन् स्वपूर्वं तत्साधनीभूतं धीयोगेऽवलम्बनार्हं इन्द्रियपञ्चकं तदेतदेव अन्ववोचत्, अत्र "अन्नं" तु प्राणादीनां तेषां जीवनाधारभूतं भोग्यं वस्तुजात भवति नेन्द्रियम्, ॥

"स एषोऽहः संमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङमय आत्मा" इति (ऐ० आ० ३, २, १) एतदेव निर्दिष्टम् । चिदात्मनः तद्धीन्द्रियावलम्बनेन तन्मयत्वं प्रतिपाद्यते ॥

"श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः" इति वत् ॥ (भ० गी० १७, ३)

"या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या च मनसि संतता शिवां तां कुरु मोत्क्रमीः ॥ इति ॥

(प्रश्नो० २, १२)

"प्राणस्येदं वशे सर्वम् "इति च वागादीनां तेषां पञ्चानामिन्द्रियाणां निर्देशेन तेषु प्राणस्यैव प्राधान्यं उपदिशन्ति ॥

"एवं वाङमनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति"

इति (प्र० २, ४)

**एवमेतासामेव धियां श्रेष्ठत्वेन ब्रह्मगिरिरूपत्वम्, ब्रह्मात्मनः ज्ञाने तदुपासनायां भक्तिभावनायां तत्साक्षात्कारेऽपि आश्रयीभूतत्वात्, श्रेयो-निःश्रेयसादिसम्पत्साधनत्वात् च शीर्षण्यश्रीरूपत्वं च निर्दिष्टमनुश्रूयते,** "तदेतद्ब्रह्मगिरिरित्याचक्षते" **(ऐ० आ० २, १, ८),**

"ता एताः शीर्षञ्छ्रियः श्रिताः" **इति च (ऐ० आ० २, १, ४)**

**एतेषां पञ्चानां धीन्द्रियाणां प्राणसंज्ञाऽपि प्रसिद्धा (सा च मुख्यप्राणसत्त्वेन) प्राण-प्राधान्यात् प्राणैकवृत्ति-प्रकृति-प्रवृत्तिप्रभृतिचिह्नयोगाच्चेति प्रतीयते,** "न वै वाचो न चक्षूंषि न **श्रोत्राणि न मनाँसि इत्याचक्षते प्राणा इत्येवाऽऽचक्षते, प्राणो ह्येवैतानि भवन्ति "इति तदनुश्रवणम्" (छां० उ० ५, १, १५)**

"यत्ते कश्चिदब्रवीत्···"**(बृ० उ० ४, १, १-६) इत्यत्र वागादीनां पञ्चानां धीन्द्रियाणां ब्रह्मत्वं प्रतिपादितम्** "वागेव प्रज्ञा, प्राण एव प्रियः, चक्षुः सत्यम्, श्रोत्रं अनन्तं, मनः आनन्दः," **इति च तेषां प्रज्ञादिगुणत्वेन उपास्यत्वमपि उपदिष्टम्, ततश्च तेषां पञ्चानां प्रतिष्ठार्हं हृदयं निर्दिश्य तस्य स्थितिरूपत्वं उपवर्णितम् "एतेन तत्र पञ्चधीयोगः तत्प्रक्रिया च गम्यते"।**

"मनो ब्रह्मेत्युपासीत, इत्यध्यात्मम्" **(छां० उ० ४, १८, १) इत्यत्र मनसः ब्रह्म-रूपत्वेन उपासनीयतां प्रतिज्ञाय तस्य ब्रह्मणः** "वाक्, प्राणाः, चक्षुः, श्रोत्रं च" **चत्वारः पादाः दर्शिताः, तेषाम् अधिदैवतं च उपदिष्टम्** "अग्निः, वायुः, आदित्यः, दिशश्च" **इति, मनसस्तु सोम एव सर्वत्रापि समानः तदेतत्** "चन्द्रमा मनसो जातः" **इत्यस्यैव विवर्णनम्।**

**अन्तर्यामिणं ब्रह्म (बृ० उ० ३, ७, १)**

**अथाध्यात्मम्** "यः प्राणे तिष्ठन् प्राणादन्तरोः यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः। **(बृ० उ० ३, ७, १६-२०) इति प्राणादीनां पञ्चानां इन्द्रियाणां अन्तर्यामिरूपेण आत्मनो निर्देशात् तत्रापि पञ्चधीयोगः व्यतिरेकमुखेन उपदिष्टः इति गम्यते।**

**अथ कर्मकाण्डीये यज्ञकल्पेऽपि श्रोत्रियाणां सोमादिषु विकृतिषु यज्ञेषु होत्रा शंसनीयस्य शस्त्रस्य** "प्र वो देवायाग्नये" **(ऋ० ३, १३, १) इति सूक्ते पठितानां मन्त्राणां विनियोगः श्रूयते, तस्मिन् द्रव्यमये श्रौते बाह्येऽपि यज्ञे आन्तर्यस्य धीयोगस्याय सम्पत्तिरुपदिश्यते, तत्र एतेषामेव प्राणादीनां योगः, तथा तदर्थमेव तेषां मन्त्राणां विनियोगः कल्पितो ब्राह्मणमुखेन, तथा च ब्राह्मणम्**

"प्र वो देवायाग्नय इति शंसति प्राणो वै प्र। **(ऐ० ब्रा० २, ४०)**

**(प्रवोदेवयाग्नये, ऋ० ३, १३, १)**

"ऋतावा यस्य रोदसी इति शंसति चक्षुर्वै ऋतं ( „ „ २)

"स यन्ता विप्र एषामिति शंसति अपानो वै यन्ता अपानेन ह्ययं यतः प्राणो न पराङ्भवति,

"स नः शर्माणि वीतय इति शंसति वाग् वै शर्म"

"दीदिवांसमपूर्व्यमिति शंसति मनो वै दीदाय मनसो हि न किञ्चित् पूर्व्वमस्ति" (५)

"उत नो ब्रह्मन्नविष इति शंसति श्रोत्रं वै ब्रह्मश्रोत्रेण हि ब्रह्म शृणोति"।

**(ऋ० ३, १३, ३-६)**

एवमेव विद्वद्यज्ञेऽपि आन्तर्ये आध्यात्मकेऽपि स समानो धीयोगः, तत्र वागादीनां तेषां पञ्चानामिन्द्रियाणां होत्रादिरूपक्लृप्ता ऋत्विगात्मिका अनुश्रूयते, ऋत्विग्भिरेव तद्यज्ञसिद्धि-योगात, तथा च बार्हस्पत्यार्षेयः ऋङ्मन्त्रवर्णः—

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ॥
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥ इति ॥
(ऋ० १०, ७१, ११)

तत्र द्रव्ययज्ञे ऋग्-यजुः-साममुखेनैव यज्ञनिर्वर्तकानां ऋत्विजां सहयोगेनैव यज्ञसिद्धि-र्गम्यते, ऋत्विजां च तेषां होत्रादीनां वागादि धीन्द्रियात्मकता, तद्यज्ञीयदेवताधिष्ठान-कल्पकता च शास्त्रीयतत्त्वोपबृंहिता भवति तथा च अध्यात्मयज्ञतत्त्वबोधकं औपनिषदं ब्राह्मणवचनं सुप्रसिद्धमेव, विद्वद्यज्ञस्वरूपतत्त्वावबोधकं धीयोगसाधकम्, "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी० इत्यादि—

"वाग्घोता प्राण उद्गाता चक्षुरध्वर्युः मनोब्रह्मा श्रोत्रमग्नीद् यावद्ध्रियते सा दीक्षा" इत्यादि, (महा ना० उ० २५-१) अस्मिन् आध्यात्मिके विद्वद्यज्ञे यजमानः, पत्नी, ऋक् प्रभृतयः सर्वेऽपि आन्तर्या आध्यात्मिका एव भवन्ति, दिव्यसत्त्वविशिष्टैः अग्न्यादिदेवता-विशेषैः अधिष्ठिताः तत्प्रेरिताश्च सर्वं यज्ञं प्रति निर्वहन्ति, तं च साङ्गं समग्रं निर्वर्तयन्ति इति वैदिकं तत्त्वम्, तत्रापि "इध्म, वेदिः, बर्हिः, वेदः, यूपः हविः, पशुः, अग्निः, शामित्र प्रभृतयोऽपि आन्तर्या एव यज्ञं सन्निर्वर्तयितुमर्हन्ति, तस्यास्य विद्वद्यज्ञस्य यष्टा यजमानः स्वयं अन्तरात्मैव यज्ञपत्नी च स्वयं आत्मनिष्ठा श्रद्धैव भवितुमर्हति, या यज्ञं यज्ञपुरुषं श्रद्धत्ते, तस्मिन् श्रद्धाप-यति च श्रद्धां उत्पादयति प्रेरयतीति यावत् ।

श्रद्धां देवा यजमाना वायुगोपा उपासते ॥
(ऋ० १०, १५१, ४)

श्रद्धे श्रद्धापयेह नः ॥
(ऋ० १०, १५१, ५) इति च तदनु श्रवणम् ॥

श्रद्धां देवा यजमानाः ॥
(तै० ब्रा० २, ८, ८, ७)

श्रद्धया सत्यमाप्यते ॥
(शु० य०, १९, ३०)

श्रद्धया विन्दते वसु ॥
(ऋ० १०, १५१, ४) इति च तद्विशेषः ।

तद्यज्ञसम्पत्तये तत्कृतिसंसाधकाः कर्मनिर्वाहकाः ऋत्विजस्तु पञ्चप्रधानाः धीन्द्रिया-त्मकाः, "वाग्-होता, प्राणः—उद्गाता, चक्षुः-अध्वर्युः, मनः-ब्रह्मा, श्रोत्रं—अग्नीत्" इति प्रसिद्धाः, तत्र ऋङ्मन्त्रमुखेन यज्ञीयदेवताह्वानार्थं, तथा वषट्कारेण च ताभ्यो देवताभ्यः हविः प्रदानार्थं प्रतिष्ठापितो होता वागात्मकः, ऋचां वाग्रूपप्राधान्यात्, अग्नितत्त्ववैशिष्ट्याच्च, "ऋचं वाचं प्रपद्ये" इति यजुः (३६, १)

"ऋग्वेद एवाग्नेरजायत" "ऋचैव हौत्रं कुर्यात्" (ऐ० ब्रा० ५, ३३) इति च तद्ब्राह्मणानुवचनम् ।

याजुषैर्मन्त्रैः यः सर्वाण्यपि यज्ञकर्माणि निर्वर्तयति सः अध्वर्युः, स चात्र चक्षुःस्वरूपः आदित्येन अधिष्ठितः "यजुषाऽध्वर्यवम्" इति च तद्ब्राह्मणम् (ऐ० ब्रा० ५, ३३) ।

सामवेदमन्त्रैः यः यज्ञीयदेवताः संस्तौति गानमुखेन स उद्गाता, स चात्र प्राणरूपः, गानसामर्थ्यात् प्राणस्य सामस्वराणाम्, "साम प्राणं प्रपद्ये" (यजुः ३६।१) "साम्नोद्गीथम् (ऐ० ब्रा० ७, ३३) इति च तदनुश्रवणम् ।

वेदत्रयाभिज्ञः यज्ञस्य द्रष्टा ब्रह्मा, स चात्र मनो रूपः "व्यारब्धा त्रयी विद्या भवति अथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूयात्" इति च तद्ब्राह्मणम्,(ऐ० ब्रा० ५, ३३) अग्नीध्रः श्रोत्रस्थानीयः, यः अध्वर्युणा साकं यज्ञे प्रचरति, "यावद् ध्रियते सा दीक्षा" एतासां धियां योगेन यावत् पर्यन्तं तदेकलक्ष्येण यत्र धार्यते अन्तरात्मनि सा संधारणैव दीक्षारूपा, अथवा अयमन्तरात्माधीयोगेन यावत् आत्मनिष्ठया प्रतितिष्ठति सा दीक्षा, एतेन धीयोगेन स्वयमन्तरात्मा प्रसीदति, तथा यज्ञं पुरुषं तं प्रसीदयति, सोऽयमेव विद्वद्यज्ञः विपश्चितो यज्ञः, तमेनमेव आन्तर्यं धीयोगसिद्धं यज्ञमनुसृत्य स ब्रह्मणस्पतिः प्रसीदति प्रकाशते इति यदनुश्रावितं मन्त्रमुखेन तत् सर्वं संगच्छते ।

तदेतदार्त्विज्यं वागादीनां आन्तर्ये यज्ञे तत्तु उपनिषत्सु बहुधा विस्तरशः तत्त्वविशिष्टेन आध्यात्मिकेन भावेन च प्रपञ्चितं अनुश्रूयते, तथाहि—"होता आश्वलः । याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्युनाऽऽप्तं सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति, होत्रर्त्विजाऽग्निना वाचा, वाग्वै यज्ञस्य होता, तद्येयं वाक् सोऽयमग्निः, स होता स मुक्तिः साऽतिमुक्तिः" इति वाचः होतृत्वं अग्निस्वरूपत्वं च उपदिष्टम् ।

"चक्षुर्वै यज्ञस्याध्वर्युः, तद् यदिदं चक्षुः सोऽसावादित्यः, प्राणो वै यज्ञस्योद्गाता, तद् योऽयं प्राणः स वायुः, स उद्गाता, मनो वै यज्ञस्य ब्रह्मा, तद् यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा, इति, (बृ० उ० ३, १, ३-६)

अत्र एतेषां वागादीनां अधिष्ठातारः अग्न्यादय एव बहिः ब्रह्माण्डे विश्वसृष्टियज्ञस्यापि ऋत्विजो भवन्ति ।

एवमेव परमात्मनः परमपुरुषस्यापि सर्वहुतो यज्ञस्य सर्वमेधसनामकस्य एते एव देवा अग्न्यादयः वागादिधीन्द्रियाधिष्ठातारः तत्तद्धीन्द्रियसत्त्वप्रकृतिकाः ऋत्विजः दिव्याः तद्दिव्ययज्ञानुरूपाः सन्तः तत्सर्वहुद्यज्ञमुखेन विश्वाविर्भाव हेतुभूताः संपद्यन्ते इति विशेषः । अत एव तासां एतासां धियां पञ्चानां परोवरीयस्त्वं प्रतिज्ञातं सर्वेभ्यः परत्वात् श्रेष्ठतमत्वाच्चेति गम्यते, "प्राणेषु पञ्चविधं परोवरीयः सामोपासीत, प्राणो हिङ्कारः, वाक् प्रस्तावः, चक्षुरुद्गीथः श्रोत्रं प्रतिहारः, मनो निधनम्, परोवरीयांसि वा एतानि" इति,(छां० उ० २,७,१)

एतेषाम् एकत्र अन्तरात्मनि प्रतिष्ठापनं, तत्संयमनेन परमात्मनि विलीनीकरणमेव पूर्णं तपोयोगयज्ञादिसर्वसत्त्वसम्पादने प्रभवति, तस्मात् तत् तद् एकैकं इन्द्रियं तथा तत् तद्विषयकं कर्म अपूर्णं तेषां एकैव विषयनियतत्वानुबन्धनक्लृप्तेः इति वैदिकं तत्त्वम्, उपनिषत् समर्थितं संगच्छते, "प्राणन्नेव प्राणो नाम भवति, वदन् वाक्, पश्यन् चक्षुः, शृण्वञ्छ्रोत्रं,

मन्वानो मनः, तान्यस्यैतानि कर्मनामान्येव, स योऽत एकैकमुपास्ते न स वेद, अकृत्स्नो ह्येषः, अतः एकैकेन भवति, आत्मेत्येवोपासीत, अत्र ह्येते सर्व एकं भवन्ति, तदेतत् पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत् सर्वं वेद" इति, (बृ० उ० १, ४, ७)।

एवमेव अन्यत्रापि सोऽयं पञ्चधीयोगः बहुधा उपदिष्टः श्रूयते, तथा हि,—"द्वया ह प्राजापत्या देवाश्चासुराश्च, त एषु लोकेष्वस्पर्धन्त। ते ह देवा ऊचुर्हन्तासुरान् यज्ञे उद्गीथेनात्ययामेति, ते ह वाचमूचुस्त्वं न उद्गायेति०" इत्यादि (बृ० उ० १, ३, १-७)–पञ्चानां इन्द्रियाणां असुरैः पराजयेन अन्ते मुख्यप्राणस्यैव विजयं समर्थयन्ति।

"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद···कुर्वन्तो मन्यन्ते" (बृ० उ० ६, १,१-१४)इति···

वाक्-चक्षुःश्रोत्र-मनः··· इति चतुर्णां प्राणप्राधान्येन प्राणाश्रयत्वं दर्शितम् तथा-वसिष्ठ-प्रतिष्ठा-सम्पत् आयतनादिगुणेन उपासनीयत्वं उपदिश्यते।

यो ह वै ज्येष्ठश्चश्रेष्ठश्च वेद···सर्वाणि भवति" इत्यादि, सर्वं समानम्
(छां० उ० ५, १ १५)

"संवर्गविद्यायामपि तत्समानम्" (छां० उ० ४, ३, १-२)

"देवासुरा ह वै यत्र संयेतिरे···उपासते" इति (छां० उ० १, २, १-१४)

तदेतत् यजुर्मन्त्रवर्णे वेदत्रययोगेन पञ्चानां धियां योगः उपदिष्टः श्रूयते "ऋचं वाचं प्र पद्ये मनो यजुः प्र पद्ये साम प्राणं प्र पद्ये चक्षुः श्रोत्रं प्र पद्ये" इति० (शु० य०, ३६, १)।

## ॥ अथ सप्तधीन्द्रिययोगः ॥

अथास्मिन् बहिर्ब्रह्माण्डे आकाशादीनां महाभूतानां पंचानां गुणरूपाः शब्दादयः पंचविषयाः प्रसिद्धाः, तत्सम्बद्धानि तद्ग्राहकानि च "श्रोत्र-त्वक्-चक्षु-जिह्वा-घ्राणसंज्ञकानि पंच ज्ञानेन्द्रियाणि बाह्यानि, तथा मनो बुद्धिश्चेति अन्तःकरणद्वयं, इति सप्तधीन्द्रियाणि अन्तरात्मनः बाह्यान्तरीय सर्वव्यवहारसाधनानि, एतेषां सप्तानां प्राणसंज्ञापि प्रसिद्धा,··

प्राणः प्राधान्यात् प्राणस्वरूपत्वाच्च। "सप्त हि शीर्षण्याः प्राणाः"(जैमि० उ० २,५,८)

"सप्त प्राणाः प्रभवन्ति तस्मात्" (मु० उ० २,१,८) इतिश्रुत्यन्तरे प्राणानां सप्तसंख्या परिक्लृप्तिः, "सप्त गतेर्विशेषितत्वाच्च" (ब्र० सू० २, ४, ५) इति च सूत्रम्।

एतेषां मध्ये श्रोत्रादिकमेकैकं इन्द्रियं शब्दश्रवणादिके एकैकस्मिन् एव विषये नियतम्, मनो बुद्धिश्चेति द्वयं तु सर्वेष्वप्यनुस्यूतम्, शब्दादिके अस्मिन् एकस्मिन्नेव विषये लक्ष्ये तद्धीन्द्रियस्य योजनेन स्थिरधारणया च तथा तस्मिन्नेव इतरेषामपि धीन्द्रियाणां सहयोगेन आन्तर्यः कश्चिदलौकिको योगः सिध्यति, तेन च अन्तरात्मनि कश्चिद् दृढतराशक्तिः, आत्मशान्तिश्च आविर्भवति, तदिदमौपनिषदं तत्त्वम्

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ" इति॥

(कठोप० ६, १०-११)

## ।। अथ अष्टधीयोगः ।।

ते एते एव सर्वेषां शरीरे अन्तःस्थिता सप्तऋषयो भवन्ति, तथा एतेभ्यः सप्तभ्योऽ-आन्तरतमाचेतनात्मा परावागेव अष्टमीति श्रूयते, तथा च औपनिषदः श्लोकः—

"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् ।
तस्याऽऽसत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना" इति,

(बृ० उ० २, २, ३)

"प्राणा वा ऋषयः प्राणानेवैतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घि, अष्टमी ब्रह्मणा संवित्ते", इति च तद्ब्राह्मणानुवचनम् ।। अत एव तस्या अष्टम्या वाचः सप्त प्राणेभ्यः अतिरिक्तत्वं परात्वं च प्रतीचीनत्वं च प्रतीयते,

"अष्टमीं नानुषजति, नेन्मेवाक्प्राणैः समानायतनासत्यनुषक्ताऽसदिति"

(ऐ० आ० १, ५, २) तदनुश्रवणम् ।

एतेन सा वाक् परा आन्तरतमा सती प्राणैः सह एकत्रै वस्थाने अन्तर्हृदये संस्थिताऽपि एतेभ्यः प्राणेभ्यः पृथगेव प्रतितिष्ठति—चेतनाशक्तिरूपेण चिदात्मना तादात्म्ययोगादिति सम्पद्यते, अत एव तस्याः संयमः उपदिश्यते प्रत्यक् परावर्तनेन ।

"प्रतीचीं जग्रभा वाचमश्वं रशनया यथा" इति ।

(ऋ० १०, १८, १४)

पतङ्गो वाचं मनसा बिभर्ति० । तां द्योतमानां
स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ।। इति ।

(ऋ० १०, १७७, २)

"वाक् पतङ्गाय धीयते" इति च,

(ऋ० १०, १८९, ३)

"सप्त द्वारावकीर्णां च न वाचमनृतां वदेत् "इति च मनुस्मृतिः ।

एतेन सप्तस्वपि प्राणेषु धीन्द्रियेषु वाग्वृत्तिरनुस्यूता, तथा वचनव्यापारे सप्तसु प्राणेषु वाक्प्रवृत्तिः स्वभावसिद्धेति च प्रतीयते ।

### सप्त मर्यादाः ।।

एवमेतेषां सप्तानां धीन्द्रियाणां नियमनार्थाः आत्मसंयमयोगसिद्धयेऽपि साधनीभूताः "सप्तमर्यादाः" सद्विद्यात्मिकाः नियमस्वरूपाः ऋङ्मन्त्रोपदिष्टा अनुश्रूयन्ते, तथा च त्रितस्याप्त्यस्य आर्षं मन्त्रदर्शनम्—

"सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्" इति ।।

(ऋ० १०, ५, ६)

तथैव वाचः एकस्या एव संयमेन सर्वेषां प्राणानां धीन्द्रियाणां संयमनमपि उपदिशन्ति ऋषयः, सा परावागेव तेषां प्रेरणे समर्था च भवतीति, तथा च माधुश्छन्दसे दर्शने तृचं सुप्रसिद्धमेव ।।

"पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती
महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति" इति ।

(ऋ० १, ३, १०-१२)

अत्र वागेव सर्वेषां यज्ञानां निर्वर्तयित्रीति गम्यते, "यज्ञं वष्टु धियावसुः, "वाग्वैधिया वसुः यज्ञं वहत्वित्येव तदाह" (ऐ० आ० १, १, ४, १६) इति च ब्राह्मणम्, "यज्ञं दधे सरस्वती" इत्यपि तमेवार्थं समर्थयति, तथा सत्यात्मिकानां सर्वासां वाचां धियां च आत्मनि अन्तः प्रेरयित्री वागेवेति च सम्पद्यते, अथ "महो अर्णः सरस्वती" अत्र--"महो अर्णः परंब्रह्म०, विराजयति सा देवी,० इति च माधवऋग्भाष्यवचनात् वाचः परब्रह्मात्मता प्रतीयते, तथा सर्वधीप्रेरकत्वं धीस्वरूपत्वं च गम्यते । वाचः सर्वाभ्यो धीभ्यः परत्वात् आन्तरतमत्वाच्चेत्यपि सम्पद्यते, एवमेव

"धियो यो नः प्रचोदयात्"

(ऋ० मं० ३, ६२, १०)

यः अस्माकं धियः अन्तः प्रचोदयति तस्य सवितुर्देवस्य स्वयंप्रकाशकस्य ब्रह्मात्मनः सर्वधीप्रेरकत्वात् तस्यैव सा परमा वाक्छक्तिः आग्नेयी ज्योतिर्मयी गायत्री इति पर्यवस्यति । अत्र गायत्र्या वाचः मुखेन धिया तत् प्रचोदनं च ब्रह्मत्वयोगेन ब्रह्मात्मवस्तुसाक्षात्काराय सर्वध्येयसिद्धये च प्रभवति ।। अतः सा वागेव ब्रह्मचोदनी इति संस्तूयते ।।

॥ ब्रह्म चोदनी वाक् ॥

"यां पूषन् ब्रह्मचोदनीमारां बिभर्ष्याघृणे तया
समस्य हृदयमा रिख किकिरा कृणु" ।। इति ।।

(ऋ० ६, ५३, ८)

तस्यायमर्थः--हे पूषन् विश्वपोषक आघृणे--ज्योतिरात्मन् सूर्य यां "ब्रह्मचोदनीं" ब्रह्मणः प्रेरयित्रीं आरां शस्त्ररूपां चैतन्यज्योतिरग्रां तीक्ष्णां शक्तिं बिभर्षि--धारयसि स्वेन सत्त्वेन तया अस्य मम हृदयं तथा सर्वस्यापि हृदयं आरिख--कर्षणेन सँल्लिख, तथा किकिः--तत् स्वप्रेरितं हृदयं आकृणु--संविदा संशितं तेजस्विगुणं सुतीक्ष्णं कुरु इति भावः, सेयं ब्रह्मचोदनी शक्तिः परा वागेव भवितुमर्हति ।

अस्मिन् मन्त्रे "ब्रह्मचोदनी" इति शब्दे ब्रह्म इति पूर्वपदं पारमैश्वर्यादिपरिपूर्णं वैदिकं इन्द्रात्मकं परम पुरुषस्वरूपं परं ब्रह्मैव बोधयति, "इन्द्रो ब्रह्मेन्द्र ऋषिः" (ऋ० ८, १६, ७) "इन्द्रो मायाभिः पुरुरूप ईयते" (ऋ० ४, ४७, १८) इति च इन्द्रस्य ब्रह्मात्मताऽनुश्रूयते, तथा च तदेतत् तत्त्वं उपनिषत्सु स्पष्टतरं प्रतिपाद्यते ।

"अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः इत्यनुशासनम्" (बृ० उ० २, ५, १९) इति तन्मन्त्रस्यैव औपनिषदं ब्राह्मणानुवचनम् ।।

"स एतमेव पुरुषं ब्रह्म ततममपश्यत् इदमदर्शमिती३। तस्मादिन्द्रो नाम इदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण इति (ऐ० उ० १, ३, १३-१४)॥

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण", इति च (बृ० उ० ४, २, २) स्पष्टोऽर्थः, तथैव "सत्यं ज्ञानमनन्तं ब्रह्म, (तै० उ० २, १), "प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" (ऐ० उ० ३, ३) इति च औपनिषदं तत्त्वदर्शनम्।

अथ "यावद्ब्रह्म विष्ठितं तावती वाक्"

(ऋ० १०, ११४, ८)

इति ऋङ्मन्त्रवर्णात्, "यत्र ह क्व च ब्रह्मतद्वैवाग्यत्र वा वाक् तद्वै वा ब्रह्मेत्येतदुक्तं भवति" (ऐ० आ० १, ३, ८) इति तद्ब्राह्मणानुवचनाच्च तस्य परब्रह्मणः वाचकसत्त्वपूर्णा वागपि तत्समाना प्रत्यक्षब्रह्मरूपा ब्रह्मवचनार्हा भवति।

तथा गायत्र्यादि छन्दो निबन्धनक्लृप्तः वेदरूपः मन्त्रोऽपि ब्रह्मवचनार्हः संस्तुतः श्रूयते।

"ब्रह्माणि मन्दन् गृणतामृषीणाम्"

(ऋ० १०, ८९, १६)

"ब्रह्मणा ते ब्रह्मयुजा युनज्मि"

(ऋ० ३, ३५, ४)

"ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते"

(ऋ० २, २३, १)

इति च तदनुश्रवणम्।

एवमेव ब्रह्मावबोधे तदुपासनादियोगसाधनेऽपि उपकरणीभूताः प्राणापरपर्यायाः धियोऽपि ब्रह्मशब्दनिर्देशार्हाः श्रूयन्ते, "वाग् वै ब्रह्म, प्राणो वै ब्रह्म, चक्षुर्वै ब्रह्म, श्रोत्रं वै ब्रह्म, मनो वै ब्रह्म, हृदयं वै ब्रह्म" इति (बृ० उ० ४, १, १-७) इति प्रत्यक्षमेव वागादीनां धीन्द्रियाणां ब्रह्मत्वेन निदर्शनम्।

तत्रापि वागादीनां तेषां ब्रह्मत्वदृष्ट्या "प्रज्ञा, प्रियं, सत्यं, अनन्तं, आनन्दः, स्थितिः", इत्यादिभिर्गुणैः सहयोगेन तदुपासनादिविधानं विशिष्यते।

एवमेतेषां "इन्द्र-ब्रह्म-आत्म-पुरुष-वाक्-वेद-मन्त्र-धीन्द्रिय-प्रमुखानां सर्वेषामपि ब्रह्मणां ब्रह्मसत्त्वानां प्रेरयित्री सा परमा दिव्या वागेव ब्रह्मचोदनी आरात्मिका चैतन्यज्योतिःस्वरूपा काचित् परा शक्तिरेवेति सम्पद्यतेतराम्।

अत्र ज्ञानेषु योगेषु विद्यासु, उपासनासु, तपःसु, यज्ञेषु च सर्वेष्वपि साधनविशेषेषु सर्वत्रापि स्वात्मप्रबोधरूपः अप्रमाद एव परमो योगः इति गम्यते, स च जागृति रूपः अनिमेषात्मकः कश्चित् अन्तःस्फुरणरूपः धीसत्व एव भवितुमर्हतीति प्रतीयते, तस्येदमनुश्रवणम्---

"इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति। यन्ति प्रमादमतन्द्राः॥"

(ऋ० ८, २, १८)

**तस्यायमर्थः—देवाः धीयोगादियज्ञानुगामिनम् इच्छन्ति, न तु स्वप्नाय विस्मृतिशीलाय स्पृहयन्ति, स्वप्नशीलं न कामयन्ते इति यावत् ।**

**अतन्द्राः** स्वयं जागृतिशीलाः सन्तः ते प्रमादं न यन्ति, इति ॥

**एतेन अप्रमाद एव अमृतत्वादि सम्पादकं प्रधानं साधनमिति प्रतीयते, प्रमादस्य तस्य मृत्युस्वरूपत्वोपदेशात् ।**

"प्रमादं वै मृत्युमहं ब्रवीमि" **(महा भा० ५, ४२, ४) इति सनत्सुजातस्य प्रतिवचनं सुप्रसिद्धम् धृतराष्ट्र-सनत्सुजातसंवादे शास्त्रीयं वैदिकतत्त्वविशिष्टम् ।**

**तेनैव अप्रमादेन धियां स्थिरधारणादिरूपो योगः सिध्यतीति उपदेशः श्रूयते उपनिषत्तत्त्वविशिष्टः,**

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥"

**(कठोप० ६, १०-११)**

**इति नचिकेतसे यमेनोपदिष्टं योगविद्यानुशासनम्,**

"मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥

**(क० उ० ६, १८) इति च तत्फलश्रुतेरनुश्रवणम् ।**

**सोऽयं धीयोगः तत्रैव बहुधा उपदिश्यते तदभ्यासादिप्रक्रियापूर्वकम्—आत्मबुद्धिमनःशरीरेन्द्रियादीनां रथ-रथिक-सारथि-प्रग्रह-हयादिरूपककल्पनया तन्नियमनादिदृष्टान्तमुखेन,**

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान् ।" **(क० उ० ३, ३-४)**

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः महतः परमव्यक्तमव्यक्तात् पुरुषः परः ॥ (क० उ० ३, १०-११) इति तद्रूपकादि कल्पनोपदेशः, तन्नियमनादिसाधनोपदेशश्च दृश्यते ।**

"यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेत् ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेत् शान्त आत्मनि ॥ **इत्यादि,**

**(क० उ० ३, १३)**

**स च धीयोगः प्रणवादिमन्त्रयोगपूर्वकं विधीयते ।**

(१) "धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ **इति,**

(२) प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥" **इति ॥ (मुं० उ० २. २. ३-४)**

सोऽयं जागृतिनिष्ठात्मको योगः अप्रमादसाधको योग एव परमतपः स्वरूपः, जागृतिशीलं प्रमादरहितमेव पुरुषं सर्वे वेदा देवाश्च स्वयमेव कामयन्ते, तं स्वसजातीयं सधर्माणं तमेवानुगच्छन्ति ।

"यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥" इति ।

(ऋ० मं० ५, ४४, १४)

तस्य जागृतिसत्त्वस्य नरस्य सखित्वे तत्सहयोगाय च तद्योगसिद्धये मनसोऽधिपतिः सः सोमः देवतात्मा तत्र प्रतितिष्ठतीति भावः ।

अस्मिन् भुवने सदा जागरणशीलः देवतात्मा अग्निरेव, तस्य योगेन सोमः प्रतितिष्ठति, तेन अग्नीषोमात्मकः वाङ्मनःसत्त्वसाध्यो धीयोगः सिध्यतीति अर्थः सम्पद्यते ।

"अग्निर्जागार तमृचः कामयन्ते ॥"

(ऋ० ५, ४४, १५)

इति तत्समानार्थको मन्त्रः ।

अत एव प्रज्ञानेन सदा जागृतिमतां मनुजानां तत्परमपुरुष साक्षात्कारयोगः सिध्यतीति श्रावितं आर्षेयं वैदिकं तत्त्वं सर्वथा सङ्गच्छते, तथा च मेधातिथेरार्षेयं ऋङ्मन्त्रदर्शनम्,

"तद् विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥" इति ॥

(ऋ० १, २२, २१)

"संजागृवद्भिर्जरमाण इध्यते"

(ऋ० १०, ९१, १)

"त्वे रयिं जागृवाँसो अनु ग्मन्"

(ऋ० ६, १, ३)

इति च तदनुश्रवणम् । तत्समानार्थकमेव तत्राध्यात्मतत्त्वानुयोगात् ॥

उपनिषत्सु अध्यात्मतत्त्वदर्शनेन सर्वेषामन्तरात्मनः अन्तःप्रज्ञस्य सदैव जागृतिसत्त्वयोगात् ब्रह्मात्मतास्वरूपं निर्दिश्यते,

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥"

इति, (क० उ० ५, ८ )

इति नचिकेतसे यमेन कृतः परमवस्तुतत्त्वोपदेशः, एतेन प्रत्यगात्मनः नित्यं तद् जागृतिसत्त्वं स्वतः सिद्धमेवेति सम्पद्यतेतराम् ॥

तथैव तदन्तरात्मनः उपासनार्थं सर्वेषामन्तःशरीरे सिद्धानां प्राणानां सदा जागृतिसत्त्वम्, तथा वैश्वानरात्माग्निस्वरूपत्वं च उपदिश्यते, प्राणाग्नय एवैतस्मिन् पुरे जाग्रति"

इति (प्र० उ० ४, ३) "भगवन् एतस्मिन् कानि स्वपन्ति, कान्यस्मिन् जाग्रति" इति प्रश्नस्य पिप्पलादोदितं प्रत्युत्तरं वचनम् ॥

तदेतत् परं जागृतिशीलं, अनिमिषादि सत्त्वं च दिव्यं देवताधर्मस्वरूपम् ।

"अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।

(ऋ० ४, ४, १२)

नृचक्षसो अनिमिषन्तो अर्हणा

(ऋ० १०, ६३, ४)

"अनिमिषा अदब्धाः"

(ऋ० २, २७, ९) इत्यादि ।

तदेतद् ध्रुवा स्मृतिः—तद्रूपत्वममृतत्वं च धीनां शुद्धसत्त्वानां योगेनैव सिध्यतीति औपनिषदं तत्त्वं सुप्रसिद्धमेव ।

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः इति, (छां० उ० ७, २६, २)

तस्मात् तादृशेन यज्ञेन योगेन तपसा च सर्वं ध्येयं सेत्स्यतीति उक्तं सर्वं सङ्गच्छते ।

अत एव ते पूर्वे महर्षयः यथोक्तेन आन्तर्येण धीयोगेन अप्रमादसत्त्वेन तपसा यज्ञेन च सदसतोर्विमर्शेन सदा जागृतिशीलाः सम्पन्नाः सन्तः विश्वस्यापि जगतः अधिष्ठानरूपं ब्रह्मचोदन्याः वाचः तत् परमं पदं ब्रह्मात्मकं प्राप्नुवन्, तेन च तत्सुविज्ञानेन साक्षात्कारेण च छन्दस्वतीं ब्रह्मात्मिकां मन्त्ररूपां परां वाचं ददृशुः, तेन च मन्त्रद्रष्टृत्वरूपं ब्रह्मर्षित्वमपि प्रापुः, एवम् अतीन्द्रियार्थदर्शनसमर्थेषु तेषु ऋषिषु तपसा आविर्भूतां संस्फुरितां छन्दस्वतीं ऋगादि मन्त्ररूपां वाचमेव तेषां ऋषीणां मुखादेव अन्येऽपि प्राप्नुवन्, तां ब्रह्ममयीं वाचमनुसृत्यैव सर्वेऽपि तत् दिव्यं तत्त्वज्ञानं विज्ञानं च सम्पादयामासुरिति स्पष्टम् ।

अस्मिन् अर्थे बार्हस्पत्यार्षेयम् ऋङ्मन्त्रदर्शनम्—

यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् ॥
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ इति ॥

(ऋ० १०, ७१, ३)

तस्यायमर्थः—यज्ञादिसाधनेन वाचः तत् परमं पदमुपप्राप्तानां तेषामृषीणां मुखादुदीर्णां तां वेदवाचं सप्तरेभाः फलरूपाः तत्साधनीभूताः सप्तनियमस्वरूपाः विषयविशेषाः सद्विद्यात्मकाः अधितिष्ठन्ति, इति ॥

तथा च मन्त्रवर्णान्तरेऽनुश्रूयते,—

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ॥
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥

(ऋ० १०, ५, ६)

तस्यायमर्थः :—

तत्र ताः सप्तधीन्द्रियसंयमार्थाः सप्तमर्यादारूपाः नियमाः शास्त्रविहिताः "प्रवृत्ति-निवृत्ति-निष्ठात्मिकाः कविभिः तैः महर्षिभिः समाकृताः भवन्ति, तासां मध्ये एकामपि मर्यादां अतिक्रामन् मनुष्यः अपराधी पापीयान् दोषयुक्तो भवति, तन्मर्यादात्मकनियमपरिपालनेन सर्वेषां प्राणिनां मूलस्थाने परमे पदे सर्वबन्धविमोके प्रतितिष्ठतीति संक्षेपार्थः ।

अथ अस्मिन् प्रपञ्चे विश्वसृष्टेरपि पूर्वं परमपुरुषे तस्मिन् प्रज्ञानरूपेण अन्तर्हिताः नित्यसिद्धास्ते ऋगादयो वेदाः सत्यात्मानः सत्यमन्त्ररूपाः आसुः, ततश्च तेभ्य एव ब्रह्मरूपेभ्यः वेदवाक्स्वरूपेभ्यः शब्देभ्यो दिव्येभ्यः उत्तरत्र संभाव्यमानानां सर्वेषां प्राणिनां विशेषतो मानवानां हितशासनरूपेण सर्वज्ञानप्रकाशनाय सर्वसद्विद्याप्रतिपत्तये च तस्य परमात्मनः यज्ञपुरुषस्य तस्मात् सर्वस्वहवनरूपात् सर्वहुतो यज्ञात् विश्वोदयार्थं सर्वस्वहवनेन सम्पन्नात् प्रज्ञानात्मनः चैतन्यज्योतिषः सकाशात् ऋगादयो वेदाः प्रादुर्बभूवुरिति श्रूयते, तथा च प्रसिद्धः नारायणार्षेयः ऋङ्मन्त्रवर्णः—

"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ।। इति ।

(ऋ० १०, ९०, ९)

अथ पुनस्तस्य परमपुरुषस्य मुखात् निःश्वासरूपेण निःसृतान् तान् प्रत्यक्षब्रह्मरूपान् ऋगादीन् वेदान् पूर्वे महर्षयः तपसा निर्विकल्पे समाधौ भगवत्प्रसादात् तदनुज्ञया प्रेरणया च, वाग्देवतायाः अनुग्रहात् स्वात्मन्येव अन्तः प्रतिषुश्रुवुः, स्वान्तःश्रवणेनैव तान् उपप्राप्नुवन्, तस्मात् सा छन्दस्वती वागेव श्रुतिरित्याख्यायते, तदेव हि छन्दसां दर्शनम्, तेनैव दिव्येन मन्त्र दर्शनेन ऋषीणामृषित्वं सम्पद्यते, "ऋषिर्विप्रः काव्येन" (ऋ० ८, ७९, १) इति च तदनुश्रवणम्, तेषां वेदानां ब्रह्मात्मनिःश्वसिततत्वं च उपनिषत्सु प्रसिद्धम्, "अस्य महतो भूतस्य निश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः०······सर्वाणि च भूतान्यस्यैव निश्वसितानि" इति च तदुपवर्णनम्, (बृ० उ० ४, ५, ११)

एतदर्थानुवादिनी स्मृतिरपि भवति ।

"अनादिनिधनानित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।।
"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।।" इति च ।।

अपि च सर्वमानवहितानुशासनात् तदिदं शास्त्रमिति प्रशस्यते, तदिदं ऋग्वेदादिकं छन्दोरूपमेव प्रधानं शास्त्रम् ।

"इळामकृण्वन् मनुषस्य शासनीम्" ।

(ऋ० १, ३१, ११)

इति तदनुश्रवणम् ।

तज्जनकत्वाद् वेदाविर्भावनिदानभूतत्वाच्च ब्रह्मणः शास्त्रयोनित्वं प्रतिज्ञायते, तथैव प्रत्यक्षवत् परोक्षापरोक्षवस्तुनोऽपि ब्रह्मात्मादिस्वरूपस्य यथार्थतत्त्वाधिगमे कारणत्वेन ऋगादि-

वेदवचनेन सर्वत्र प्रत्यक्षं प्रमाणमिति स्वीक्रियते सर्वैरपि शास्त्रचिन्तकैः शब्दप्रमाणवादिभिरिति प्रसिद्धमेव, अधिभूताधिदैवताध्यात्मकतत्त्वत्रयसिद्धेषु सर्वेषु वस्तुषु विषयादिषु सर्वत्रापि शब्दैकतन्त्रप्रमाणान्वयदर्शनात्, तथा च सूत्रितं ब्रह्ममीमांसायाम्—

"शास्त्रयोनित्वात्" इति, (ब्र० सू० १, १, ३) तस्येदं शारीरकं भाष्यवचनम्— "महतः ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थविद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म" इत्यादिब्रह्मकारणत्वं वेदानां समर्थितम्, तत्सकाशादेव वेदा विभावाद्यनुश्रवणात् ।

तथा ब्रह्मप्रमाणत्वेनापि तत्कारणत्वं अभ्युपगम्यते,—"अथवा यथोक्तं ऋग्वेदादिशास्त्रं योनिःकारणं प्रमाणं तस्य ब्रह्मणो यथावत् स्वरूपाधिगमे, शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्म अधिगम्यते इत्यभिप्रायः" इति ।

सोऽयं वेद एव सर्वासां विद्यानां संविदां वाचां च निधिः विश्वस्यापि जगतः आदिभूतः अनादिसिद्धः एवेति सर्वशास्त्रसिद्धान्तः, तथैव अद्यत्वेऽपि समग्रेऽस्मिन् भूमण्डले प्रचलितानां संस्कृतप्राकृतादीनां सर्वासामपि भाषाणां सा छन्दस्वती वेदवागेव मातृस्थानीया भवति, अत एव सा देववाणीत्यभिमन्यते सर्वैरपि भाषातत्त्वकोविदैरिति सर्वत्रापि सुप्रसिद्धमेवेति न पुनर्व्याख्येयम् ।

अपि च सर्वेषां धर्माणां ज्ञान-भावना-कर्मादीनां पुरुषार्थानां तथा सर्वेषां जगतामपि स वेद एक एव परमं अधिष्ठानम्, श्रेयो-निःश्रेयसादीनां सर्वासामपि सम्पदां वेद एव प्रधानं साधनं सर्वास्पदीभूतं सत्त्वम्, एवं सर्वेषां मानवानां ज्ञाने संजीवने च प्राणसंजीवनीमात्राऽपि स वेद एवेति सिध्यति तथैव सर्वेषां विज्ञानामपि वेद एव प्रधानाश्रयीभूतः, तस्माद् वेदादेव आधुनिकानां यान्त्रिकानां भौतिकानां विज्ञानानामाविष्कारः सम्पादितः, इतोऽप्यधिकतरं वेदमुखादेव तत्त्व संशोधनेन प्रतिदिनमभिवर्धमान एव दरीदृश्यते, प्राचां महर्षीणां तपोधनानां सर्वम् ऐश्वर्यं धनं जीवनं सामर्थ्यं अजरामरं विभूतिसर्वस्वमपि स वेदः एक एव आसीदिति प्रतीयते, तथा च याजुषो मन्त्रवर्णः प्रसिद्धः—

"अहे॑ बुध्निय॒ मन्त्रं॑ मे गोपाय । यमृष॑यस्त्रैविदा वि॒दुः ।
ऋच॒ःसामा॑नि॒ यजूꣳषि स । हि श्रीर॒मृता॑स॒ताम्" ॥ इति ॥

(तै० ब्रा० १, २, १, २६)

"भ॒द्रैषां॑ ल॒क्ष्मीर्निहि॑ताऽधि॑ वा॒चि" इति च,

(ऋ० १०, ७१, २)

## ॥ वेदे मन्त्रब्राह्मणयोः स्वरूपम् ॥

तत्र सर्वेष्वपि वेदेषु – "मन्त्रः––ब्राह्मणं" चेति द्वेधा विभागो दृश्यते, तयोर्मध्ये गायत्र्यादिछन्दः संहितानिबन्धनसिद्धाः एव मन्त्राः भवन्ति, येषां ब्रह्मसंज्ञया छन्दःसंज्ञया च वेदे प्रसिद्धिरस्ति ।

"प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्" ।

(ऋ० १, ४०, ५)

"अहे बुध्निय मन्त्रं मे गोपाय" ।

(तै० ब्रा० १, १, १०, ३) इति च

वेदमन्त्रेष्वेव मन्त्रसंज्ञयैव निर्देशः प्रसिद्धः तन्मन्त्राणाम्, ब्रह्मसंज्ञाऽपि मन्त्राणामेवास्ति प्राधान्येन ।

"ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते"

(ऋ० २, २३, १)

"उस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि"

(ऋ० २, २३, २)

"ब्रह्मणा ते ब्रह्मयुजा युनज्मि"

(ऋ० ३, ३५, ४) इति च

"अमन्यमानाꣳ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र"

(ऋ० १, ३३, ९)

"ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः"

(ऋ० १०, १६२, १)

इत्यादीनि शतशः प्रमाणानि विद्यन्ते,

एवमेव ब्रह्मसंज्ञकानां मन्त्राणामेव प्रधाना छन्दः संज्ञाऽपि, तेषां गायत्र्यादि छन्दो निबन्धनसत्त्वात्, मन्त्रेष्वेव छन्दः शब्दस्य सार्थक्यात् ।

"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत" इति,

(ऋ० १०, ९०, ९)

"यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् संबभूव ॥

इति च (तै० उ० १, ४) इति च तदनुश्रवणम् ( वैश्वदेवकाण्डे )

अतएव तेषां मन्त्राणामेव छन्दः संहितानां वस्तुतत्त्वसिद्धा "ऋग्यजुःसामसंज्ञाऽपि" शास्त्रसिद्धान्तोदिता, सा च वैदिकयज्ञीयशंसन-यजन-स्तवनादिविनियोगसंविधानक्लृप्तत्वात्, "ऋचैव होत्रं कुर्याद्, यजुषाऽऽध्वर्यम्, साम्नोद्गीथम्" इति (ऐ०ब्रा० ५, ५०, १) ।

"ऋग्भिः शंसन्ति, यजुर्भिर्यजन्ते, सामभिः स्तुवन्ति" इति च तदनुवचनम्, छन्दस्वद्भि-रेव ऋग्यजुःसाममन्त्रैः तच्छंसनयजनादियज्ञीयकर्मानुष्ठानविधानात्, तेषां ऋगादिशब्दानां मन्त्रवचनार्हतेति ब्राह्मणादिकल्पवचनादेव सम्पद्यते।

तेषां त्रयाणां स्वरूपलक्षणं तु "मितत्वम् अमितत्वं स्वरत्वं चेति" श्रूयते, ऋग् गाथ्य-कुम्व्यातन्मितम्, यजुर्निगदो वृथा वाक्तदमितम्, साम स्वरः" इति, (ऐ. आ. २, ३, ६)

तथा च सूत्रितं तदिदं धर्ममीमांसायाम्" तेषां ऋग् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुः शब्दः" इति (जै० मी० सू० १)

तत्र गायत्र्यादिछन्दोरूपेण तत्तादर्थानुसारेण एक-द्वि-त्रि-चतुः—पञ्चपादादिनियमेन प्रतिक्लृप्तं ऋचां लक्षणम्, (तदेतत् मितत्वम्) तथा तासां ऋचामेव सस्वरं गानमेव स्वरूपं साम्नः, "तस्मादृच्यध्यूढं साम गीयते" (छां० उ० १, ६, १) इति तदनुवचनात्। "शेषे यजुः शब्दः"---अनियताक्षरपादानि यजूंषि भवन्ति" इति तल्लक्षणोपदेशात्, तदेतदेव यजुर्मन्त्राणां अमितत्वं नाम, एवं स्तोत्रं सामगानं यजनादिकं च तेषां मन्त्राणां मुखेनैव भवितुमर्हन्ति।

तथैव वेदशब्दोऽपि प्राधान्येन छन्दःसंहितानां मन्त्राणामेवबोधकः अनुश्रूयते, तथा च ऋङ्मन्त्रवर्णः प्रसिद्धः,—

"यः स॒मिधा॒ य आहु॑ती॒ यो वेदे॑न द॒दाश॒ मर्तो॑ अ॒ग्नये॑ यो नम॑सा स्वध्व॒रः"

इति (ऋ० ८, १९, ५)

स च यज्ञः तथा यज्ञे हवनादिकं च मन्त्रात्मकेन वेदेनैव सिध्यति, न तु ब्राह्मणादिवाक्यैः हविर्हवनादिकं स्तोत्र-गायनादिकं च कर्तुं विहितम्। तेषां ब्राह्मण-वाक्यानां विधायकत्वेनैव सार्थक्यात्, क्वचिद् मन्त्रार्थव्याख्यादिबोधकत्वेन उपयुक्तत्वात्।

"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति सूत्रेण निर्दिष्टं च ब्राह्मणवाक्यानामपिवेदत्वं च विधान-व्याख्यानादिना मन्त्रोपसर्जनीयत्वादेव, तावन्मात्रेण तैर्ब्राह्मणवाक्यैः हवनादिरूपो यज्ञो नैव सिध्यति, तच्चब्राह्मणवाक्यानां वेदोपसर्जनीयत्वं ब्राह्मणवाक्येनैव सिद्धम्, तथा च ब्राह्मणे आरण्यके उपनिषत्सु च स्वप्रतिपादितेऽर्थे प्रामाण्याय ऋगादिवेदमन्त्रा एव उदाहृता दृश्यन्ते, "तदेतदृचाभ्यनूक्तम्, तदप्येतदृषिणोक्तं, तदप्येषश्लोको भवति, तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे, गर्भएवैतच्छयानो बामदेव एवमुवाच" इत्यादिभिः॥

एवमेव इतोऽपि स्पष्टतरः प्रतिपादितः श्रूयते सोऽयमेवार्थः, "शौनः शेपमाजीगर्तिं वरुणोऽगृण्हात्। स एतां वारुणीमपश्यत्। उदुत्तमं वरुण पाशमस्मदित्याह, वरुणपाशादे-वैनं मुञ्चति" इति।

एवं बहुधा प्रसङ्गेन शतशः सहस्रशः स्थानेषु प्रत्यक्षं श्रुतमेवास्ति, तथापि दिग्दर्शन-मात्रं संक्षेपतः समर्थितमिदम्, उत्तरत्र ब्राह्मणारण्यकोपनिषत्प्रकरणे विस्तरशः प्रपञ्च्यते,

॥ आर्षेय-च्छन्दो-दैवत-ब्राह्मणानि ॥

॥ ब्राह्मणार्षेयच्छन्दो दैवतानि ॥

अथ ऋगादिषु सर्वेषु वेदेषु सर्वेषां मन्त्राणां—"आर्षेयं छन्दः, दैवतं-ब्राह्मणं" इति

**चत्वारि अन्तरङ्गानि भवन्ति, तेषां ज्ञानमन्तरेण अध्ययने अध्यापने यजने याजने च तेषां वेदमन्त्राणां यातयामतादिदोषं मन्यन्ते पूर्वे महर्षयः, तस्मादेव तदपिऋष्यादि ज्ञानं अवश्यं सम्पादनीयतयाब्राह्मणादि प्रमाणवचनमुखेनैव विहितमनुश्रूयते—**

"यो ह वा अविदितार्षेयच्छन्दोदैवत ब्राह्मणेन मन्त्रेण यजते याजयति वा अधीतेऽध्यापयति वा यातयामान्यस्यच्छन्दांसि भवन्ति, तस्मात् तानि मन्त्रे मन्त्रे विद्यात्" **इति (छां० ब्रा)**

**तथैव तदर्थावबोधकं ऋग्वेदपरिभाषासूत्रम्—**

"अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्सङ्ख्याऋषिदैवतच्छन्दांस्यनुक्रमिष्यायो यथोपदेशम्, न ह्यतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः, मन्त्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छति एताभ्यामेव, यदि-अनेवंविदो याजयन्ति —

यातयामानिच्छन्दांसि भवन्ति, स्थाणुं वर्छति गर्ते वा पात्यते प्रमीयते वा पापीयान् भवतीति विज्ञायते" **इति, (ऋ० प० सू० १, १)**

**एतेन ऋषि-दैवत-छन्दो-ब्राह्मणादिज्ञानं विना अधीताः अध्यापिताः तथैव यज्ञादिषु विनियुक्ताश्च ते वेदमन्त्राः नीरसतां निर्वीर्यतां च प्राप्नुवन्तीति अर्थः सिध्यति ।**

**अतएव सर्ववेदप्रधानस्य गायत्रीमन्त्रस्य तदन्तरङ्गचतुष्टयं उपनिषन्मुखेनोपदिष्टमनुश्रूयते,** "गायत्र्या गायत्रीछन्दो विश्वामित्रऋषिः सविता देवता अग्निर्मुखं, ब्रह्माशिरो विष्णुर्हृदयं, रुद्रः शिखा, पृथिवी योनिः, प्राणापानव्यानोदानसमाना स प्राणाश्वेतवर्णा साङ्ख्यायन सगोत्रा गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षा-उपनयने विनियोगः" **इति, (ना० उ० १४ खण्ड) ।**

**अत्र सर्वत्रापि "ब्रह्मणम्" इति निर्दिष्टं पदं तु मन्त्राणां विनियोगकल्पकं वचनं भवति, येन तद्ब्राह्मणवाक्यानां कल्परूपत्वं स्वीकृतम् ।**

## ।। ब्राह्मणम् ।।

**"ब्रह्मणः इदं ब्राह्मणम्" इति व्युत्पत्तेः यः ब्रह्मसंज्ञको वेदमन्त्रः तत्सम्बधिवाङ्मयमेव ब्राह्मणं इत्यर्थोलभ्यते, तत्र वेद मन्त्राणां प्रयोगविनियोगादि विधानार्थकं तथा क्वचिन्मन्त्रार्थोपव्याख्यानार्थकं च तत् प्रायः सर्वमपिब्राह्मणं गद्यात्मकमेव भवति, तत्रापि केवलं यज्ञादिविधानार्थकं ब्राह्मणम्, मन्त्रार्थव्याख्यानार्थकं तु अनुब्राह्मणमिति विशेषः, तथा च बौधायनकाण्डानुक्रमणिका सूत्रम्** - पौरोडाशिकं याजमानं होतारः हौत्रं पितृमेधः" इति "स ब्राह्मणानिसानुब्राह्मणानि प्राजापत्यानि" **इति, (बौ० गृ० कां० सू० प्रश्नः ३।३) ब्राह्मणानुब्राह्मणयोः पृथङ्निर्देशात् पूर्वं तथोक्तं संगच्छते ।**

## ।। ब्राह्मणान्तर्गताः ब्राह्मणारण्यकोपनिषदः ।।

ब्राह्मणम् - **केवलं यज्ञादिकर्मकाण्ड विषयप्रधानम् ।**

आरण्यकम्—**प्राणोपासनादि विषय प्रधानम्, तस्य एकान्ते अरण्ये अध्ययनोपासनादि विधानोपदेशात् ।**

उपनिषत्—**अध्यात्मतत्त्वबाहुल्येन ज्ञान प्रधानम्, अध्यात्मविद्या विषयकं वाङ्मयम् ।**

**त एते त्रयोऽपि ग्रन्थाः ब्राह्मणान्तर्गता एव, आरण्यकोपनिषदरपि ब्राह्मणशब्देनैव निर्देशात्, तत्रापि प्रसिद्धासु उपनिषत्सु केचिन्मन्त्ररूपाः, केचित् श्लोकरूपाः, केचित् केवलं**

गद्यरूपाः भागाश्च विद्यन्ते, ब्राह्मणात्मकानां गद्यरूपाणामेव बाहुल्यात् उपनिषदामपि ब्राह्मणशब्देन निर्देशः ब्राह्मणग्रन्थे अन्तर्भावश्च प्राचामाचार्याणां अभिमतः इति प्रतीयते ।

"मन्त्र ब्राह्मणयोर्वेदनामधेयम्" इति तयोरुभयोरेव निर्देशात् तथा–आरण्यकोपनिषदयोः पृथङ्निर्देशादर्शनाच्चेति ।

तथा च ऋग्वेदे ब्राह्मणं आरण्यकं चेति ग्रन्थद्वयमेव विद्यते तदुभयमपि केवलं गद्यात्मकं ब्राह्मणरूपमेव, तस्मात् आरण्यकादेव पश्चात् उपनिषद् भागः पृथक् सङ्गृहीतः, तत्र आध्यात्मकविषयसत्त्वात्, वेदान्त शास्त्रकोविदैः, ब्रह्मसूत्रे तदधिकरणरचनादिदर्शनात् इति गम्यते ।

कृष्णयजुर्वेदेतैत्तिरीकेऽपि तत्समानमेवेति प्रतीयते, तत्र काण्डानुक्रमणिकायां—मन्त्र ब्राह्मणयोरुभयोरेवदर्शनात् । तथा वैश्वदेवकाण्डे अन्ते-अच्छिद्राणि पशुहौत्रं "उपनिषदः" इति उपनिषद्वचनेन निर्दिष्टो भागःकारिकायां उपवर्णितः, "शन्नः साहित्युपनिषद् याज्ञिक्यम्भस्य विश्रुता । भृगुर्ब्रह्मेति वारुण्यः प्रोक्ता वेदविदा इमे ।। इति ।

तत्र बौधायनादि सूत्रानुसारेण मन्त्रात्मकः, ब्राह्मणरूपश्चेति ग्रन्थद्वयमेव गम्यते, सारस्वतपाठक्रमे, संहिता-ब्राह्मणं-आरण्यकं इति ग्रन्थत्रयं प्रचलितं दृश्यते, त्रिष्वपि ग्रन्थेषु-मन्त्र-ब्राह्मणरूपयोः उभयोरपि समावेशोऽस्तीति विशेषः ।

शुक्लयजुर्वेदे तु– मन्त्र-भागः संहिताग्रन्थः-तथा शतपथब्राह्मणं चेति ग्रन्थद्वयमेवास्ति, तस्मिन् एकस्मिन्नेव ब्राह्मणे

उपनिषद् भागोऽपि अन्तर्गतः, स एव बृहदारण्यकोपनिषत् इति नाम्ना उपनिषत्सुसंगृहीतः, तस्मिन् प्रायः सर्वोऽपि भागः गद्यात्मकः ब्राह्मणरूप एव, ईशावास्योपनिषद् इति प्रसिद्धा एकैवोपनिषत्तु मन्त्रात्मकः, स च शुक्लयजुर्वेदे शतपथब्राह्मणे अन्ते पठितः, तत्संहितायामपि अन्तिमः चत्वारिंशत्तमः अध्यायः पश्चात् स्वीकृतः इति प्रतीयते, तद्वत् "श्वेताश्वरमन्त्रोपनिषद्" अपि मन्त्रात्मकासंगृहीतैव, तथा "कौषीतकिब्राह्मणोपनिषद्" इत्यपि प्रसिद्धाऽस्ति, केवलं ब्राह्मणरूपा, साऽपि उपनिषद् भागे समुद्धृता, ब्रह्मसूत्रे प्रतर्दनाधिकरणे, तन्नाम्ना प्रथिते प्राणाधिकरणे प्रमाणार्थं स्वीकृता तथैव "कठोपनिषद्" इति प्रसिद्धा कृष्णयजुर्वेदान्तर्गते तैत्तिरीये आरण्यके विद्यते, तस्य "काठकब्राह्मणम्" इति संज्ञाऽपि अस्ति, मैत्रायणीयशाखायां-कठशाखायां च एकस्मिन् ब्राह्मणग्रन्थे ब्राह्मणारण्यकोपनिषद्रूपाः त्रयोऽपि भागाः पठिताः, सामवेदे अथर्ववेदे च तत् समानमेव दृश्यते, वस्तुतस्तु—ज्ञानोपासनादि विषयवैशिष्ट्यमात्रेण ग्रन्थभेदः प्रसिद्धः आस्तां नाम, न तु मन्त्र-ब्राह्मणरूपत्वमन्तरेण तयोः तृतीयं तुरीयं वा लक्षणान्तरमस्ति इति सर्वथा सिध्यति ।

एवं "ब्राह्मणे,—आरण्यके, उपनिषत्सु च" त्रिष्वपिग्रन्थेषु तत्र तत्र प्रसङ्गानुसारेण कर्मोपासना ज्ञानकाण्डीयानां विषयाणां त्रयोऽप्यर्थाः उपदिश्यन्ते, तदुपव्याख्यानस्य प्रामाण्यदर्शनार्थं तन्मूलभूताः ऋगादयो मन्त्राः उदाहृताः श्रूयन्ते ।

तथा—क्वचित् तन्मन्त्राणां अंशतः पादशः समग्रतया वा व्याख्यानं दरीदृश्यते, तदेतदपि ब्राह्मणवाक्यानां मन्त्रार्थव्याख्यानरूपत्वे प्रमाणं भवितुमर्हति ।

तद्यथा—

"इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥"

इति ऋङ्मन्त्रः प्रसिद्धः (ऋ० ८, ४२, ३)

तस्य यज्ञीये विनियोगावसरे मन्त्रपादस्य अल्पशः व्याख्यानं क्रियते, क्रतुं दक्षं वरुण संशिशाधीति वीर्यं प्रज्ञानं मयि संशिशाधीत्येव तदाह," इति । तद्वदेव अन्तिम पादस्यापि व्याख्यानं अस्ति, "सुतर्माणमधि नावं रुहेमेति अग्निर्वै सुतर्मा नौः, वाग्वै सुतर्मानौः कृष्णाजिनं सुतर्मानौः" इति च, (ए० ब्रा० १, १३, २८)

"भद्रं नो अपि वातय मनो दक्षमुत क्रतुम्"

(ऋ० १०, २५, १)

इति मन्त्रान्तरेऽपि श्रुतं एदेव तत्त्वमधिकृत्य क्रतु-दक्षयोः मित्रावरुणदैवत्ययोः तयोः सत्त्वयोः उपव्याख्यानं अन्यत्रापि अनुश्रूयते—"क्रतूदक्षौ ह वा अस्य मित्रावरुणौ,"—इति, एतन्वध्यात्मम्—स यदेव मनसा कामयते इदं मे स्यादिदं कुर्वीयेति सः क्रतुः, अथ यदस्मै तत्स समृध्यते स दक्षः, मित्र एव क्रतुर्दक्षोवरुणः, ब्रह्मैव मित्रः क्षत्रं वरुणः, अभिगन्तैव ब्रह्मकर्ता क्षत्रियः, इति, (श० प० ब्रा० ४, १, ४, १–६)

एतयोर्ब्रह्मक्षत्रतेजसोः योगसत्त्वबोधको मन्त्रः, तद्व्याख्यानरूपं ब्राह्मणं च तैत्तिरीयके अनुश्रूयते, तथा च यजुर्मन्त्रवर्णः—

"सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु ।
यस्याहमस्मि पुरोहितः ॥ इति

(तै० सं० ४, १, १०, ९)

तस्येदमनुब्राह्मणम्—तयोर्योगनिदर्शकम्—

"ब्रह्मणैव क्षत्रꣳ सꣳ स्यति । क्षत्रेणब्रह्म, तस्माद् ब्राह्मणो राजन्यवान् अत्यन्यं ब्राह्मणम् , तस्माद् राजन्यो ब्राह्मणवान् अत्यन्यꣳराजन्यम् ॥

(तै० सं० ५, १, १०, ८ )

एतदर्थकमेव तृचं पूर्वमेवोदाहृतम्—"स इद् राजा प्रतिजन्यानि विश्वा" । स इत् क्षेति सुधित ओकसि स्वे ॥ "अप्रतीतो जयति संधनानि" इति च, (ऋ० ४, ५०, ७-८)

एवमेव—ब्राह्मणे आरण्यके उपनिषत्सु च बहूनां ऋङमन्त्राणां समग्रार्थव्याख्यानमपि दरीदृश्यते, तथा हि—"वाचा वै देवा सन्धीयन्ते वाचामित्राणि०" इत्यादि वागेवेदं सर्वम्, तदेतदृचाऽभ्यनूक्तम्, "एकः सुपर्णः स समुद्रमा विविवेश० । तं माता रेळिह स उरेळिह मातरम्" (ऋ० १०, ११४, ४) इति।

आध्यात्मिकतत्त्वज्ञानप्राधानेन उपदिष्टासु उपनिषत्स्वपि ऋङमन्त्रोदाहरणाग्रकं व्याख्यानमनुश्रूयते, तथा च ऐतरेयकं उपनिषद्वचनम्—"पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः० इत्यादि—स इतः प्रयन्नेव पुनर्जायते तदेवदृषिणोक्तम्—"गर्भे नु सन्नन्वेषामवेदहम्० अधः

श्येनोजवसा निरदीयम्" इति गर्भ एवैतच्छयानो वामदेव एवमुवाच" इति ॥ (ऐ० उ० २, १-६) **सोऽयं द्वितीयोऽध्यायः मूलतः ऐतरेयारण्यके द्वितीयारण्यके पञ्चमः ।**

"ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति० **इत्यादि** – तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति" **शतपथब्राह्मणे मूलतः प्रसिद्धमेतत्, (बृ० उ० १, ४, १०) सोऽयं ऋङमन्त्रः** मूलतः **ऋग्वेदे प्रसिद्धः चतुर्थे वामदेवमण्डलेऽन्तर्गतः, तत्र तु तदेतत् तं च वामदेवस्य** अहं ब्रह्मास्मीति आत्मसाक्षात्कार **बोधकम्, आत्मस्तुतिरूपम्, तथा च सर्वानुक्रमसूत्रम्,** "अहं मनुः सप्ताद्याभिस्तिसृभिरिन्द्रमिवात्मानमृषिस्तुष्टाव" **इति, सा च आत्मस्तुतिः अनुभवोदितया शास्त्रीयया दृशा तन्मन्त्र दर्शनमुखेन समुदितेति गम्यते, तथा च ब्रह्म मीमांसासूत्रम्,"** शास्त्रदृष्ट्या तूपदेशो वामदेववत्" **इति (ब्र०सू० १, १) ॥**

गायत्री वा इदं सर्वं भूतं यदिदं किं च वाग् वै गायत्री० **(छा० उ०–३, १२, १-६,) इत्यादि, सैषा चतुष्पदाषड्विद्या गायत्री, तदेतदृचाभ्यनूक्तम्** – "एतावानस्य महिमा ऽतो ज्यायाँश्च पूरुषः, पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" **इति ॥ (ऋ० १०, ९०, ३)**

**सोऽयं मन्त्रः मूलतः सामवेदे संहितान्तर्गतः, पुरुषसूक्तान्तर्गतः चतुर्ष्वपि वेदेषु प्रसिद्धः,**

**सोऽयं तत्त्वविशेषः ब्रह्ममीमांसायां ज्योतिरधिकरणे निर्णीतः,** "ज्योतिश्चरणाभिधानात् छन्दोऽभिधानान्नेतिचेन्न तथा चेतोऽर्पण निगदात् तथा हि दर्शयति" **भूतादिपादेव्यपदेशोपपत्तेश्चैवम्** "उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात्" **इति (ब्र० सू० ११) ॥ तदिदं सर्वमपि चतुर्वेदीयपुरुषसूक्तान्तर्गस्य ऋङमन्त्रस्यैव व्याख्यानात्मकं ब्राह्मणरूपमेवेति स्पटं प्रतीयते, तदेतदपि छान्दोगब्राह्मणान्तर्गतमेव ।**

"पुरुषोवावयज्ञः० **इत्यादि समारभ्य पुरुषयज्ञं संतुत्य च तत्र प्रामाणार्थं ऋङमन्त्रद्वयमुदाहृत्य उपसंहरति, तत्रैते द्वे ऋचौ भवतः,** "आदित्प्रत्नस्यरेतसः··· **दिवा** "उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम्। देवं देवत्रासुर्यमगन्मज्योतिरुत्तमम्" **इति, (छां० उ० ३, १७-७) । एतौ मन्त्रौ मूलतः सामसंहितान्तर्गतौ ऋग्रूपावेव, (ऋ० ८,६,३०); (साम० १, २०); (ऋ०१, ५०, १०) ।**

**मधु विद्यायाम्**—"इयं पृथिवी सर्वेषां भूतानां मधु, अस्यै पृथिव्यै सर्वाणि भूतनि मधु, यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषोऽयमेव सः योऽयमात्मा इदममृतमिदं ब्रह्मेदँ सर्वम्," **इत्यारम्भ पृथिवी-आपः-अग्निः-वायुः-आदित्यः-दिशः-चन्द्रः-विद्युत्-स्तनयित्नुः-आकाशः-धर्मः-सत्यं-मानुषम्-इत्यन्तं मधुरमयं निर्दिष्टम्, तदिदं विश्वं अमृतमयं प्रतिपाद्य च अन्ते** "अयमात्मा सर्वेषां भूतानां मधु, अस्यात्मनः सर्वाणि भूतानि मधु इति सर्वान्तरस्य प्रत्यगात्मनः मधुतमं तत्त्वं उपदिष्टम्, "अयमात्मा सर्वेषां भूतानामधिपतिः, अस्मिन् आत्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्वे एते आत्मानः समर्पिताः" **इति च उपसंहृतम्, ततश्च अस्मिन् स्वप्रतिपादितेऽर्थे उपनिषन्मुखेन अभ्युदिते आध्यात्मिकतत्त्व परिपूर्णं मूलभूतं प्रधानं प्रमाणं प्रदर्शयितुं ऋङमन्त्रा एव समुदाहृताः,** "इदं वैतन्मधु दध्यङ् आथर्वणोऽश्विभ्यामुवाच, तदेतदृषिः पश्यन् अवोचत्,—"तद्वां नरा सनये दंस उग्रम्," **(ऋ० १, ११६, १२)** आथर्वणायाश्विनादधीचे" **(ऋ० १, ११७, २२)** "पुरश्चक्रेद्विपदः०" "रूपंरूपं प्रतिरूपो बभूव" **(ऋ० ६, ४७, १८) इति च तत् मन्त्रचतुष्टयम्, ततः**

**अन्तिममन्त्रस्य समग्रार्थः उपवर्णितः**, "अयं वै हरयोऽयं वै दश च शतानि सहस्राणि बहूनि च अनन्तानि च तदतद् ब्रह्मापूर्वं मनन्तरमबाह्यम् अयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्, **इति (बृ० उ० २, ५, १-१९) ॥ अत्र तिस्रः ऋचः ऋग्वेदान्तर्गताः, एतावता प्रपञ्चितेन एतेषां मन्त्राणां उपव्याख्यानात्मकं इदं औपनिषदं ब्राह्मणं अध्यात्मतत्त्वोपबृंहितमिति संगच्छते ।**

"प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यतः" **इति, आरभ्य रयिं च प्राणं चेति साङ्केतिकं वस्तु-तत्त्वं च तत्—आदित्य-चन्द्रमसोः मूर्तं चामूर्तस्वरूपत्वं उपदिष्टम्, ततः** "स एष वैश्वानरः प्राणोऽग्निरुदयते तदेतदृचाभ्युक्तम्" विश्वरूपं हरिणं जातवेदसं प्राणः प्रजानामुदयत्येष सूर्यः" **इति च ऋग्वेदेऽपि प्रसिद्धा काचिदृगुदाहृता, ततश्च** "संवत्सरो वै प्रजापतिः, तस्यायने दक्षिणं चोत्तरं च" **इति मार्गद्वयं निर्दिष्टम्,** "एष ह वै रयिर्यः पितृयाणः" **इति दक्षिणायनस्य तत्त्वं पितृयाणरूपेण समर्थितम्, तथा** "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मान-मन्विष्य आदित्यमभिजयन्ते, एतद् वै प्राणानामायतनं, एतदमृतमभयम्, एतत् परायणम् एतस्मान्न पुनरावर्तन्ते इत्येष निरोधः" **इति च निर्दिश्य स्वप्रदिपातितेऽर्थे ऋग्वेदान्तर्गतं कंचिन्मन्त्रं उदाहरति,** "**तदेष श्लोकः**" **इति** "पञ्चपादं पितरं द्वादशाकृतिं० सप्त चक्रे षडर-आहुरर्पितमिति" **इति (प्र० उ० १, ४–११) ऋग्वेदे मूलतः प्रसिद्धः (ऋ० १, १६४, १२) ।**

**तदिदं कबन्धिने कात्यायनाय अन्तेवासिने तत्प्रश्नस्य पिप्पलादेन दत्तं प्रत्युत्तरं वचनम् ॥**
"अथ कबन्धी कात्यायन उपेत्य पप्रच्छ भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्ते" इति प्रश्ने तस्मै स होवाच प्रजा कामो वै प्रजापतिः"—**इत्यादि (प्र० उ० १, ३) ॥**

**एवमेवपञ्चाग्नि विद्यायां देवयान-पितृयाणयोः पथोः तत्त्वोपदेशे श्रूयते—**

**"यत् कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा, अपि न ऋषेर्वचः श्रुतम्—**

"द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च ॥"

**इति तदर्थप्रमाणभूतः ऋङ्मन्त्रवर्णः ऋषिवचनरूपः उदाहृतः"**
**(बृ० उ० ६, २, २ )**

**सोऽयं मन्त्रः** मूलतः ऋग्वेदे प्रसिद्धः, (ऋ० १०, ८८, १५)
**विशिष्टः—**

**तदेतद् यानद्वयोपवर्णनं तस्य तत्त्वोपदेशश्च छान्दोग्येऽपि समानः श्रूयते,** "अयं वाव-लोको गौतमाग्निः० —इत्यादि—तद्यइत्थं विदुः० एष देवयानः पन्थाः, इत्यादि, **(छां० उ० ५, ४–१०) ।**

**अयं श्वेतकेतवे—प्रवाहणेन जैबलिना कृतः तत्त्वोपदेशः, अस्यापि पूर्वोक्तः** "द्वे सृती अशृणवं पितॄणाम्" **इति ऋङ्मन्त्र एव प्रमाण भूतः, तदिदं ब्रह्ममीमांसायामपि निर्णीतम् ॥**

"एतत् सामगायन्नास्ते" इत्यत्र।

"अहमस्मि प्रथमजा ऋता३स्य पूर्वं देवेभ्यो अमृतस्यनाभिः।
यो मा ददाति स इदेव मा३ऽऽवाः। अहमन्नमन्नमदन्तमाद्मि॥"
इति (तै० उ० ३, १०)

सोऽयं मन्त्रः ऋग्रूपः मूलतः सामवेदान्तर्गतः, साक्षात्कृतात्मनां सामगाने तत्सामरस्य तत्त्वबोधकः अत्र प्रमाणार्थं उदाहृतः।

एवं उपनिषत्सु न केवले पारमार्थिके अध्यात्मतत्त्वज्ञानार्थे निःश्रेयसार्थे एव ऋगादि वेद मन्त्राणां उपव्याख्यानं कृतमस्ति, अपितु प्रापञ्चिकेऽपि श्रेयः साधनार्थे तत्कारणीभूते-कर्मणि यज्ञादिरूपे, तथा बाह्ये लौकिके धनादि सम्पदभ्युदयार्थेऽपि ऋगादिवेदमन्त्राणां विनियोगः, तदर्थोपवर्णनविशेषोऽपि विहितोऽनुश्रूयते, तद्यथा महत्त्व प्राप्तये विहिते यज्ञे होमानन्तरं संगृहीतस्य सम्पातस्य घृतस्य होमावशिष्टस्य प्राशने ऋङ्मन्त्रस्य विधानम्।

"तत् सवितुर्वृणीमहे वयं देवस्य भोजनम्।
श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि॥" इति॥
(ऋ० ५, ८२, १)

अथ खलु एतयर्चा पच्छः आचामति, "तत् सवितुर्वृणीमहे" इत्याचामति, त्रिभिः पादैः त्रिराचमनम्, तथा "तुरंभगस्य धीमहीति सर्वं पिबति" इति॥ (छां० उ० ५, २, ७)

तथैव अन्यत्रापि महत्वकामनां सिद्धये विहिते होमे तत्सम्पातप्राशने "तत् सवितुर्वरेण्यं" इति प्रसिद्धस्य गायत्रीमन्त्रस्य त्रिभिः पादैः सह "मधु वाता ऋतायते० मधु नक्तमुतोषसः, मधुमान् नो वनस्पतिः०, इति तिसृभिः ऋग्भिः "भूर्भुवः स्वः" इति व्याहृतित्रयान्ताभिः स्वाहाकारान्ताभिश्च त्रिः प्राशनं विहितम्॥ अथैनमाचामति तत् सवितुर्वरेण्यम्० इत्यादि, (बृ० उ० ६, ३, ६)। त एते मन्त्राः मूलतः ऋग्वेदान्तर्गताः, ऋग्रूपाः एव सन्तः यज्ञादौ विनियोगार्थं यजुर्वेदेऽपि संगृहीताः सन्ति॥ (मधुवाता०- ० १, ९०, ६, तै० सं० ४, २, ९, ३), (श० ब्रा० १४, ९, ३, ११) तथैव सत्सन्तानोदयादिलौकिकेष्टार्थसिद्धयेऽपि उपनिषत्सु वेदमन्त्रैर्विहिताः संस्कारा अपिश्रूयन्ते—

तद्यथा—गर्भाधानार्थं कर्तव्ये वैदिके संस्कारे अनुमन्त्रणार्थं चतस्रः ऋचो विहिताः, "विष्णुर्योनिं कल्पयतु, गर्भंधेहि सिनीवालि०"

हिरण्मयी अरणी याभ्यां० यथाऽग्निगर्भा पृथिवी।

इति च, (बृ० उ० ६, ४, २१-२२)

तथा सोष्यन्तीमभ्युक्षति

"यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः।
एवा ते गर्भ एजतु सहावैतु जरायुणा॥
इति, सुखप्रसवार्थं विहितः तदभिमन्त्रणमन्त्रः॥"
(बृ० उ० ६, ४, २३)

ततश्च सद्योजातस्य शिशोः जातकर्मसंस्कारे तस्मै सुताय स्तनप्रदानार्थं विहितः ऋङ्मन्त्रः सारस्वतः रसप्रदः, "अथास्मै स्तनं प्रयच्छति"—

"यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद् यः सुदत्रः सरस्वति तमिह धातवे कः ॥" इति ॥

(ऋ० १, १६४, ४९)

तथा तन्मातुरपि अभिमन्त्रणे विहितो मन्त्रः, "अथास्य मातरमभिमन्त्रयते"—

"इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत् ।
सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत्" इति ॥

(बृ० उ० ६, ४, २८)

एवमेव अनेकेषु कामनाविशेषेषु लौकिकेषु उपनिषत्स्वपि विहिताः व्याख्याताः शतशः ऋगादयो मन्त्राः श्रूयन्ते ।

"बहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ।
तदभिमृशेत् अनुवामन्त्रयेत,
"यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद् यदपः ।
इदमहं तद्रेत आददे ॥
पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः ।
पुनरग्निर्धिष्ण्या यथा स्थानं कल्पताम् ॥"

(बृ० उ० ६, ४, ४-५)

तदेतत् सत्यं

"मन्त्रेषु कर्माणि कवयो यान्यपश्यꣳस्तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके" ॥

इति, (मुं० उ० १, २, १)

इत्यादिभिः उपनिषद्वचनै वेद मन्त्रोपदिष्टानां तेषां कर्मणां आचरणमेव परं श्रेयः साधनमार्गरूपं पदमिति सम्पद्यते, तथा च उपनिषन्मुखेनैवोपदिश्यते मन्त्रोपदिष्ट वस्तु-तत्त्वार्थाद्याश्रयः इति ।

एवं बहुभिः ब्राह्मणोपनिदादिभिः श्रौतैरेवप्रमाणैः सिध्यति ब्राह्मणम्, आरण्यकं उपनिदोऽपि वेदमन्त्राणां व्याख्यानरूपमेवेति, तस्मात् तदेतद् ब्राह्मणरूपमेव प्रधानं प्रथमं वेदभाष्यमेवेति प्रतिज्ञायते ।

तत्रापि केचिमन्त्रभागा ब्राह्मणारण्यकोपनिषद्ग्रन्थेषु सन्ति, केचित् केवलं श्लोकरूपाः पद्यात्मकाः गाथारूपाश्च भवन्ति, ते सर्वेऽपि स्वतन्त्रेण तत्त्वार्थप्रतिपादकाः दृश्यन्ते, केचित्तु मन्त्रार्थानुवादकाः यज्ञादि विषयकाश्चेति प्रतीयते, तदेषाऽभियज्ञगाथा गीयते, "आसन्दी वति धान्यादं रुक्मिणं हरितस्नजम् । अश्वं बबन्ध सारङ्गं० इति, (ऐ० ब्रा०, ८; २१, ३)

केचनमन्त्राः ऋग्वेदाद्यन्तर्गता एव उपनिषत्सु संगृहीताः व्याख्यानमन्तरेणापि पठिताः श्रूयन्ते ।

"अग्ने नय सुपथा राये अस्मान्०"

(ईशोप० १८)

मूलतः ऋग्वेदे सोऽयं मन्त्रः दृष्टः, (ऋ० १, १८९, १)

यजुःसामार्थर्ववेदेष्वपि मूलतः ऋग्वेदादेव तत्र तत्र यज्ञादि विनियोगार्थं संगृहीताः तेषां ऋग्रूपत्वात्, यजुर्वेदे पठितानामपि तेषां ऋङ्मन्त्राणां ऋग्वेदार्षेयत्वेनैव तत्प्रसिद्धेः तद्यथा—

"मा नस्तोके तनये मा नः" इति

"मा नो महान्तम्०"

(ऋ० १, ११४, ८ - ७)

कुत्सार्षेयः प्रसिद्धः, शुक्लयजुर्वेदे तु तदेवसंगृहीतत्वात् कुत्सार्षेयत्वमेवानुस्मर्यते, "मानो द्वे कुत्सः" इति०, शुक्लयजुर्वेदीयं सर्वानुक्रमसूत्रम् ।

एवमेव शतशः सहस्रशः ऋङ्मन्त्राः वेदान्तरेषु संगृहीताः सन्ति इति च प्रत्यक्षसिद्धमेव ।

"द्वासुपर्णा० ऋचो अक्षरे० इत्यादीनामपि तत् समानम् । श्वेताश्वतरोपनिषदि बहवो मन्त्राः वेदान्तरात् संगृहीताः सन्ति, तद्यथा—"युञ्जते मन उत युञ्जते धियः, युजे वां ब्रह्म पूर्व्यं नमोभिः, विश्वतश्चक्षुः०, ऋचो अक्षरे०, सहस्रशीर्षापुरुषः, पुरुषएवेदं सर्वम्०, मानस्तोके०" इत्यादयः, ऋग्वेदान्तर्गताः ।

"युञ्जानः प्रथमं मनस्तत्त्वाय०–युक्तेत मनसावयं० युक्त्वामनसा देवान्० एष हि देवः प्रदिशोऽनुसर्वाः, या ते रुद्रशिवातनूः,० वेदाहमेतं पुरुषं महान्तम्०, अणोरणीयान्०" इत्यादयः कृष्ण यजुर्वेदान्तर्गताः, अन्ये सर्वेऽपि प्रायः श्लोकरूपाः वेदसंहिताग्रन्थेषु न दृश्यन्ते इति संक्षेपतः दिग्दर्शनार्थं समर्थितम् ।

एवमेव ब्राह्मणारण्यकोपनिषदादिग्रन्थेषु-अधिभौतिक-अधिदैवत-अध्यात्मकादि तत्त्वबोधकानि वेदमन्त्रव्याख्यानरूपाणि शतशः सहस्रशः उपलभ्यन्ते, तानि सर्वाण्यपि वेदार्थज्ञाने व्याख्याने च प्रधानभूतानि प्रमाणानि विशिष्टार्थप्रकाशकानि आर्षेयाण्येव भवन्ति, तस्मात् तेषामाश्रयणे नैव प्रमदितव्यम्, नापि विस्मरणीयम्, इति सादरं निवेदयामि ।

अत्रेदं रहस्यम्—वस्तुतस्तु उपनिषदादिप्रतिपादिताः अध्यात्मादि सर्वतत्त्वपरिपूर्णाः सर्वेऽपि अर्थाः मूलतः ऋगादि वेदमन्त्रेष्वेव स्वतः सिद्धाः सन्तीति उपनिषदादितत्त्वदर्शनविदां प्राचामृषीणां भृगु-सत्यकामोपकोसल प्रभृतीनां याज्ञवल्क्यादीनां च प्रत्यक्षवचनेनैवसिध्यति, इति चेदं एतावता महता प्रपञ्चेन व्याख्यानप्रबन्धेन निर्गलितोऽर्थः, अस्मिन् सर्वस्मिन्नपि विषये वेदेषु प्रसिद्धानि आत्मस्तुति-ज्ञानस्तुति-भाववृत्तादि सूक्तान्येव प्रत्यक्षाणिप्रमाणानि भवितुमर्हन्ति ।

आत्मस्तुतिस्तावत् प्रज्ञानादियोगेन आत्मसाक्षात्कारोदिता सर्वात्मतत्त्वाद्युपवर्णनपरा, स्वस्वरूपाविर्भावादि योगात् तदर्थानुवादिनी छन्दस्वती वाग्विवृतिः, आत्मसंस्तुतिरूपेतिव्यवह्रियते, ज्ञानस्तुतिरपि–तत्तत्परात्मवस्तुतत्त्वज्ञानादिरूपस्य संस्तावनात्मिका, भाववृत्तं तु—आदिसृष्टौ संवृत्तं तत्पूर्वं तदनन्तरमपि वा स्वतः सिद्धं वस्तुतत्त्वम्, स्वभावसिद्धं नैसर्गिकं च भवति ।

एवमेव ज्ञानोपासनाकर्मभक्ति प्रमुख्यानि (आध्यात्मतत्त्वप्रयुक्तानि,) तद्योगात्म-कानि धीयोगादि तत्त्वविशिष्टानि श्रेयो-निःश्रेयसादि साधनानि, तथा प्रत्यक्षसिद्धानि साध्यानि च भौतिकानि वैज्ञानकानि च विषयजातानि, दिव्यानि परोक्षतत्त्वान्यपि वेदमन्त्रेष्वे-वान्तर्हितानीति वस्तुसिद्धं तत्त्वम् ।

आत्मस्तुतिः—(१) "अहं मनुरभवं सूर्यश्च" इति तृचम् वामदेवार्षेयम् (ऋ० ४, २६, १-३) "अहं मनुः सप्तआद्याभिस्तिसृभिरिन्द्रमिवात्मानमृषिस्तुष्टाव" इति सर्वानुक्रम सूत्रम्,

(२) "अहं रुद्रेभिर्वसुभिश्चरामि० (ऋ० १०, १२५, १-८) वागाम्भृण्यार्षेयं अष्टर्चं सूक्तम्, "अहमष्टौ वागाम्भृण्यात्मानं तुष्टाव" इति (स० सू० १०, १२५) तत्र वाचः चिज्ज्योतिरात्मिकायाः रुद्रादिभिः दिव्यैः दैवतात्मभिः सह तादात्म्ययोगेन सर्वात्मशक्ति स्वरूपत्वम्, संस्तुतम्, तच्च विश्वविभूतियोगसिद्धं वागात्मस्वरूपोपवर्णनम् ।

(३) "उदसौ सूर्यो अगात्०" इति, (ऋ० १०, १५९, १-६) शच्यार्षेयम्, "उदसौ षट् पौलोमीशच्यात्मानं तुष्टाव" इति, (स० सू० १०, १५९)

(४) "आयं गौः पृश्निरक्रमीत्०" इति (ऋ० १०, १८९, १-३) सार्पराज्यार्षेयं तृचं सूक्तम् । "आयं गौः सार्प राज्यात्मदैवतम्" इति, (सं० सू० १०, १८९)

(५) "अहं भुवं वसुनः पूर्व्यस्पति०" इति, (ऋ० १०, ४८, १-११)

(६) "अहं दां गृणते पूर्व्यं वसु०" इति च (ऋ० १०, ४९, १-११)

(७) "इति वा इति मे मनः० इति, (ऋ० १०, ११९, १-१३) लबार्षेयं त्रयो-दशर्चम् । 'इति वै सप्तोनैन्द्रोलबआत्मानं तुष्टाव, इति (स० सू०)

(८) ज्ञानस्तुतिः—"बृहस्पते प्रथमं वाचो अग्रम्० इति (ऋ० १०, ७१, १-११) बृहस्पतेरार्षेयम्, "बृहस्पते बृहस्पति ज्ञानं तुष्टाव" इति स० सू० (ऐ० आ० १, ११, १४)

(९) भाववृत्तम्—"नासदासीन्नोसदासीत् तदानीम्०" इति,(ऋ० १०, १२९,१-७) प्रजापत्यार्षेयं सप्तर्चम् ॥

"यो यज्ञो विश्वतस्तन्तुभिस्ततः" इति, च, "नासत् सप्तप्रजापतिः परमेष्ठी भाववृत्तं तु" इति, (स० सू० १०, १३०, १-७)

(१०) "ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत" इति, (ऋ० १०, १९०, १-३) अघमर्षणार्षेयम्, "ऋतं तृचं माधुश्छन्दसोऽघमर्षणो भाववृत्तमानुष्टुभम्" इति, (स० सू० १, १९०) ।

(११) "देवानां नु वयं जाना प्र वोचाम विपन्यया० इति, (ऋ० १०, ७२, १-९) बृहस्पत्यार्षेयमादित्यार्षेयं वा, "देवानां नवलौक्यो वा बृहस्पतिः दाक्षायण्यदितिर्वा," इति (स० सू० १०, ७२) अत्र देवनां जानानि जन्मानि प्रवोचाम" इति बन्धनात् भाववृत्तमिदं आदिसृष्टेराविभावादि विषयसत्त्वात् ।

"ब्रह्मणस्पतिरेता सं कर्मार इवाधमत् ।
देवानां पूर्व्ये युगे ऽसतः सदजायत ॥"

(२) इति तदर्थानुवचनाच्च, तथा उत्तरत्रापि—

"तदाशा अन्वजायन्त तदुत्तानपदस्परि ।
भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त ॥
अदितेर्दक्षो आजायत दक्षाद्वदितिः परि ।
अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव ।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥"

इति च (ऋ० १०, ७२, २-५) आदिसृष्टिविषयप्राधान्यात् ।

एवमेव चतुर्ष्वपि वेदेषु प्रसिद्धं पुरुषसूक्तं अध्यात्मादि दैवतादितत्त्वोपबृंहितम्, तस्य परमपुरुषस्य सर्वान्तरात्मत्वम्, विश्वरूपत्वम्, सर्ववेदाविर्भावकारणत्वम्, सर्वयज्ञ-योग-धर्मादि-सत्त्वाश्रयत्वम्, सर्वहुतादि यज्ञात्मत्वं च प्रतिपादितमस्ति, तत्रापि "एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः" इत्येकस्यैवमन्त्रस्य उपव्याख्यानं छान्दोग्योपनिषदि प्रसिद्धमपि पूर्वं निर्दिष्टमेव, तथैव "ज्योतिश्चरणाभिधानात्" (ब्र० सू० १, १ ) इति अधिकरणमुखेन तस्यैव पुरुषस्य ज्योतिः स्वरूपत्वेन परब्रह्मात्मताऽपि निर्णीतेति ।

तथैव पारमैश्वर्यपूर्णस्य परमात्मनः तस्य इन्द्रस्यापि तत् पूर्णत्वं सार्वभौमं तत्त्वं समर्थयन्ति सहस्रशः सूक्तानि ऋग्वेदे प्रसिद्धानि, "यो जात एव प्रथमो मनस्वान्० इति (ऋ० २, १२, १-१५) गृत्समदार्षेयम्, प्रत्येकस्मिन् मन्त्रे "स जना स इन्द्रः" इति तस्य इन्द्रस्यैव सर्वविभूतियोगपूर्णतां दर्शयति ।

"तदिदा स भुवनेषु ज्येष्ठम्० इति, (ऋ० १०, १२०, १-९) नवर्चम् बृहद्दिवार्षेयम्, इन्द्रस्यैव सर्वतोज्येष्ठत्वप्रतिपादकम्, तस्य आदिमं तृच (ऐ० आ० १, १२) व्याख्यातम् ।

"वि हि सोतोरसृक्षत० विश्वस्मादिन्द्र उत्तरः" इति, (ऋ० १०, ८६, १) वृषाकपेरार्षेयम्, तत्र इन्द्रस्यैव विश्वतः श्रेष्ठत्वमनुश्राव्यते ।

"रूपंरूपं प्रतिरूपो बभूव०" इत्यस्य मधुविद्यायां इन्द्रस्यैव परब्रह्मात्मकता समुपवर्णिता उपनिषन्मुखेन, (बृ० उ० २, ५, १९) ।

एतस्मात् सर्वस्मादपि महत्तमं विशिष्टतत्त्वोत्तमं ज्ञानमोक्षादिपरमतत्त्वार्थोपदेशपूर्णं अस्यवामीयं सूक्तं सुप्रसिद्धम्, दीर्घतमसार्षेयम्, द्विपञ्चाशदर्चम् ।

"अस्य वामस्य पलितस्य होतुः० —इति (ऋ० १, १६४, १-५२) तथा च सर्वानुक्रमसूत्रम्, "अस्य द्विपञ्चाशद् अल्पस्तवं त्वेतत्, संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्रप्रायेण-ज्ञान-मोक्षाक्षरप्रशंसा च,···संवत्सरसंस्थं कालचक्रवर्णनम्० इत्यादि (स० सू० १, १६४) ॥

तदिदं सूक्तं अथर्वसंहितायामपि किञ्चित्पाठभेदेन मंत्राणां पूर्वापरभावेन च पठितं दृश्यते (अ० सं० ९, ९, १) ॥

तत्र अथर्ववेदे स्कम्भ-मणि-व्रात्यादि सूक्तानि बहूनि अध्यात्मादितत्त्वार्थबहुलानि श्रूयन्ते ।

सोऽयं सर्वोऽप्यभिप्रायः वेदाङ्गनिरुक्ताचार्येण यास्केनापि उपवर्णितः विस्तरशः तत्तदर्थावबोधायेति विदितचरमेव विदुषाम् ।

## ॥ अथ वेदाङ्गतत्त्वविमर्शः ॥

अथर्ववेदीयायां मुण्डकोपनिषदि प्रस्तुतोवेद-वेदाङ्गविचारोपदेशः, तत्र "द्वे विद्ये वेदितव्ये परा चैवापरा च" इति परापराविद्योपदेशप्रस्तावे ऋग्वेदादिभिः चतुर्भिः वेदैः सहैव तदङ्गाना-मपिषण्णां उपदेशः श्रूयते, "तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा-कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति" इति (मु० उ० १, १, ४-५) ।

तान्येतानि वेदाङ्गानि शिक्षादीनि, तद्विषयाश्च शिक्षादि रूपाः वेदेषु-मन्त्रेषु ब्राह्मणा-रण्यकोपनिषदादिषु तत्र तत्र सङ्केतेन उपदिष्टानि विद्यन्ते, न तु पाणिन्यादि प्रणीतं शिक्षादि ग्रन्थमात्रम् इत्येव वक्तुं युक्तम्, अन्यथा उपनिषदादिग्रन्थेभ्योऽपि अर्वाचीनानां एतेषामङ्गानां शिक्षादि ग्रन्थानामुल्लेखनं उपनिषदादिषु असङ्गतमेवेति आपद्येत तत्समर्थने तत्साधने च असामर्थ्यप्रसङ्गः इति, तस्माद् वेदेष्वेव मन्त्र-ब्राह्मणात्मकेषु शिक्षादीनां तदङ्गविषयाणामपि उपदेशसत्त्वं प्रतिष्ठितमिति अवश्यमेवाभ्युपगन्तव्यं भवेत् इति प्रतिज्ञायते ॥

मन्ये सोऽयं सर्वेषामपि शास्त्रचिन्तकानां विशेषतोवेदविदुषां विद्यार्थिनामपि आशङ्का-स्पदीभूतो विशिष्टो विषय एवेति ।

## ॥ वाङ्मुखेनैव वाक्शिक्षणम् ॥

## ॥ अथ शिक्षात्मकं प्रथमं वेदाङ्गम् ॥

शिक्षा—सर्वासां शिक्षाणां मूलं परमं अक्षरमेव, तथा सर्वेषां अक्षराणां अधिष्ठानं परावागेव, तस्याः वाचः सकाशादेवसर्वाण्यपि अक्षराण्याविर्भवन्ति, अक्षरात्मिकायाः वाचो मुखादेव सर्वेषामर्थानां प्रकाशः, परेभ्यस्तदुपदेशः, तथा तेषु तदर्थज्ञानोदयश्च भवितुमर्हति-नान्यथेति वस्तुसिद्धं तत्त्वम्, एवं तदर्थज्ञानस्य आदाने-प्रदाने च वागेव प्रधानं करणम् तदर्थं वाचः शिक्षणमेव सर्वथा शरणम्, तत् तादृशं वाक्शिक्षणमपि वाङमुखेनैव भवितु-मर्हतीति प्रतीयते, तस्मात् तस्याः वाचः उच्चारणादेरभ्यसनमेव शिक्षेत्युच्यते, "शिक्ष् विद्यो-पादाने" इति तदर्थप्रसिद्धेः, अतएव तत्सद्विद्यादि शिक्षणार्थं बुद्धेः परिशीलनमेव प्रधानं साधनमिति गम्यते, तथा च तदनुश्रुतिः—

"इ॒मां धियं॑ शिक्ष॑माणस्य देव॒ क्रतुं॒ दक्षं॑ वरुण॒ सं शि॑शाधि ।
ययाति॒ विश्वा॑ दुरि॒ता तरे॑म सु॒तर्मा॑ण॒मधि॒ नावं॑ रुहेम ॥" इति,

( ऋ० ८, ४२, ३ )

तस्येदं ब्राह्मणानुवचनम्—"क्रतुं दक्षं वरुण संशिशाधीति—वीर्यं प्रज्ञानं मयि शंशि-शाधीत्येवतदाह" इति ।

"सुतर्माणमधि नावं रुहेमेति—अग्निर्वैसुतर्मानौः वाग् वै सुतर्मानौः कृष्णाजिनं वै सुतर्मानौः" इति च, (ऐ० ब्रा० १, १३, २८)

"शिक्षा॑ णो अ॒स्मिन् पु॑रुहूत॒ याम॑नि जी॒वा ज्योति॑रशीमहि" इति च ।

( ऋ० ७, ३२, २६ )

स्पष्टार्थकः शिक्षापरोमन्त्रवर्णः

तस्या वाचः सकाशादेव अक्षराणामाविर्भावोऽपि अनुश्रूयते—

"गौरीर्मिमाय सलिलानि तक्षती० सहस्राक्षरापरमे व्योमन्"

(ऋ० १, १६४, ४१)

इति वाचः अक्षरात्मकता प्रतिज्ञायते, अत्र माध्यमिकावागेव गौरी, "वागेषा माध्यमिका" इति यास्क-निरुक्तम्, तस्याः वाचः अक्षरोदयः ।

"तस्याः समुद्रा अधि वि क्षरन्ति० ।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ।।"

इति तदनुश्रवणम् ।। (ऋ० १, १६४, ४२)

वाचस्तदक्षररूपत्वं गम्यते "वागक्षरं प्रथमजामृतस्य" इति च

(तै० ब्रा० २, ८, ८, ५)

तान्येतान्यक्षराण्येव वर्णा इत्युच्यन्ते,–तैरेव सर्वेऽप्यर्थाः वर्ण्यन्ते इति, तस्मात् शिक्षायाः प्रथममङ्गं तद्वर्णात्मकमेव भवति, तेनैवहि अक्षरेण वर्णरूपेण स्वरः प्रतिक्लृप्तः, स च त्रेधा प्रसिद्धः उदात्तः अनुदात्तः स्वरितश्चेति, वागात्मक एव सः ।

"त्रिधा बद्धो वृषभो रोरवीति"

(ऋ० ४, ५८, ३)

"तिस्रो वाच ईरयति प्र वह्निः०"

(ऋ० ९, ९७, ३४)

"तिस्रो वाचः प्र वद ज्योतिरग्राः"

(ऋ० ७, १०१, १)

इति च तदनुश्रवणम्, स्वर एव द्वितीयमङ्गम्, ते च मात्रात्रययोगेन "ह्रस्व-दीर्घ-प्लुताः प्रसिद्धाः, मात्रैव तृतीयमङ्गम्" प्रातः सवनादिकालसम्बन्धेन मृदु-मध्य-ताररूपाः संपद्यन्ते, तदेतदेवबलमित्युच्यते, तदेतद् बलमेव शिक्षायाः चतुर्थमङ्गं भवति, तस्य स्वरस्यैव उच्चनीचादि ध्वनिभेदेन सप्तधा भेदोऽपि श्रूयते, "अक्षरेण मिमते सप्त वाणीः" इति, (ऋ० १, १६४, २४) ।

ते च षड्जादि संज्ञाभिः परिकल्पिताः छन्दः शास्त्रे प्रसिद्धाः, "स्वराः षड्जऋषभगान्धारमध्यपञ्चमधैवतनिषादाः" इति,

तदेतत् सर्वमपि संक्षेपतः उपदिष्टम्, शीक्षाध्याये तदुपनिषदि साङ्केतिकाभिधानैः ।

"शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ।" इति ।

(तै० उ० १, २)

## ।। अहम्-पदं सर्वप्रत्ययास्पदम् ।।

तानि च सर्वाण्यपि अक्षराणि मूलतः अहंपदे अन्तर्हितानि, सर्वेषामप्यनुभवसिद्धम् यत् खलु अन्तर्हृदये चेतनात्मनः संस्फुरणरूपं सर्वेषां ज्ञानानां आस्पदीभूतम्, सर्वासां धियां

वाचां तद्वर्त्तानां संविदिच्छा-क्रियादिशक्तीनां च मूलमधिष्ठानमिति भावः, तस्मादेव चिदात्मनः अहमिति वाग्रूपात् शब्दात् तत्प्रत्ययाच्च प्रागेव विश्वविसृष्टेः विद्युच्छक्तेर्धमनतः विद्युदात्मनः सकाशात् प्रथमतः सर्वंजगद्बीजरूपः प्रत्यक्षब्रह्मरूपः अक्षर सर्वस्वसमूहः, तथा तद्वाच्यं विश्वमपि आविर्बभूवेति श्रूयते, तथा च बृहस्पतेरार्षेयः ऋङ्मन्त्रवर्णः।

"ब्रह्मणस्पतिरेता संकर्मार इवाधमत्।
देवानां पूर्व्ये युगेऽसतः सदजायत॥" इति,

(ऋ० १०, ७२, २)

स एव सर्व वाङ्मूलभूतः अक्षरसमाम्नायः भगवतः रुद्रस्य डमरोर्निनादेन आविर्बभूवेति अभिमन्यते, स एवायं आदिभूतः अक्षर समाम्नायः श्रूयते, अनूद्यते च वेदशास्त्रविद्भिः, "अ इ उ ण्। ऋ ऌ क्। ए ओ ङ्। ऐ औ च्। ह य व र ट्। ल ण्। ञ म ङ ण न म्। झ भ ञ्। घ ढ ध ष्। ज ब ग ड द श्। ख फ छ ठ थ चटत व्। क प य्। श ष स र्। हल्। इति माहेश्वराणि सूत्राणि॥ इति इदं सुप्रसिद्धमेव, तस्मिन् अक्षरसमाम्नाये अन्तर्हितानां आकाशदीना—"द्युमाँ अह" (ऋ०) "आदह स्वधामन"(ऋ०) तदिदं सर्वार्थाभिलक्ष्यकं प्रसिद्धम्। तत्र—विश्वाधिष्ठानभूतेन पूर्णबिन्दुना योगेन "अहम् इति पदं संपद्यते, तस्मात् सर्वासां वाचां अक्षराणां, तदर्थानां तत्प्रत्ययानां च मूलभूतं तत् परमं पदमिति सर्वाभिमतं संगच्छते, तथा च वाचः आम्भृण्याः आर्षेयं ऋङ्मन्त्रदर्शनम्—

"अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव॥" इति,

(ऋ० १०, १२५, ८)

एतेन अहमितिचेतनासत्त्वस्फुरणात्मिका सा परा वागेव विश्वजगद्बीजरूपा अक्षरात्मिका प्रत्यक्षब्रह्मरूपा, तथा तस्याः एव वाचः विश्वेषां वर्णानामाविर्भावः, तदक्षररूपायाः वाचः एव विश्वेषां जगतां विसृष्टिरपि बभूवेति अर्थः संपद्यते।

तदुच्चारणं च कण्ठतालुजिह्वौष्ठदन्तादीनां संयोगेनैव भवितुमर्हति, तदर्थावबोधकोऽयं श्लोकः आरण्यक ब्राह्मणान्तर्गतः अनुश्रूयते, "ओष्ठापिधाना नकुली दन्तैः परिवृता पविः। सर्वस्यै वाच ईशाना चारु मामि वादयेदिति वाग्रसः, (ऐ० आ० ३, २, ५)

"देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति"

(ऋ० ८, १००, ११)

"तुरीयं वाचो मनुष्या वदन्ति"

(ऋ० १, १६४, ४५)

"त्रिधा बद्धो वृषभो रोरवीति"

(ऋ० ४, ५८, ३)

इति श्रुतः स वैद्युताग्निस्वरूपो रुद्रः सर्वेषां अन्तर्हृदये सवसन् जिह्वायां स्वपन् तां स्वीयां वाचमुच्चरतीति गम्यते।

"अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया ।
गृभ्णन्ति जिह्वया ससम् ॥"

इति तदनुश्रवणम् (ऋ० ८, ७२, ३)

वागुच्चारणादिविधीनां पद्धतिः, तच्छिक्षा च मन्त्र-ब्राह्मणोपनिषदादिषु तत्र तत्र विस्तरशः क्वचिद् गुप्तार्थतः समर्थिताऽस्ति सूक्ष्मरूपेण, तन्मन्त्रादिव्याख्यानमुखेन ।

"व्याख्यानाद् विशेषार्थप्रतिपत्तिः" इति न्यायेन अक्षरसमाम्नायस्य तन्मूलभूतस्य वेदस्य च संशोधनेन प्राचीनो मुनिः पाणिनिः चतुःषष्टिं वर्णान् कल्पयामास वेदमन्त्रोच्चारादिशिक्षार्थम् ।

"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयम्प्रोक्ताः स्वयम्भुवा ॥"

इति, (पा० शि० २ )

ते च चतुःषष्टिवर्णाः उपवर्णिताः ।

"स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्चस्मृताह्यष्टौ चत्वारश्चयमाः स्मृताः ॥"
अनुस्वारोविसर्गश्चᳵकᳶपौचापि पराश्रुतौ ।
दुस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ इति च ॥

## (२) ॥ कल्पः ॥

वेदमन्त्राणां यज्ञादिषु विनियोगार्थकः कल्पः, कल्प्यते इति कल्पः इति व्युत्पत्त्या सिद्धः, सोऽपि मूलतः मन्त्रेष्वेवास्ति, "तदेतत् सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि, तान्याचरथ नियतं सत्यकामाः, एष वः पन्थाः सुकृतस्य लोके" इति (मुं० उ० १, २, १) उपनिषद्वचनात्, ऋगादि मन्त्रेष्वेव कल्पः समर्थितः, यः ब्राह्मणादिमुखेन स्पष्टार्थतया विधिनिषेधादिरूपेण कल्पितः ।

अत्र त्रेतायां वहुधा सन्ततानीत्यस्य" त्रय्यां इति अर्थः वास्तविकः, मन्त्रेषु इति तत्समानार्थेन निर्देशात् ।

तथा च तदनुश्रवणं स्पष्टतरमेवास्ति ।

"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्"

इति, (ऋ० १०, ९०, १६)

सुप्रसिद्धम्, यज्ञकल्पानुवचनम्, "तानिधर्माणि प्रथमान्यासन्" इति च तेषां प्रथम कर्तव्यतया विधानार्थकत्वात् ।

स च यज्ञः अग्निमुखेनैव सिध्यतीति प्रतीयते, तदनुवचनं स्पष्टार्थकम् ।

"अग्निर्विद्वान् त्स यजात् सेदु होता सो अध्वरान् त्स ऋतून् कल्पयाति"

इति ( ऋ० १०, २, ३

"इमं नो अग्न उप यज्ञमेहि पञ्चयामं त्रिवृतं सप्ततन्तुम्"

इति च ( ऋ० १०, १२४, १ )

ते च यज्ञाः हविर्द्रव्यादिसाध्याः बाह्याः बहुविधा भवन्ति, तथा अध्यात्मतत्त्वविशिष्टाः धीयोगादिसाध्या आन्तर्याश्च, अत्र बाह्यः हविर्यज्ञः–तस्य अग्निमुखेनैव सिद्धि सम्भवात्, प्रथमतः तदग्निमथनादिना तदग्निसिद्धः कल्पिता मन्त्रमुखेनैव, तथा च तद्विधिः स्पष्ट मनुश्रुयते—

"मन्थता नरः कविमद्वयन्तं प्रचेतसममृतं सुप्रतीकम् ।
यज्ञस्य केतुं प्रथमं पुरस्तादग्निं नरो जनयता सुशेवम् ॥"

इति (ऋ० ३, २९, ५)

तच्च अग्निमथनं अरणीभ्यामेव भवितुं अर्हति, कर्तुं युक्तम् इति च गम्यते ।

"अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥"

इति, (ऋ० ३, २९, २)

सोऽयमग्निरणीभ्यां मथ्यमानोऽपि मूलतः दिव्याद् ज्योतिरात्मनः आदित्यादेव जायते इति तत्त्वदृष्टया अग्निमथने प्रवृत्ताः आदित्यस्यैव अंशरूपं भौममग्निं कामयमानाः सन्तः तदर्थं अमुं आदित्यमेव प्रार्थयन्ते, तथा च शुनःशेपार्षेयं ऋङ्मन्त्रदर्शनम् ।

"अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन् भागमीमहे ॥"
"मूर्धानं राय आरभे"

इति तृचम् (ऋ० १, २४, ३-५)

तदेतदेव मन्त्रार्थसिद्धं तत्त्वमनुविद्य अग्निमथने प्रथमत एव तद्विधानं कल्पितम् ब्राह्मणमुखेन ।

"अग्नये मथ्यमानायानुब्रूहीत्याहाध्वर्युः
अभि त्वा देव सवितुरिति सावित्रीमन्वाह ॥"

इति (ऐ० ब्रा० १।१६)

तत्रैवेदं विचिकित्सितं च अग्निमथने प्रवृत्तस्य किमिति सवितुः मन्त्रेण तदनुस्तवनं विहितमिति, "तदाहुर्यदध्वर्युरग्नये मथ्यमानायानुवाचाह अथ कस्मात् सावित्रीमन्वाहेति" ततः समाहितं च तत् "सवितृप्रसूतोह्येष इति" इति, (ऐ० ब्रा० १, १६)

अत्र "सदावन् भागमीमहे" इत्येतेनैवेदं सिध्यति-सवितुरेवांशरूपोऽय मग्निरिति ।

एवमेव अरणीभ्यां मथ्यमानोऽपि सोऽग्निः वस्तुतः द्यावापृथिवीभ्यामेव आदिसृष्टौ सम्बभूव, तथैव इदानीमपि ताभ्यामेव जायते इति तद्दैवत्यो मन्त्र एव विनियुज्यते, औचित्यात् ।

"मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥" इति

( ऋ० १, २२, १३ )

अत्र तयोररण्योः द्यावा पृथिवीसत्त्व कृप्तिरपि मन्त्रार्थसिद्धेवेति गम्यते, तद्ब्राह्मणं च—"अथकस्माद् द्यावा पृथिवीयामान्वाहेति द्यावा पृथिवीभ्यामेवैतं जातं देवाः पर्यगृह्णन् सोऽद्यापि परिगृहीतः" इति, तत्कल्पनादिहेतुप्रदर्शनम् ।

तस्याग्नेर्वेदौ प्रतिष्ठापनमपि मन्त्रेणैव क्लृप्तम्, पृथिव्यावेदिरूपत्वेक्लृप्ते। ।

"इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।"

इति ( ऋ० १, १६४, ३५ )

"वेदिमाहुः परमन्तं पृथिव्याः यज्ञमाहुर्भुवनस्य नाभिम्"

इति (तै० सं० ७, ४, १८, २)

तस्य पुरोहितत्वं पुरतः संस्थापनमपि मन्त्रक्लृप्तमेव ।

"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।"

(ऋ० १, १, १)

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आसादयादिह ।"

इति (ऋ० ८, ४४, ३)

अग्नेरेव देवताह्वानकर्तृत्वाद् होतृत्वम्, ताभ्योदेवताभ्यः हवि प्रदातृत्वं च, "अग्ने देवाँ इहावह०" (ऋ० १, १२, ३) "स देवाँ एह वक्षति" इति च (ऋ० १, १, २)

सर्वेषां देवानामर्थेअग्नावेव हविर्हवनम्—

"यच्चिद्धि शश्वता तना देवंदेवं यजामहे ।
त्वे इद्धूयते हविः ॥" इति ।

( ऋ० १, २६, ६ )

सोऽयमग्निरेव यष्टा स्वयं यजमानः सन् अस्मदादिभिः समर्पितैर्हविर्द्रव्यैः दिव्यान् देवान् यजते ।

"त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उता परं यक्षि देवान्त्सुवीर्या ॥"

इति (ऋ० १, ३६, ६)

एवं सर्वेषामपि देवानां इन्द्रादित्यादीनां कृते अग्निमुखे एव हविर्हवनं विहितम् मन्त्र मुखेनैव ।

"मित्राय हव्यं घृतवज्जुहोत"

इति ( ऋ० ३, ५९, १ )

"सत्याय॑ ह॒व्यं घृ॒तव॑ज्जुहोत"

इति ( तै० सं ३, ४, ११, ५)

"अग्नौ मित्राय हविरा जुहोत" इति च (ऋ० ३, ५९, ५)

एत एव समिधादिभिः दुग्ध–घृतादिभिर्हविर्भिः नमस्कारादिना च वेदमन्त्रैर्यज्ञः सम्पद्यते इति श्रूयते, तद्विधानम्—

"यः स॒मिधा॒ य आहु॑ती यो वेदे॑न द॒दाश॒ मर्तो॑ अ॒ग्नये॑ ।
यो नम॑सा स्वध्व॒रः ॥"

इति, (ऋ० ८, १९, ५)

तस्येदमुपव्याख्यानम्—"उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः—
प्रत्यक्षतः तद्विधिवचनमपि मन्त्रेष्वेव विद्यते ।

"स॒मिधा॒ऽग्निं दु॑वस्यत घृ॒तैर्बो॑धय॒ताति॑थिम् ।
आऽस्मि॑न् ह॒व्या जु॑होतन ॥"

इति, ( ऋ० ८, ४४, १ )

"सुस॑मिद्धाय शो॒चिषे॑ घृ॒तं ती॒व्रं जु॑होतन ।
अ॒ग्नये॑ जा॒तवे॑दसे ॥"

इति च (ऋ० ५, ५, १)

अत्र "दुवस्यत, हव्या जुहोतन, घृतं तीव्रं जुहोतन" इत्यादिभिः लिङन्तैर्मध्यम पुरुषबहुवचनपरैः एतेषां साक्षाद् विध्यर्थकत्वेनोपदिष्टत्वात् वेदमन्त्रेषु तद्विधानं नास्तीतिवचनं निर्मूलमेवेति युज्यते वक्तुम्, एतादृशकल्पनाया निरवकाशत्वात्, अथवा वेदमन्त्रमुखानवलोकन-प्रयुक्तम्, मन्त्रार्थाद्यनवबोधनिमित्तकमेवेति प्रतीयते ।

"मन्थतानरः, अग्निं नरो जनयत" इत्यादिभिः स्पष्टं विधिमुखेन तदनुशासनादि रूपार्थानुश्रवणम्, वेद्यलङ्करणादिकमपि मन्त्रमुखेनैव विधीयते ।

"अरं॑ कृण्वन्तु॒ वेदिं॑ स॒मग्निमि॑न्धतां पु॒रः"

इति, (ऋ० १, १७०, ४)

अत्र कृण्वन्तु इति लोट् प्रयोगस्यापि विधानार्थकत्वं न निवारयितुं शक्यम्, "विधिनिमन्त्रणामन्त्रणाभीष्ट सम्प्रश्नप्रार्थनेषु लिङ्" (पा० सू० ३, ३, १६१) "लोट् च" (पा० सू० ३।३।१६२) इति शब्दशास्त्रसम्मतत्त्वात् ।

अपि च "आग्नेयमष्टाकपालं निर्वपति" इति वर्तमानकालिकलट्प्रयोगेऽपि साक्षाद् विधिकल्पके ब्राह्मणग्रन्थेऽपि तस्य निर्वपेत् इति विधानार्थकत्वमेव युक्तं इति निर्णीतं मीमांसायाम्, तद्वदेव उत्तमपुरुषेऽपि तत् समानमेव "यज्ञं ते तनवावहै" (ऋ० १, १७०, ४)

"यजा॑म दे॒वान् यदि॑ श॒क्नवा॑म"

(ऋ० १, २७, १३)

यज्ञियान् हन्त देवाँ ईळामहा ईड्याँ आज्येन"

(ऋ० १०, ५३, २)

इत्यादयः सहस्रशो मन्त्राः वेदेषु प्रत्यक्षमेवोपलभ्यन्ते ।

"समिधाजातवेदसे० हविर्भिः शुक्रशोचिषे नमस्विनो वयं दाशेमाग्नये"

इति (ऋ० ७, १४, १)

"यज्ञेन वर्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा"

इति च (ऋ० २, २, १ )

साक्षादेव हविर्यज्ञविधानम् ।

"यजध्वैनं प्रियमेधा इन्द्रं सत्राचा मनसा"

इति च ( ऋ० ८, २, ३७)

तेन वेदमन्त्रेषु ईश्वरीय सृष्टियज्ञ एव विद्यते न तु हविर्यज्ञादिकं इति वचनमपि निर्मूलं वेदार्थाद्यज्ञानमूलकमेवेति प्रति ज्ञायते ।

अथवा बाह्यदृष्टीनां केवलं भौतिकदृशां परितोषेण प्रशंसापत्रपारितोषकादि प्राप्त्यर्थं स्वकपोलकल्पितमेवेति गम्यते ।

वेदमन्त्रेष्वेव सोमादिहवनमपि विहितं दृश्यते, सोमाभिषवादिकं च ।

"इन्द्राय सोमं यज्यवो जुहोत"

इति ( ऋ० २, १४, ८)

"इन्द्रायेन्दुं पुनीतन" (ऋ० ९, ६२, २९)

"अथो इन्द्राय पातवे सुनु सोममुलूखल"

इति च, (ऋ० १, २८, ६) ।

एवमेव हविषां हवने स्वाहाकारः, वषट्कारः, स्वधाकारादयश्च मन्त्रेष्वेव श्रूयन्ते विधिमुखेनोपदिष्टा ।

"इन्द्रायेन्दुं पुनीतन" (ऋ० ९. ६२, २९,)

"स्वाहाऽग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः ।

स्वाहा देवेभ्यो हविः ॥" इति च (ऋ० ५, ५, ११ )

"स्वाहाकृतंहि वरदन्तु देवाः"

( ऋ० १०, ११०, ११)

स्वधां पीपाय सुभ्वन्नमत्ति"

इति च, ( ऋ० २, ३५, ७)

स्वधया चित्सुनस्याऽग्नेवी पाहि जिह्वया यजत्रम् ।

( ऋ० ३, ३५, १०)

"स्वाहान्ये स्वधयान्ये मदन्ति"

इति च, (ऋ० १०, १४, ३)

"वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्"

इति, (ऋ० ७, ९९, ७)

**हविषां हवने वषट्कारो विहितः इति गम्यते, तथा** "वौषडिति वषट्करोति" **(ऐ० ब्रा० ३, ६) इति ब्राह्मणे विधानात् वषट्कारस्य वौषडिति रूपमनुश्रूयते ।**

**यथा** "श्रावयेत्याश्रावयन्ति" (शि० उ० १, ७)

**इति आश्रावय-इत्यस्य स्थाने ओश्रावय इति अध्वर्योः प्रैषवचनम्, शुक्लेयजुषीति तु** "आश्रावय" **इत्येव स प्रैषः प्रसिद्धः अनुष्ठीयते, तेषां तेषामुपव्याख्यानम्**—"वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः । १स्वाहाकारो २वषट्कारो ३हन्तकारः ४स्वधाकारः, तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकार पितरः तस्याः प्राण ऋषभो मनो वत्सः" **इति, (बृ० उ० ५, ८, १)**

**अत्र स्वाहाकारः सामान्यतः सर्वत्रापि यज्ञेषु मन्त्रान्ते प्रयुज्यते, स च प्रसिद्ध एव, वषट् कारस्तु श्रौते यज्ञे ऋङ्मन्त्रान्ते होत्रैव प्रयुज्यते,** तदा **अध्वर्युणा हविर्हूयते इत्येव विशेषः,**

"वषट् कृतेजुहोति" **इति तद्विहितम्, तद्वत्-होतृवर्गीयाः मैत्रावरुणप्रभृतयोऽपि प्रयोक्तुमर्हन्ति तं वषट्कारं सोमहवने ।**

**तद्यथा**—अग्निं स्विष्टकृतं य३ज—**इत्यध्वर्युणा प्रेषितः होता**—"ये ३यजामहेऽग्निंस्विष्टकृतमयालग्निरग्नेः प्रियाधामानि० इत्मादि–**निगदं पठित्वा अन्ते ।**

"अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्या३वौषट् ॥"

**इति वषट्कारं प्रयुङ्क्ते, (ऋ० ६, १५, १४) अन्येषु होमेषु निगदं विना-केवलं ऋङ्मन्त्रं पठन् वषट्कारं प्रयुङ्क्ते,** "अग्निय३ज" **इति प्रैषे**—

"ये३यजामहेऽग्निं भुवो यज्ञस्य रज श्च नेता यत्रासनियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहँवौषट् ॥" **इति,**

(शु० यजु० १९, २४)

**अत्र सर्वत्रापि एते ऋङ्मन्त्राः स्वररहिताः एकश्रुत्यैवहोत्रादिभिः विनियुज्यन्ते,** "ता एकश्रुति सन्ततमनुब्रूयात्" **इति विशिष्ट विधानात् ।**

**श्रौतेकल्पे चातुर्मास्ययागे पित्र्येष्टौ ऋङ्मन्त्रान्ते वषट्कारस्य स्थाने स्वधाकारो विहितः, स च** "स्व३धानमः" **इति** होत्राप्रयुज्यते ।

**एवमेव नमस्कारेणापि यज्ञः सिध्यति,** "नमोभिर्देवमसुरं दुवस्य" **इति (ऋ० ५, ४२, ११)** "यो नमसा स्वध्वरः" **(ऋ०, ८, १९, ५) इति च तदनुश्रवणम् ।**

**अतएव कृष्ण यजुर्वेदे भगवतः** रुद्रस्य **केवलं नमस्काररूपं यजनं मन्त्रमुखेनोपदिष्टं श्रूयते ।**

"नमस्ते रुद्र मन्यवऽउतो तऽइषवे नमः ।
नमस्ते अस्तु धन्वने बाहुभ्यां मुतते नमः ॥" (तै० सं० ४, ५, १, १)

इत्यादितः समग्रः रुद्राध्यायः त्रिशतादधिकानमस्काराः श्रूयन्ते,ऋङ्मन्त्रेषु रुद्रसूक्ते तदस्ति—

"मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते"

इति, (ऋ० १, ११४, २)

एवमादीन् यज्ञीयान् विधीन् मूलभूतान् ऋगादि मन्त्रोपदिष्टानेव अनुलक्ष्य यज्ञादीन् सानुक्रमान् ब्राह्मणादि मुखेन कल्पयामासुः पूर्वे ऋषयः, तत् सर्वमपि ब्राह्मणादिग्रन्थेषु विस्तरशः समर्थितं सुप्रसिद्धमेव, अत्र तु तद् दिग्दर्शनमात्रं यत् किञ्चिदेव प्रतिपादितम् ।

तं च ब्राह्मणकल्पमेवानुसृत्य उत्तरत्र कल्पसूत्रं श्रौतं गृह्यसूत्रादिकं च स्मार्तकल्परूपं पश्चाद् रचयामासुः इति स्पष्टं प्रतीयते, तत एव ब्राह्मण-श्रौतसूत्र-गृह्यसूत्रादीनामेव कल्पत्वेन प्रसिद्धिरभवत् इत्यपि गम्यते ।

॥ आन्तर्यौतपो-योग-ज्ञान-ध्यानादि यज्ञाः ॥

अथ ब्राह्मणेषूपनिषत्सु वेदमन्त्रेष्वपि बाह्यद्रव्य यज्ञादिवत् आन्तर्यः ज्ञानादि यज्ञोऽपि उपदिष्टः श्रूयते, स च विधिमुखेन, क्वचिद् विपरीतेन निषेधमुखेन ।

तथा च ऋङ्मन्त्रेषु धीयोगविधिः ।

"यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।<br>स धीनां योगमिन्वति ॥"

(ऋ० १, १८, ७)

स्पष्टतरमेव धीयोगस्य श्रवणम्, स च "भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" (ऋ० ३, ६२, १०) इति सवितुर्देवस्य ज्योतिर्ध्यानं तथा तदाश्रयणेन तत्र प्रतिष्ठानं च अनुश्रूयते, अत्र यद्यपि उत्तमपुरुषबहुवचनमस्ति तस्य विधानमुखेन ग्रहणात् ध्यायेदित्यर्थोऽपि, अर्थात् सिध्यति, उपनिषत्सु विधिमुखेनैवोपदेशोऽस्ति, "ओमित्येवं ध्यायथ आत्मानम्" (मु० उ० २, २, ५) इति ।

तथा निषेधमुखेन व्यतिरेकतोऽपि विपितं मौनथितिरूपम्, "अन्या वाचो विमुञ्चथ" इति, (मु० २, २, ५) "नानुध्यायाद् बहूञ्छद्बान् वाचो विग्लापनँहि तत्" इति च, (बृ० ४, ४, २१)

"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य मौनेन तिष्ठासेत्" पाण्डित्यं च मौनं च निर्विद्य बाल्येन तिष्ठासेत्" इति, (बृ० ३, ५, १)

"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेनवेद्धव्यम्० मु० उ० २, २, ४ इत्यादीनि विधानानिध्यानयज्ञस्य बोधकानि, तत्कल्परूपाणि, ज्ञानयज्ञस्यापि तथा विधानुश्रवणम् ।

"ऋचो अक्षरे परमे व्योमन् य इत् तद् विदुस्त इमे समासते"

इति, ( ऋ० १, १६४, ३९ )

ताटस्थ्येन तदुपदेशः, तदिह एतादृशेनोपदेशेन तदक्षरं विधात्, तेन अमृतत्वं प्राप्नुयात्

इति अर्थः सम्पद्यते, "विद्ययाऽमृतमश्नुते, (ई० उ० ११) "विद्यया विन्दतेऽमृतम्" इति च (केन उ० २, ४) इत्यादिवत् उपासनाया अपि विधानमस्ति तत्कल्परूपताबोधकम्।

"देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः।
नमस्यन्ति धियेषिताः॥"

इति (ऋ० ३, ६२,१२)

एतेनैव "अहरहः सन्ध्यामुपासीत" इत्यादिकं प्रत्यक्षं विधानं कल्पितं ब्राह्मणमुखेनेति प्रतीयते। तद् यथा—

"उप त्वाऽग्ने दिवेदिवे दोषावस्तर्धिया वयम्।
नमो भरन्त एमसि॥"

इति, (ऋ० १, १, ७)

अस्मिन् मन्त्रे प्रतिदिनं सायंप्रातश्च नमः—नमस्कारपूर्वकं सर्वधीन्द्रियनमनरूपं, हविर्द्रव्यं च समर्पयन्तः त्वां उपैमहि इति ताटस्थ्येन निर्देशेऽपि तत्र तद्विधानार्थत्वमन्तर्हितमेव, तदेतदेव अग्निहोत्रादिविधेर्मूलभूतं मन्त्रवचनम्, "सायं प्रातरग्निहोत्रं जुहुयात्" इत्यादेः, इति कल्पते।

धीयोगस्यापि तद्वदेव विधानम्, "यस्यादृते न सिध्यति० स धीनां योगमिन्वति" इति, (ऋ० १, १८, ७) अनेन धीयोगेनैव आन्तर्यं आध्यात्मकं यज्ञं साधयेत्, तेन विपश्चितो यज्ञस्य अर्थाद्विद्वद्यज्ञस्य तत्त्वं उपदिष्टं गम्यते।

तेन च धीयोगेन आत्मनः साक्षात्कारं सम्पादयेदित्यर्थः सम्पद्यते, तस्यैव विपश्चिद्यज्ञस्य अनुवादकं औपनिषदं ब्राह्मणानुवचनम्, "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी० इत्यादि—दक्षिणा वाग् होता प्राणउद्‌गाता चक्षुरध्वर्युर्मनोब्रह्माश्रोत्रमग्नीद् यावद् ध्रियते सादीक्षा० इत्यादि-(ना० उ० २५)

अत्र आत्मनः अनुभूति रूपं तद्विज्ञानमेव हवनात्मकं यज्ञस्वरूपम् इत्यपि अनुश्रूयते "यदस्य विज्ञानं तज्जुहोति०-इत्यादि, तथा अन्यत्रापि—

"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ॥

इति, (क० उ० ६, १०-११)

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम्"
ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव, (क० उ० ६, १८)
इत्यादि प्रसिद्धं औपनिषदं तत्त्वम्।

## अप्रमादात्मकयोगविधि कल्पः।

एवमेव आध्यात्मनिष्ठात्मकः अप्रमादरूपो योगः तत्कल्पश्च ऋङ्मन्त्रोपदिष्टः अनुश्रूयते।

"यो जागार तमृचः कामयन्ते०"

(ऋ० ५, ४४, १४)

"तद् विप्रासो विपन्यवो जागृवाँसः समिन्धते।
विष्णोर्यत् परमं पदम्॥"

इति, (ऋ० १, २२, २१)

"संजागृवद्भिर्जरमाण इध्यसे०"

(ऋ० १०, ९१, १)

"त्वे रयिं जागृवांसो अनु०"

(ऋ० ६, १, ३ ) इत्यादि,

सोऽयमेव योगः उपनिषत्सु विहितः।

"अप्रमत्तेन वेद्धव्यम्०"

(मुं० उ० २, २, ४)

"अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ"

(क० उ० ६, ११) इति च.

"धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संधयीत।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि॥"

इति, (मुं० उ० २, २, ३)

"सत्यान्न प्रमदितव्यम्।
धर्मान्न प्रमदितव्यम्॥
कुशलान्न प्रमदितव्यम्।
भूत्यैर्न प्रमदितव्यम्।
स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्॥"

(इति च, तै० उ० १, ११)

सक्षात् निषेधमुखेन तद्विधिकल्पः।

एवं केवलं वाक् संयमयोगः ऋङ्मन्त्रोपदिष्टः विधिमुखेन।

"प्रतीचीं जाग्रभा वाचमश्वं रशनया यथा"

इति, (ऋ० १०, १८, १४)

तथा निषेधमुखेनापितदुपदेशः तद्विधिसहकृतः।

"चतुरश्चिद् ददमानाद् बिभीयादा निधातोः।
न दुरुक्ताय स्पृहयेत्॥"

इति, (ऋ० १, ४१, ९)

तदर्थानुवादकमेवेदं स्मृतिवचनं कल्प प्रतिक्लृप्तं सुप्रसिद्धम्, तथा च मनुः—"सप्त द्वाराऽवकीर्णां च न वाचमनृतां वदेत्। इति, एवमादीनि ज्ञानोपासना धीयोगविद्यादि

कल्परूपाणि सहस्रशः वेदोपनिषदादिषु श्रूयन्ते, तत्सर्वमपि "साक्षात्कारयोगसुधायाम्" मया उपन्यस्तानि स्वातन्त्र्येण तत्तद्विषय प्राधान्येन, इति संक्षेपः ।

## व्याकरणम्—३

"व्याकरणं" नाम वाचः विशेषेण आकरणम्, अक्षरात्मिकयाः शब्दस्वरूपायाः वाचः ज्ञानेन मनसा सह समुच्चारणम्, येन तदुच्चारमात्रेण स्वं ज्ञानं प्रकाशयितुं अन्येभ्योऽपि बोधयितुं प्रभवेत् मनुष्यः, तथा तदनुश्रवणेन अन्येऽपि तदर्थं विज्ञातुं शक्नुयुरिति, येनैवहि लौकिकावैदिकाः प्रापञ्चिकाः पारमार्थिकाः सर्वेऽपि व्यवहाराः प्रवर्तन्ते, तथा निर्वर्तयितुं शक्यन्ते, तदिदं व्याकरणस्य स्वरूप-निमित्त-फलादि सत्त्व विशिष्टं भाषात्मकं तत्त्वम् ।

तदेतदपि वेदमन्त्रेष्वेव तत्र तत्र गुप्तं व्यक्तं च समुपलभ्यते, तथा च ऋङ्मन्त्रवर्णः आदित एव यथार्थतः उपवर्णितः ।

"सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि ॥"

इति, (ऋ० १०, ७१, २)

अत्र मनसा प्रपूतां तां सत्यादितत्त्वपूर्णां शास्त्रविशुद्धां वाचमनुसृत्य तदर्थं जानन्ति ज्ञातुं प्रभवन्ति, अन्येऽपि तत्तदर्थविदः संपद्यन्ते तद्वाङ्मुखेनैवेति भावः, तस्मात् तदर्थज्ञान-प्रकाशनसमर्था सर्वलक्षण सम्पन्ना ज्ञानादि गुणात्मिका लक्ष्मीः काचित् पराशक्तिः तस्यां वाचि प्रतिनिष्ठतीति निर्गलितोऽर्थः, तदेतत् परस्याः वाचः जिह्वाद्वारा मुखात् निर्गतं चतुर्थं पदं व्यक्तस्वरूपमिति अनुश्रूयते—"तुरीयं वाचो मनुष्या वदन्ति" इति, (ऋ० १, १६४, ४५)

'देवीं वाचमजयन्त देवास्तां विश्वरूपाः पशवो वदन्ति"

इति च, (ऋ० ८, १००, ११)

केनचित् नित्यसिद्धेन सङ्केतेन प्रपन्नां तां दिव्यां नित्यसिद्धां वाणीं आन्तर्येण तपसा प्रादुर्भावयामासुः देवास्ते देवतात्मानः विपश्चितः सर्ववाग्वस्तुसंवित्सम्पन्ना इति, तामेव अनुसृत्य सर्वे प्राणिनः स्वस्वभावोद्दिष्टां वाचं वदन्ति, तस्मात् सा वागेव परस्परज्ञान-भावादभ्युदयसमर्था विश्वाधिराज्ञी स्वयं स्वीयमर्थमनु दति, वाच्येव तस्यां सा वाचकात्मिका काचित् पराशक्तिरस्तीति भावः ।

"यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥

इति, (ऋ० ८, १००, १०)

छन्दो दर्शनेऽपि तदनुश्रवणं स्पष्टार्थकं भवति ।

"वाचं देवी मृतवतीमनु ब्रवीमि मनसा ।
या देवी ब्रह्मणस्पतेरेकपदी या बृहती ॥"

इति, (छ० द०, अनु० २, १, १)

"इदं पदं ते तुरीय मनु ब्रवीमि जिह्वया"

इति च, (छं० द० २, १, ७)

तदर्थानुवादकं पदम् तदेतत् स्वार्थ-परार्थादि प्रत्यायन सामर्थ्यं वाचः यत् खलु व्याकरण-मिति पदेन निरुच्यते, अतएव—

"न दुरुक्ताय स्पृहयेत्"

इति तदुपदेशः शासनमुखेन संगच्छते, (ऋ० १, ४१, ९) "सत्य पूतां वदेद् वाचम्" "शास्त्रपूता वदेद् वाचम्" इति च स्मृतिमुखेन तद्विधानमुपपद्यते।

एवं शास्त्रीयां सत्यात्मिकां तां दिव्यां वाचमेव अनुवादयितुं तस्याः वाग्देवतायाः अभ्यर्थनं प्राचामृषीणां संगच्छते।

"ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।
सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः॥"

इति (ऐ० आ० ३, २, ५)

तदेतद् व्याकरण तत्त्वं मन्त्रेषु ब्राह्मणारण्यकोपनिषदादिषु बहुधा समर्थितमुपलभ्यते, तच्च स्वतन्त्रतया पृथगेव लिखितुं युक्ततरं मन्ये।

अथ तानेव वेदे विद्यमानान् शब्दान् अनुदृश्य तत्सङ्केतं तत्त्वं च विज्ञाय परिशुद्धोच्चारादिमुखेन वाग्व्यवहारादिसिद्धये पाणिन्यादयो मुनयः तथाऽन्येऽपि पूर्वे आचार्याः वाक् तत्त्वस्य संशोधनेन तन्नियमार्थं सूत्रयामासुः' दर्शयामासुश्चत दुच्चारादि पद्धतिम् इति सुप्रसिद्ध-मेव, तथा वेदमन्त्रादिषु ब्राह्मणादिषु च विद्यमानं शब्द स्वरूपं अवलोक्य तदनुरोधेन भाषां कल्पयामासुः, या इदानीं देवभाषेति कथ्यते, तस्याः देवभाषायाः अपि मूलं स्थानं वेदवागेवेति न किञ्चिद् विशेषतः वक्तव्यमस्ति, नापि पुर्नविवादास्पदं किञ्चिदस्ति, यत्र पाणिनिरपि "बहुलं छन्दसि" (अ० सू० २।४।७३) "बहुलं छन्दसि" ( ३, २, ८८ ) "छन्दस्युभयथा" (६।४।५) इत्यादि सूत्रैः तदेव समर्थयामास, तत्रापि मन्त्रे क्वचित् कञ्चिद् विशेषमपि दर्शयति, "जनितामन्त्रे" (अ० सू० ६।४।५३) "मन्त्रेधस"।

तत्र "जनी प्रादुर्भावे" इत्यस्य प्रेरणार्थे चुरादिदशमगणस्य णिजन्त प्रत्ययात्" जनयति 'इति रूपं देववाण्यां निर्धारितम्, तच्च वेदवाण्यामपि प्रायः तथैवास्ति तत्समानम्, "जनयन् द्यामुषासम्०" (ऋ० १, ३२, ४) "उरुज्योतिर्जनयन्नार्याय" (ऋ० ७, ५, ६) "देवीं वाचमजनयन्त देवाः" (ऋ० ८, १००, ११) इत्यादीनि क्वचिदेव "जनिता" इत्येव रूपं मन्त्रेष्वेव दृश्यते, न तु ब्राह्मणादौ, तद्यथा—

"सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥"

इति, (ऋ० ९, ९६, ५)

अस्मिन् एकस्मिन् मन्त्रे सप्तवारं जनिता इति शब्दः पठितोऽस्ति, तथा अन्यत्रापि।

"जनिताऽश्वानां जनिता गवामसि"

इति, (ऋ० ८, ३६, ५)

## ( ४ ) ।। निरुक्तम् ।।

वैदिकानां शब्दानां यथार्थावबोधार्थं यन्निर्वचनं तदेव निरुक्तमित्युच्यते, शब्दार्थ-प्रत्यय परिचायकं वचनमेव निरुक्तमिति यावत्, तथा च औपनिषद्तत्त्वविमर्शने अध्यात्म-वस्तुनिर्वचनं निरुक्तशब्दमुखेनैव प्रतिपादितमनुश्रूयते, सेवा एष आत्मा हृदि—

"तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति"

(छां० उ० ८, ३, ३)

"हृदि ह्येष आत्मा" (प्र० उ० ३ ,६)

इत्यपि तदनुश्रवणम्, ।

एतन्मूलभूतः ऋङ्मन्त्रवर्णः ।

"त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश"

(ऋ० ४, ५८, ३)

"अमर्त्यो मर्त्यां॑ऽआविवेश"

(ऋ० ८, ४८, १२)

"जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः"

(ऋ० १, १६४, ३०)

"न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव"

(ऋ० १०, ८२, ७, )

"अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया"

इति च (ऋ० ८, ७२, ३)

एवमेव तस्यास्य अन्तरात्मनो रुद्रस्य हृद्रूपत्वमपि अनुश्रूयते ।

"कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे ।

वोचेम शन्तमं हृदे ।।

इति, ( ऋ० १, ४३, १, )

तथैव इन्द्रशब्दार्थस्य स्वरूपतत्त्वनिर्वचने ऋङ्मन्त्रवर्णः ।

"इन्द्रो यातोऽवसितस्य राजा० ।

सेदु राजा क्षयति चर्षणीनामरान नेमिः परि ता बभूव ।।

इति, ( ऋ० १, ३२, १५ )

"इन्द्रो विश्वस्य राजति"

( साम० १७ ४५६ )

"सर्वं तदिन्द्र ते वशे"

(ऋ० ८, ९३, ४)

**इत्यादिभिर्मन्त्रैः इन्द्रस्य तस्य पारमैश्वर्यपूर्णात्मता अवगम्यते ।**

"इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत् पर्वतानाम् ।
इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्रः ॥

(ऋ० १०, ८९, १०)

"इन्द्रो राजा जगतो य ईशे"

इति च, (तै० आ० ३, ११, ६)

**स्पष्टार्थकं वचनम्, तत्रेदं औपनिषदं ब्राह्मणानुवचनम्,** "स एतमेव पुरुषं ब्रह्म ततममपश्यद् इदमदर्शमिती ३, तस्मादिन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण" **इति, (ऐ० उ० १, १३-१४) (ऐ० आ० २, ४)**

**तथा अन्यत्रापि एतदर्थावबोधकं वचनम् ॥** "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः तंवा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण । **इति (बृ० उ० ४, २, २)**

**एवमेव तस्य इन्द्रस्य सर्वान्तरात्मना सर्वेन्द्रियाधिष्ठातृत्वं तथा तयोः इन्द्रेन्द्रिययोः तादात्म्यं च समर्थितमनुश्रूयते ।**

"इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु ।
इन्द्र तानि त आ वृणे ॥

इति, ( ऋ० ३, ३७, ९)

"इन्द्र इन्द्रियैर्मरुतो मरुद्भिरादित्यैर्नो अदितिः शर्म यंसत्"

इति च (ऋ० १, १०७, २)

**तथा**—"यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाᳪस्या विवेश ।
सतां शक्यः पुरो वा चोपनिषद् "इन्द्रो ज्येष्ठ इन्द्रियाय"ऋषिभ्यो नमः ॥

(ना० उ० ७, ५)

**अत एव तस्य इन्द्रस्य इन्दिययोगात् तेषामिन्द्रियाणां इन्द्रलिङ्गत्वं बोधयितुं पाणिनिः सूत्रयामास,** "इन्द्रियमिन्द्रलिङ्गं, इन्द्रदृष्टं, इन्द्रसृष्टं, इन्द्रजुष्टं, इन्द्रदत्तमिति वा" **इति, (अ० सू० ५, २, ९३)**

**एवमेव ब्रह्मणस्पतिशब्दार्थनिर्वचनमपि ऋङमन्त्रे अनुश्रूयते ।**

"ब्रह्मणस्पतिरेता संकर्मार इवाधमत् ।
देवानां पूर्व्ये युगेऽसतः सदजायत ॥

इति, (ऋ० १०, ७२, २)

तत्र विश्वविसृष्टेरपि प्रागेव आदितः स्वर-नादादिरूपेण तस्य ब्रह्मणस्पतेः धमनतः स्वररूपायाः वाचः सर्वजगदाविर्भावात् वाग्रूपस्य प्रत्यक्षब्रह्मणः अधिपतित्वं गम्यते, **अत एव तस्य ब्रह्मणस्पतेः सर्वेषां मन्त्ररूपाणां ब्रह्मणां जनयितृत्वं तदाधिपत्यत्वं च गम्यते ।**

"गणानां त्वा गणपतिं हवामहे० ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते० ॥ इति

"उस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि"

इति च, ( ऋ० २, २३, १-२ )

तस्येदमौपनिषदं ब्राह्मणम्, ब्रह्मणस्पतिनिर्वचनार्थकम्, "एष उ ब्रह्मणस्पतिः—
एवं—"वाग् वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः"

इति, (बृ० उ० १, ३, २१)

बृहस्पतिशब्दार्थस्यापि तत्समानमेव निर्वचनम्, एष उ एव बृहस्पतिर्वाग् वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः" इति, (बृ० उ० १, ३, २०) तथा च ऋङ्मन्त्रवर्णः तन्मूलप्रमाणभूतः ।

"बृहस्पतेर्बृहती वाचमावत्"

इति, ( ऋ० १०, १३०, ४ )

"बृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः"

इति च, ( ऋ० १०, ७१, १ )

एतेन वाचः ब्रह्म संज्ञा, बृहती संज्ञा च बृहत्वात् तन्निर्वचनसिद्धेति सम्पद्यते, तस्याश्च अधिपतित्वात् ब्रह्मणस्पतित्वं बृहस्पतित्वं च चेतनात्मनः तस्य परमपुरुषस्येत्यपि तन्निर्वचनात् सिध्यति ।

"यावद् ब्रह्म विष्ठितं तावती वाक्"

इति, ( ऋ० १०, ११४, ८ )

मन्त्रवर्णादपि वाचः प्रत्यक्षब्रह्मात्मता अवगम्यते तादात्म्येन तत्समानप्रतिष्ठया च, "तत्रेदं ब्राह्मणानुवचनम्—"यत्र क्व च ब्रह्म तद् वैवाग् यद् वै वाक् तद् वा ब्रह्मेत्येतदुक्तं भवति" इति, (ऐ० आ० १, ३, ८) तदेतत् सर्वात्मनासुस्पष्टार्थकमेव तन्निर्वचनरूपत्वम्, मन्त्र-ब्राह्मणयोरुभयत्रापि तत्समानमेवेति, उक्थोद्गीथप्रभृतीनां वैदिकशब्दानां एकैकाक्षरार्थ-निर्वचनमपि दृश्यते, तदक्षरोपासनादिविधानपूर्वकमेवोपदिष्टम् ।

"अथ खलु उद्गीथाक्षरराण्युपासीत उद्गीथः इति, प्राण एव उत् प्राणेन हि उत्तिष्ठति वाग्गीः वाचो हि गिर इत्याचक्षते, अन्नं थं अन्ने हीदं सर्वं स्थितम्" इति, (छा० उ० १, ३, ६)

अथ—"द्यौरेव उत् अन्तरिक्षं गीः, पृथिवीथम्, आदित्य एव उत् वायुर्गीः अग्निः स्थम्, सामवेद एव उत् यजुर्वेदो गीः ऋग्वेदस्थ म्, दुग्धेऽस्मै वाग् दोहम्, इति। तदेतदपि मूलतः ऋङ्मन्त्रत एव उद्धृतः ।

"यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन ।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥

इति, ( ऋ०१०, ८८, ५ )

अत्र उक्थशब्दः प्राणवचनः, तन्निर्वचनं च प्रसिद्धं उपनिषदि अध्यात्मतत्त्वोपदेशार्थम्, "उक्थं प्राणो वा उक्थम्, प्राणो हीदं सर्वमुत्थापयति उद्धास्मादुक्थविद्वीरस्तिष्ठति उक्थस्य सायुज्यतां सलोकतां जयति य एवं वेद" इति, (बृ० उ० ५, १३, १)

तथैव अग्निशब्दार्थनिर्वचनं ऋङ्मन्त्रणे।

"अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्"

इति, ( ऋ० १, १८९, १ )

"अग्निर्नेता भग इव क्षितीनाम्"

इति, ( ऋ० ३, २०, ४ )

अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि"

इति च, ( ऋ० १०, ८४, २)

तदेतदेवार्थं सत्त्वं सङ्गृहीतम् निरुक्तमुखेन, "अग्निः कस्मादग्रणीर्भवति, "इतादक्ताद् दग्धाद्वानीतात्' इति च (नि० )

एवं वेदमन्त्रेषु-ब्राह्मणारण्यकोपनिषदादिषु च आर्षेयवाङ्मयेषु शतशः सहस्रशः स्थानेषु बहुधा प्रकारेण तद्वैदिकशब्दार्थनिरुक्तरूपं बृहत्तमं भाष्यं विस्तरशः प्रतिपादितमस्ति, तदनुसारेण यास्कादिमुनिभिः निरुक्ताचार्यैः सङ्गृहीतं, तथा निरुक्तादिग्रन्थरूपेण विरचितं च सत् तदेवप्रकाशितं वेदाङ्गरूपेण प्रसिद्धिं नीतिमिति पूर्वोक्तं सर्वं सङ्गच्छते, ब्राह्मणारण्यकोपनिषदादिरूपं प्रथमं सर्वतः प्रधानं वेदभाष्यमिति प्रतिज्ञातमपि सर्वथैवोपपद्यते, अत्र दिग्दर्शनार्थं सङ्क्षेपत एव किञ्चित् समर्थितम्, तस्मात् वेदाङ्गेषु सम्प्रति प्रसिद्धेषु ग्रन्थेष्वपि तन्मूलभूतं ब्राह्मणादिवचनोदितमपि तत्तद्विषयेषु अनुसन्धेयम् इति विज्ञप्तिः।

## ( ५ ) ॥ छन्दः ॥

"छन्दः शब्दः" गायत्र्यादिनिबन्धनसत्त्ववाचकः, येन अनेकेषां बहूनां वर्णानां पदानां च एकत्र नियमनं भवति, यच्च संहिताशब्देन गम्यते व्यवह्रियते च वेदविद्भिः, तेन च अलौकिकेन अकृत्रिमेनैव नियमेन निबद्धाः मन्त्रात्मकास्ते सम्पद्यन्ते सस्वराः छन्दः शब्दार्हा भवन्ति, तत्र तानि च गायत्र्यादीनिच्छन्दाँसि त्रीणि प्रधानानि प्रसिद्धानि, तान्येव चतुर्भिरन्यैः सह सप्तछन्दाँसि भवन्ति, यथा व्याहृतयः, गायत्री, उष्णिक्, अनुष्टुप्, बृहती पङ्क्तिः, त्रिष्टुप् जगती, इति सप्त, ततः अतिच्छन्दाँसि च सप्त, "अतिजगती, शक्वरी, अतिशक्वरी, अष्टिः, अत्यष्टिः, धृतिः, अतिधृतिः" इति, तत्र छन्दस्त्रयकल्पे तु "गायत्री त्रिष्टुप् जगती' इति प्रसिद्धानि, तेषां स्वतन्त्रतः संज्ञा तु गायत्र-त्रैष्टुभ-जागतं चेति क्लृप्ता।

"यद् गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद् वा त्रैष्टुभं निरतक्षत।
यद् वा जगज्जगत्याहितं पदं य इत् तद् विदुस्ते अमृतत्वमानशुः॥

इति, (ऋ० १, १६४, २३)

दैर्घतमसार्षेय ऋङ्मन्त्रदर्शनम्, तेषां देवताश्च अग्नि-इन्द्र-सूर्याः प्रसिद्धाः, तस्मात्तेषां अक्षरनियमाः वसु-रुद्रादित्यतत्त्वक्लृप्ताः, तेषां गणेषु अष्ट-एकादशद्वादश चेति सङ्ख्याः प्रतिनियताः श्रूयन्ते, "अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः" इति च ब्राह्मणम्, (ऐ० ब्रा० ३, २२ ) "अष्टाक्षरा गायत्री, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगती" इति च (ऐ० ब्रा० ३, २८)

पृथिव्या अधिपते रग्नेर्वसुरूपत्वेन अष्टमूर्तित्वम्, तद्योगाद् गायत्रीछन्दसः अष्टाक्षर योगः, तस्य च अग्नेः अष्टौ मूर्तयः प्रसिद्धाः ।

"अग्निश्चजातवेदाश्च वैश्वानरश्चनर्यपाः ।
निसर्पी पङ्क्तिराधाश्च सहोजा अजिराप्रभुः ॥[१]"

इति, (तै० आ० १, ९, १.)

अन्तरिक्षाधिपतेः रुद्रस्य एकादशात्मता दिग्-दैवत-प्राणादियोगात् ।

"दशेमे पुरुषे प्राणाः आत्मैकादशः"

(बृ० उ० ३, ९, ४)

अष्टौ दिशः ऊर्ध्वा चाधरा च ते उभे मध्यं चेति एकादशः तद्देवताश्च इन्द्रादयः सुप्रसिद्धाः, तेषां योगात् त्रिष्टुप् छन्दसः एकादशाक्षरात्मता इति ॥

तैत्तिरीयारण्यके तु तेषां रुद्राणां (रुद्राणीनां च) नामधेयानि पृथग्रूपाण्येव श्रूयन्ते ।

"प्रभ्राजमानानाँ रुद्राणाँ स्थाने स्वतेजसा भानि ।
प्रभ्राजमानीनाँ रुद्राणीनाँ स्थाने स्वतेजसा भानि ॥ इत्यादि ।

ते च प्रभ्राजमानाः, व्यवदाताः, वासुकिवैद्युताः, रजताः, परुषाः, श्यामाः कपिलाः अतिलोहिताः, ऊर्ध्वाः, अवपतन्तः वैद्युताः "इति प्रसिद्धाः" तथा वामदेवादीनि नामान्यपि एकादश श्रूयन्ते, "वामदेवाय नमो, ज्येष्ठाय नमो, रुद्राय नमः, कालाय नमः कलविकरणाय नमो, बलविकरणाय नमो बलाय नमो, बलप्रमथनाय नमो, मनोन्मनाय नमः । इति (मा०उ० १७,२)

तथा—निधनपतये नमः इत्यादयः एकादशरुद्राः—निधनपतिः, ऊर्ध्वः, हिरण्यः, सुवर्णः, दिव्यः, भवः, शर्वः, शिवः, ज्वलः, आत्माः, परमः" इति (ना० उ० १४, १६)

एवमेव सप्तानामपि छन्दसां निर्देशोऽस्ति, तथा च ऋङ्मन्त्रः ।

"अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सं बभूव ।
अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत् ॥
विराण् मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः ।
विश्वान् देवाञ्जगत्याऽऽविवेश तेन चाक्लृप्र ऋषयो मनुष्याः ॥

इति, (ऋ० १०, १३०, ४-५)

अत्र सप्तानां छन्दसां तेषां अग्न्यादयो देवताश्च संस्तूयन्ते, तत्तत्त्वयोगाय, एवमादीनि रूपाणि संदृश्य वेदमन्त्रेभ्यः तथा ब्राह्मणादिभ्यश्च समुद्धृत्य छन्दःशास्त्रं विरचितं पिङ्गलनागेन "छन्दः, गायत्री, दैव्येकम् । इत्यादिसूत्रनिबन्धनक्लृप्तम्, तच्च सुप्रसिद्धम्-वेदाङ्गेषु ।

"मयरसतजभनलगसम्मितं भ्रमति वाङ्मयं जगति यस्य ।
स जयति पिङ्गलनागः शिवप्रसादाद् विशुद्धमतिः ॥"

इति, (छं० सू० मंगलाचरणम्)

## ॥ ज्यौतिषम् ॥ ( ६ )

"ज्योतिषं" नाम कालतत्त्वबोधकं तदेकं शास्त्रम्, वेदाङ्गभूतमेव, तस्मिन्—अहः, रात्रिः, तिथयः, पक्षौ, मासाः, ऋतवः, अयने, संवत्सर, युगः, नक्षत्राणि, निमेषाः, कलाः, मुहूर्ताः काष्ठाः, इत्यादीनि बहून्यङ्गानि अन्तर्भवन्ति, तच्च कालचक्रं ज्योतिरात्मकं वेदस्य वेदात्मनः पुरुषस्य ज्योतिरात्मनः एकं अङ्गं भवति, सवन-समय-वेलादिकालसम्बन्धात् विद्युद्-आदित्यादि ज्योतिर्योगाच्च ज्यौतिषमिति प्रसिद्धम्, वेदे लोके च सर्वव्यवहारास्पदम् बाह्याभ्यन्तर्यज्ञयोगादिसिद्धिपदम्, तत्साधनाद्याश्रयीभूतं चेति गम्यते ।

तदिदं कालचक्रं स्वतः सिद्धमपि चैतन्यज्योतिरात्मनाऽधिष्ठितम्, आदिसृष्टेः प्रवृत्तं, इदानीमपि नित्यमनवतरतमजस्रधारया प्रचलितं इतः परमपि आप्रलयं प्रचलिष्यमाणं च वरीवर्तीति वेदशास्त्रादि सिद्धान्त तत्त्वम् ।

तदेतत् सर्वमपि ऋगादिमन्त्रेषु तद्ब्राह्मणादौ उपनिषत्सु च विस्तरशः समर्थितमस्ति, तथा च दैर्घतमसार्षेयं मन्त्रदर्शनम्—

"द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानिक उतच्चिकेत ।
तस्मिन् त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥"

इति, ( ऋ० १, १६४, ४८ )

"द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परिद्यामृतस्य ।
आपुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः ॥

इति च, (ऋ० १, १६४, ११)

तस्येदं ब्राह्मणम्—"शतानि त्रीणि च षष्टिश्च च सवत्सरस्याहानि" "सप्त च वै शतानि च विंशतिश्च संवत्सरस्याहोरात्राणि" इति, (श० ब्रा० १२, ३, २, ३) एवं ऋतुयौयिकमपि श्रूयते ।

"पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥"

इति, ( १, १६४, १२ )

"पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा"

इति च (ऋ० १, १६४, १३)

तस्य च उपव्याख्यानरूपं औपनिषदं ब्राह्मणमपि विस्तरशः तत्कालतत्त्वं उपवर्णयति— "संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च० इत्यादि, "एतद् वै प्राणानामायतनम् इत्येषनिरोधस्तदेषश्लोकः, पञ्चपादं पितरम्०" इति "अहोरात्रो वै प्रजापतिः, मासो वै

प्रजापतिः," ( प्र० उ० १, ९; १०; १२; १३ ) इति च तत् सर्वमपि इतः पूर्वमेव उपनिषत्प्रकरणे व्याख्यातं तदत्राप्यनुसन्धेयम् ।

रूपान्तरेणापि कालचक्रस्योप वर्णनं मन्त्रान्तरे श्रूयते ।

"सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाऽधि तस्थुः ॥
"इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः ।
सप्त स्वसारो अभि संनवन्ते यत्र गवां निहिता सप्त नाम ॥

इति च (ऋ० १, १६४, ३-४)

तदेतत् कालचक्रं वैद्युतात् पुरुषादेव आदिसृष्टौ संबभूव, इत्यपि अनुश्रूयते,

"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥
अर्धमासा मासाऋतवः संवत्सरश्च कल्पन्ताम्"

इति, (तै० १०, १, २)

अस्मिन्नेव कालचक्रे नक्षत्रचक्रमपि अन्तर्हितं भवति, तथा च याजुषो मन्त्रवर्णः,

"अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम् । इदमासां विचक्षणम् । हविरासंजुहोतन ॥

इति, (तै० ब्रा० ३, १, १, १)

तेषां देवता सत्त्व योगोऽपि दृश्यते, येन तस्य ज्यौतिषत्वमपि अभ्युगम्यते, "कृत्तिका नक्षत्रमग्निर्देवता, रोहिणी नक्षत्रं प्रजापतिर्देवता, मृगशीर्षं नक्षत्रं सोमो देवता,० इत्यादि, ।

एवमेतदादीनां वेद मन्त्राणां तद्ब्राह्मणां च समाश्रयणेन ज्योतिःशास्त्रं कल्पितम्, तच्चवेदाङ्गेषु सङ्गृहीतमिति प्रतीयते, तत्रापि "अर्चिज्यौतिषम्" "याजुषज्यौतिषम्" इति च पृथक् प्रसिद्धमस्ति ।

अत्र "वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वीविहिताश्च यज्ञाः, तद्यज्ञकालादिज्ञानार्थमेवायमुपक्रमो वेदाङ्गज्योतिषो पदेशत्य, येन दर्श-पूर्णमास-नक्षत्रेष्टि प्रभृतिनां यज्ञानां अनुष्ठानं यथोक्ते नियते समये एव अनुष्ठातुं शक्यं भवेत् ।

तथैव सर्वेषां मानवानां शरीरयात्रानिर्वहरूपः सर्वोऽपिव्यवहारः, राष्ट्रादि संचालनार्थकः प्रवृत्तिनिवृत्तिप्रभृत्तिरूपः क्रियाकलापः, तत्सिदयेऽत्यन्तमुपयुक्तं कालविज्ञानम्, इति निर्विवादम्, तदेतत् सर्वार्थसिद्धये कालज्ञानोपकारकं ज्यौतिषमित्यपि सर्वसम्मतमेव, तद्वेदाङ्गरूपेण समर्थितं वैदिक-लौकिकादि सर्वव्यवहारसाधकं भवितुमर्हतीत्येव तन्मूलाशयः तदाश्रयश्चेति सम्पद्यते ।

"पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम् ।
दिनर्त्वयन मासाङ्गं प्रणम्यशिरसाशुचिः ।।
प्रणम्यशिरसा कालमभिवाद्य सरस्वतीम् ।
कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ।।"

इति तत्र युगाध्यक्षं-पञ्चसंवत्सर मयमितियत् प्रतिज्ञातम् तदपि उत्तरत्रविशदीकृतम् "युगस्य पञ्चवर्षाणि कालज्ञानं प्रचक्षते" इति "तदपि ऋङ्मन्त्रे रूपान्तरेण श्रूयते" ।

"दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ।।

इति, (ऋ० १, १५८, ६)

।। अध्यात्मतत्त्वोदितं ज्यौतिषम् ।।

अथ पुनः अध्यात्मतत्त्वयोगेन सर्वसन्नियामकस्य वैद्यु तस्य कालात्मनो यमस्य ज्योतिषं स्वरूपं किञ्चिद्विमृश्यते ।

"यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम्"

(ऋ० १, ६६, ४)

"सर्वा ता यम आहिता"

इति च, (ऋ० १०, १४, १६)

यमस्य विश्वनियामकत्वं स्वतःसिद्धं सुप्रसिद्धमेव लोके वेदे चेति न किञ्चिद्विवादास्पदमस्तिः ।। तस्य च अधिदैवततत्त्वेन अग्नि-वायु-सूर्य-रुद्र-इन्द्राध्यात्मकताऽपिवेदे प्रसिद्धा, वैद्युताग्नि स्वरूपता च भौतिक दृशा समृद्धा, तस्य तादृशस्य कालात्मनः अविज्यौतिषतत्त्वसिद्धस्य तत्त्वेन सर्वेषामप्यन्तरात्मनि प्रतिष्ठिते प्राणेऽपि तत्कालयोगः अनुश्रूयते, तथा च सार्पराज्ञ्याः आर्षेयं ऋङ्मन्त्रदर्शनम् आत्मसंस्तुतिरूपम्-आत्मदैवतयम् तृचम्, ।

"आयं गौ सार्पराज्ञ्यात्मदैवतं सौर्यं वा" इति,

(स० सू० १०, १९८, १-८)

"आयं गौः पृश्निरक्रमीत्० ।
"अन्तश्चरति रोचनाऽस्य प्राणादपानती० ।
"त्रिंशद्धाम वि राजति वाक् पतङ्गाय धीयते ।
प्रति वस्तोरह द्युभिः ।।

इति, (ऋ० १०, १८९, १-३)

तस्यायमर्थः – अयं गोस्वरूपो ज्योतिर्मयः आदित्यः दिवित्वहिः प्रतिष्ठितः स्वेनतपसा प्रज्वलन् सर्वेषामन्तरपि प्राणरूपेण संस्थितः सन् बहिरन्तश्च संचरति प्राणापानगतिरूपेणेति भावः, तत्रेदमौपनिषदं ब्राह्मणमपि तमेतमेवार्थं समर्थयति ।

"आदित्यो ह वै बाह्यः प्राणः उदयत्येनं चाक्षुषं प्राणमनुगण्हानः"

इति, (प्र० उ० ३, ७)

सोऽयं प्राणः चिदात्मनः किरणगत्यनुसारेण प्रतिदिनं त्रिंशद्धामसु विराजते, अर्थात् अष्टसु प्रहरेषु त्रिंशद्विभागेन तावत्सङ्क्रमणेन सञ्चरतीति भावः सिध्यति।

अत्र अनेन प्राणेन संहिता वागपि तत्स्वरात्मिका तस्मैपतङ्गाय चेतनात्मने धीयते, तां वाचं मुख्यप्राणगतिवृत्ति सहितां सरस्वतीं अन्तरात्मनि सर्वेऽपि धारयन्तीति, तस्यास्य प्राणस्य अन्तरात्मनः सकाशात् बहिरन्तश्च सञ्चरतः तदुच्छ्वास-निःश्वासरूपगतेरनुसारेण तत्कालगणनादिनियतिरपि काचित् आन्तर्याकालचक्रभ्रमिः आध्यात्मिकीति प्रतीयते।

"अन्तश्चरति रोचनाऽस्य प्राणादपानती"

(ऋ० १०, १८९, २)

"अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः"

(ऋ० १, १६४, ३८)

"स यन्ता विप्र एषां स यज्ञानामथा हि षः"

(ऋ० ३, १३, ३)

इति च तदनुश्रवणम् "अपानेनत्ययंयतः प्राणोनपराङ्भवति"। "इति च तद्ब्राह्मणम्" (ऐ० ब्रा०)

"तस्य ह वा एतस्य हृदयस्य पञ्चदेव सुषयः, स योऽस्य प्राङ्सुषिः स प्राणः, अथ योऽस्य प्रत्यङ्सुषि सोऽपानः" इति (छां० उ० ३, १३, १-३) एकस्यैव प्राणस्य प्राक्-प्रत्यग् गति-विशेषेण प्राणापान संज्ञा प्रसिद्धा,, एतत् सोऽयं प्राणाग्निरूपः वैश्वानरः स्वयं आदित्य एव दिव्यो ज्योतिरात्मा अन्तर्बहिरपि सिद्धः सर्वकाल विभाजक इति सिध्यति।

"स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते। तदेतदृचाभ्युक्तम्॥"
"विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः"॥

इति, (प्र० उ० १, ७–८)

तदेतद् आध्यात्मकं चाधिज्यौतिषं च तत्त्वं मिथुनीभूतं समीकृतं च इति संपद्यते।
अथ तस्यास्य प्राणगतेः कालगणनाऽपि अनुश्रूयते।

"स एष पुरुषः कतिकृत्वः प्राणिति चाप चानिति" इति प्रश्नप्रतिवचनरूपं श्लोकद्वयम्–तदेष श्लोकोऽभ्युक्तः, श्रमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि। अहोरात्राभ्यां पुरुरुः समेन कति कृत्वः प्राणिति चाप चानिति॥ इति, (श० ब्रा० १२, ३, २, ७) इति तदिदं प्रश्नरूपं तद्वचनम्, "तदेषश्लोकः प्रत्युक्तः,—

"शतं शतानि पुरुषः समेनअष्टौ शता यन्मितं तद्वदन्ति।
अहोरात्राभ्यां पुरुषः समेनातावत्कृत्वः प्राणितिचापचानिति॥"

इति, (श० ब्रा० १२, ३, २-८)

तयोः श्लोकयोरयमर्थः सङ्केतप्रतिक्लृप्तः पुरुषः वाह्यलौकिक कार्यप्रसक्त्यादि परिश्रम मन्तरेण तूष्णीं स्थितः, उपविष्टः, सुप्तोऽपि वा सन् समेन समानशान्तयावेनयुक्तः पुरुषः अहो रात्राभ्यां युक्ते एकस्मिन् दिवसे कतिवारं प्राणिति तथा अपानिति इति प्रश्नस्य स्वरूपम्, अर्थात् अस्य पुरुषस्य प्राणापानयोः गतिः कतिवरं भवति प्रतिदिनम् इति जिज्ञासा, तस्येदं प्रत्युत्तरम्—शतं-शतानि—"दशसहस्रम्" (१००००) अष्टौ शतानि (८००) तयोर्योगेन सम्पन्नम् (१०८००) अष्टशतोत्तरं दशसहस्रम्, तच्च समेन मितम्, अहोरात्राभ्यां इति च निर्दिष्टया समात्मिकयाद्विसंख्यया मितं यावद् भवति तावद् वारं प्राणापानयोः प्रतिदिनं गतिः भवतीतिनिर्गलितोऽर्थः, तद्गुणने (२१६००) षट्शतोत्तरं एकविंशतिसहस्रं प्राप्यते, तथा च अक्षरमालिकाश्लोकः।

"हंसोऽयं षट्शतमिह्वारं सैकाधिकविंशतिकसहस्रम्।
हंसं हृदये परमात्मानं रात्रंदिनमनुजपति प्राणम्॥इति॥
(अक्षर माला श्लो० ४०)

सेयं योगशास्त्रोदिता प्राणगतिसंख्या मूलतः वेदोपदिष्टा ज्योतिस्तत्व विशिष्टै वेति सिध्यति।

अत्र "त्रिंशद्धामविराजति" इत्यनेन एकस्मिन् दिने त्रिंशद्विभागक्लृप्त त्रिंशद्दिनपरिमितस्य एकस्य मासस्य कल्पना भवति, तत्र च एकस्य त्रिंशद्भागक्लृप्तानि तावन्ति मुहूर्तानि भवन्ति, आधुनिक घटिकायन्त्रेण ४८ अष्टाचत्वारिंशन्मिनिट् परिमितकालक्लृप्तं एकं मुहू- भवति, तस्मिन्नेकस्मिन् मुहूर्ते विंशत्युत्तर–सप्तशतसंख्यापरिक्लृप्ता प्राणगतिः सम्पद्यते, तेन च तावदहोरात्र परिकल्पितः संवत्सरात्मकः कालः एकस्मिन् मुहुर्ते प्राणगत्या व्यतीतः सिध्यति, तच्च सूर्यस्य एकं दिनं भवितुमर्हति, तथा च अस्माकं प्राणगत्या यत् खलु एकं मुहूर्तं भवेत्, तदेव सूर्यस्य एकं दिनं भवतीत्यर्थः, तत्र अहोरात्र सङ्केतिताभ्यां प्राणापान गतिभ्यां सहयोगेन एकस्मिन् दिवसे त्रिंशन्मुहुर्तात्मके षष्टिसंवत्सरात्मकः कालः सम्पद्यते, तच्च अस्माकमेकमेवदिनम्, यत् खलु प्राणगतेः एकं मुहूर्तम्, इति विशेषः।

तादृशपञ्चसंवत्सरस्य युगसंज्ञाऽपि वेदे प्रसिद्धा, वेदाङ्गज्यौतिषेऽप्यनुदिता "पञ्च-संवत्सरमयं युगाध्यक्षं प्रजापतिम्।

दितर्त्वयनमासाङ्ग प्रणम्यशिरसाशुचिः, इति,

"युगस्य पञ्चवर्षाणि कालज्ञानं प्रचक्षते" इति च,

तस्येदं मूलभूतं ऋङमन्त्रदर्शनम् दीर्घतमसार्षेयम्,

"दी॒र्घत॑मा माम॒ते यो जु॑जु॒र्वान् द॑श॒मे यु॒गे"

इति, (ऋ० १, ५८, ६)

तत्र दशमो युगः पञ्चाशत्तमः संवत्सरः इत्यर्थः,

एवमेव "युगे युगे" इत्यत्रापि अयमेवार्थः साङ्केतिकोऽन्तर्हितः इति प्रतीयते।

तदिह महद्गभीरमिदं तत्त्वत्रयोपक्लृप्तं ज्यौतिषम्, अत्रदिग्दर्शनार्थं यत् किञ्चिदेवोपन्यस्तं संक्षेपतः, साक्षात्कारयोगसुधायां मुख्यप्राणोपासनायाः अभ्यासप्रक्रियायां तत्परिशीलनार्थं पृथक् प्रपञ्चितम् तथा नाक् सुधायां च सरस्वत्याः शारदाभिधानतत्त्वप्रदर्शनार्थं विस्तरशः प्रतिपादितमस्ति ।

एवमेतेषां शिक्षादिनां षण्णां शास्त्राणां वेदावयवयकल्पना तु तत्तदयवार्थक विषययोगेन पाणिनिकृता दृश्यते ।

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठचते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥४१॥
शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् साङ्गमधीत्यव ब्रह्मलोके महीयते ॥४२॥

इति, (पा० शि०)

अतएव साङ्गवेदाध्ययने विधिः शास्त्रीयतामर्हति, यथा अस्माकं मुखादीनामेतेषामङ्गानां अङ्गिनः आत्मनश्च नित्यसम्बन्धात् अङ्गिनं विनाकेवलस्यात्मनः अकिञ्चित्करत्वम्, तथा अङ्गिनमात्मानमन्तरेण केवलानामङ्गानां निरर्थकत्वं च, प्रत्यक्षसिद्धमेव, एवमेव वेदेषु वेदाचङ्गेषु ध तत् समानं द्रष्टव्यम्, मूलभूतं वेदमन्तरेण केवलैर्वेदाङ्गैर्नकिञ्चित् प्रयोजनमस्ति, तथा अङ्गानामध्ययनं विना केवलस्य वेदस्य अध्ययनेनापि नास्तिप्रयोजनम्, अर्थज्ञानादि सत्त्वोदये निरवकाशात्, वस्तुवस्तु–वेदार्थज्ञानार्थमेव वेदाङ्गानामपि अध्ययनं निहितम्, अन्यथा अपूर्णतैवस्याद् विद्याभ्यासस्येति ।

## ॥ वेदार्थेषु तत्त्वत्रययोगः ॥

वेदमन्त्रेषु ब्राह्मणोपनिषदादिषु च बहुविधानितत्त्वानि उपदिष्टानि श्रूयन्ते, तत्तद्विषयविचारादिप्रयुक्तानि, तत्र कानिचित् स्पष्टमेवोदितानि "अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम्" इति (तै० शि० उ०१, ३)

पञ्चानां तत्त्वानां निर्देशः, "अधियज्ञं–अध्यक्षरं चेति" तत्त्वद्वयमपि अन्यत्रसमर्थितम्, अथाध्यक्षरमोङ्कारः" इति (मां० उ० १, ८) प्रणवाक्षर तत्त्वसमर्थने दर्शितम् ।

"अधियज्ञं च" यास्कनिरुक्ते शब्दशः अर्थतश्च निर्दिष्टम्" मन्त्र-ब्राह्मणोपनिषदादिषु समर्थितं च तत् मूलतः, तत्र अधिलोके अधिभूतं तत्त्वमन्तर्हितम्, अधिज्यौतिषे अधिदैवतम्, अध्यात्मतत्त्वे तु अधियज्ञं, अधिविद्यं, अधिप्रजं च प्रतिष्ठितम्, क्वचित्तु अधिभूते अध्यक्षरं अधिविधं च स्थितम्, वेदादेः शब्दरूपस्य भौतिकल्पेन भानितत्त्वात् ।

सामान्यतः "त्रयोऽर्थाः सर्ववेदानाम्" इति वचनानुसारेण बहुभिः तत्त्वत्रय प्राधान्येनैव वेदार्थज्ञानं समर्थितं दृश्यते, प्रायः सर्वाण्यपिभाष्याणि गद्यात्मकान्येव सन्ति, आख्यानरूपाणि, बृहद्देवतायां, माध्वऋग्भाष्ये च श्लोकबद्धं वेदव्याख्यानं दृश्यते, वेदमन्त्राणां ब्राह्मणारण्यकोपनिषदादिकमेव प्रथमं प्रधानं भाष्यमिति पूर्वमुक्तमेव ।

तदिहपूर्वेषामृषीणां मार्गदर्शनानुसारेण तत्त्वत्रयसमन्वययोगैव सर्वथा श्रेयस्कर इति प्रतिज्ञायते, तस्मादतीन्द्रियार्थदर्शिभिः ऋषिभिः शास्त्रदृशा स्वानुभावोदितानां ब्राह्मणोपनिष-

दादिवाङ्मुखे नोपदिष्टानां त्रयाणां तत्त्वानां सर्वेषां वा समन्वयेन वेदार्थग्रहणमेव पूर्णं भवितुमर्हति, एकैकेनैव तत्त्वेन युक्तं तदर्थजानन्तु अपूर्णमेव स्यात् तस्य एकोदेशीयत्वात् इति शास्त्रीयं तत्त्वम्, तथैव केवलं शब्दस्वरूपज्ञानमपि तत्समानमेव भवेदिति सर्वसम्मतमेवैतत् । तस्माद्विद्वांसः स्वयमेव तत्त्वविमर्शनेन यथोचितमेव सङ्गृहीतुमर्हन्ति भवन्त इति विज्ञापये ।

॥ वेदानामध्ययने अर्थज्ञानसाहित्यम् ॥

अथ पुनः वागर्थयोः तादात्म्यसम्बन्धस्य नित्यसिद्धत्वात् तयोः साहित्येनैवकृतं वेदाध्ययनं तथा संपादितं ज्ञानं च सम्पूर्णं भवितुमर्हति, तयोरन्यतरस्य परित्यागे तदेकदेशेन न्यूनं तदपूर्णमेव भवेदिति निर्विवादम् ।

तस्माद् "ब्राह्मणेन निष्कारणेन षडङ्गो वेदोऽध्येयश्चेति" तद्विधिः यथार्थएव, अतः ज्ञाने भावनायां उपासनायां कर्मणि च वेदमन्त्राणां अर्थज्ञानपूर्वकमेव प्रयोगः शास्त्रविहितः सर्वथा सङ्गच्छते, अन्यथाविनियोगे तन्निरर्थकत्वश्रवणात् तथा च बार्हस्पत्यार्षेयः ऋङ्मन्त्रवर्णः, —

"यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥

इति, (ऋ० १०, ७१, ६)

तस्यायमर्थः पूर्वाचार्यसमर्थितः सर्वसम्मतः— यः खलु विद्वान् वेदाध्यायी अधीतवेदश्च सन् वाचः सखायं मित्रवदुपस्थितं तदर्थं परित्यजति, तस्य पुरुषस्य तस्यां वाचि केवलं अक्षरानुपूर्वीसंहितायां तथा गृहीतायां उच्चरितामप्ति भागो नास्ति-तत्फलभागो न भवति, तदर्थविहीनत्वात्, यद्यपि तां वाचं कश्चित् शृणोति उच्चरति च तथाऽपि निरर्थकमेववद् भवेत्, तदर्थशून्यत्वेन तत्फलोदये अयोग्यत्वात्, स च पुरुषः सुकृतस्यशब्द-तदर्थज्ञान साहित्यकृतस्य मार्गं न जानाति सार्थकतादिप्रापकं पन्थानमेव परित्यजतीतिभावः ॥ एतदर्थावबोधकमेवेदमर्धर्चम् ।

"उत त्वः पश्यन् न ददर्श वाचमुतत्वः शृण्वन् नशृणोत्येनाम्"

इति, (ऋ० १०, ७१, ४)

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञान विधूत पाप्मा ॥"

॥ इति च स्पष्टतरोऽर्थः ॥

॥ क्रियाधीनं फलम् ॥

अस्मिन् विषये केषांचिद् विदुषां, एवं धारणाऽस्ति किल, फलोदये क्रियैव कारणं प्रत्यक्षसिद्धम्, तत्र क्रियाया एव प्राधान्यं च वस्तुसिद्धमेव, तस्मात् अर्थज्ञान साहित्येऽपि मन्त्रोच्चारणेनैव तज्जपादि मात्रेण प्रत्यक्षेण साधनेनैव तत्फलोदयस्य सम्भवात् मन्त्रात्मके शब्दे एव काचिदस्ति अलौकिकी शक्तिः स्वार्थप्रकाशने तत्साधने तत्फलादि प्रसादने स्वयं समर्था स्वतः सिद्धेति केचिन्मन्यन्ते, तत्रापि लौकिकेभ्यः अतिरिक्ता काचिद् विशिष्टतरादित्यशक्तिः ज्ञान-भाव-क्रियादिसर्गसत्वसम्पूर्णा वेदमन्त्रेष्वेव वरीवर्तीति प्रतिज्ञायते ।

"लौकिकानां तु साधुनामर्थं वागनुधावति ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ।।"

इति कवीन्द्रवचनोपबृंहितात् न्यायाद् अपि सोऽयमेवार्थः प्रतीयते ।। तदेतदपि तत्त्वं वेदमूलकमेवेति ।

**अर्थज्ञानविरहिताऽपि स्वतःसिद्धा मन्त्रशक्तिः ।।**

**।। तत्फलोदयसमर्था ।।**

अस्मिन्नेवार्थे मूलभूतं प्रमाणं ऋङ्मन्त्रदर्शनानुश्रवणम् ।

"अमन्य माना अभिमन्य मानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र"

इति, (ऋ० १, ३३, ९)

तस्यायमर्थः पूर्वाचार्यविदितः ऋषिवेदितश्च—हे इन्द्र ! अमन्यमानान् अर्थज्ञानादि रहितानपि पुरुषान् अभिमन्यमानैः—तदुपासकान् तान् आत्मीयान् विदद्भिः—स्वकीयत्वाभिमानेन तान् संरक्षितुं समर्थैः ब्रह्मभिः—मन्त्रैः त्वं दस्युं-हिंसकं निरधमः—उत्सारितवान् असि इति एतेन स्वकायार्थं रूपकार्य निर्वर्तन सामर्थ्यं मन्त्रे स्वतः सिद्धमेवास्तीति संपद्यते ।

फलोदये कृतेरेव प्राधान्यं प्रत्यक्षदृष्टं वस्तुसिद्धम्, तद्यथा—अज्ञानेनापि उपभुक्तं विषं वा अमृतं वा स्वकीयं कार्यं अनिवार्यतया निर्वर्तयतीति प्रत्यक्षमेव, यथा च—अनिच्छता अज्ञानवताऽपि निपातितः अग्निः तृणादिकं दहत्येवेत्यवश्यमभ्युपगम्यते, यथा अज्ञानिभिः स्मृतं जप्तं च नाम-मन्त्रादिकं पापादिदोषान् निवारयतीति शास्त्रतत्त्वं लोकेऽपि सुप्रसिद्धम्, यथा च कृष्यादिकं कर्म अज्ञानतः कृतमपि काले प्रतिफलत्येवेति च प्रत्यक्षदृष्टमेव, तत्र कर्तव्ये कर्मणि साधन विशेषे च विषये विशिष्टज्ञाने सति तादृशज्ञानेन कृते क्रियाविशेषे अधिकं विशिष्टतरं तत् फलप्रदं भवितुमर्हतीत्यपि वस्तुसिद्धमेवेति न पुनर्वक्तव्यमापतति ।

वस्तुतस्तु—वेदमन्त्रादि विषये तदर्थज्ञानोदयार्थमेव प्रत्यक्षब्रह्मरूपाणां तेषामेतेषां वेदमन्त्राक्षराणामवलम्बनम्, तच्च जप-यज्ञादिषु प्रशस्यते, तन्मन्त्रार्थज्ञानमन्तरेणापि श्रद्धया जप्तं सत् कर्तव्यबुध्याकृतं च तन्मन्त्रजपादिकं सर्वात्मना निरर्थकं भवितुं नार्हत्येवेति प्रतीयते, तद्यथा बालः पञ्चमे अष्टमेवावर्षे उपनीतः सन् सन्ध्योपासनायां नित्यकर्मरूपेण अवश्यकर्तव्यतया विहितायां गायत्रीमन्त्रजपं तदर्थज्ञानपूर्वकमेव जप्तमसमर्थः सन् कथं तन्निरर्थकमेव अनुष्ठातुं प्रवर्तेत, कथं वा तस्मिन् निरर्थके कर्मणि तं बटुं प्रवर्तयेद् गुरुः स्वयं सुज्ञः सन् अज्ञ इवेति विचारास्पदमेव, अथ किमर्थं च पुनः तेन निरर्थकेनैव कर्मणा प्रतिदिनं वृथैव कालक्षपणं कुर्यात् इति आदिशेत् सच्छास्त्रम् "अहरहः सन्ध्यामुपासीत" इति, वेदशासनादिति चेत् अर्थज्ञानमन्तरेण पितत्कर्तव्यमेवेत्यापतितं कर्तव्यतापरिपालनम् । अथवा नास्ति तत्र फलानुसन्ध्यानादरणम्, नित्ये कर्मणि शास्त्रशासनात् निष्कामनयैव कर्तव्यविधानात्, तस्माद् यथा कथञ्चिद् वा कर्तव्यानुसरणमेव शरणमिति प्रतीयते, तदिदमेव ज्ञानयोगादिष्वपि अनुसन्ध्येयं शास्त्रीयं तत्त्वम्, "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः" इति तद्विदानात् ।

॥ वेदार्थज्ञाने तदनुभावपर्यवसायिता ॥

अथ अर्थज्ञानेऽपि न केवलं शब्दार्थज्ञानमात्रेण तत् पूर्णतां सार्थकतां च प्राप्तुं नार्हति, किन्तु तस्यपूर्णात्मनः सद्वस्तुनः तत्त्वत्रयसामरस्य योगेन तत्साक्षात्कारेणैन तत्पूर्णतां प्रत्येनीति प्रतिज्ञायते, तस्मात् तत्तदर्थानुभव पर्यकसायिता संपादनार्थमेव सर्वेषां वेदशास्त्रादि विद्यादीनां अध्ययनं तदर्थज्ञानं चेति सर्वथा संपद्य, अस्मिन् अर्थे ऋङ्मन्त्रवर्णः—

"ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वेनिषेदुः ।
यस्तन् न वेद किं मृचाकरिष्यतियइत् तद् विदुस्तइमे समासते ॥

इति, (ऋ० १, १६४, ३९)

औपनिषदो यन्त्रवर्णोऽपि भवति,

"सत्यं ज्ञानमनन्तं ब्रह्मा यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान् सहा ब्रह्मणा विपश्चिता ॥

इति, (ब्र० उ० १, १)

"यतो वाचो निर्वर्तन्तो अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चन ॥

इति च, ब्र० उ० ९, )

इत्यादीति प्रत्यक्षसिद्धानि प्रमाणानि सहस्रशः सन्तीति एतावतैव सङ्क्षेपतो बिरम्यते ।

॥ ईं ॐ श्रीः ॥

# वेदार्थकल्पलतिका

## ॥ प्राणपीठिका ॥

अथ इयं साम्प्रतिका वेदार्थकल्पलतिका प्रस्तूयते, एतद्ग्रन्थरचना-देहली नगरे श्री-विरलामन्दिरोपान्तस्थे—"हिन्दू महासभाभवने सम्वदि २०१९ तमे (सन् १९६२) आषाढ-पूर्णिमायां आरभ्यकार्तिकपूर्णिमायां समाप्ति नीता, एकान्ते दुग्धफलाहारादि-नियमपूर्वकेन चातुर्मास्यव्रतेन ।

अत्रेदं वैशिष्टयम्—मम इतरेभ्यो ग्रन्थेभ्यः वैलक्षण्यं वैचित्र्यं च, प्रायः सर्वेषां वेदानां उपनिषदादीनां च सर्वाण्यपि भाष्याणि गद्य प्रबन्धात्मकन्येव सन्ति प्रसिद्धानि, माध्वऋग्भाष्य-मेकमेव पद्यात्मकम् दृश्यते, तत्र "अग्नि मीळे पुरोहितम्०" इत्यारभ्य अनुक्रमेण एकोन-पञ्चाशदुत्तरं चतुःशतं (४४९) मन्त्राणामेव भाष्यं वर्तते, तदवलोकनेन तामेव सम्यक्तरां पद्धतिमनुसृत्य श्लोकबद्धं वेदमन्त्रभाष्यं रचयितुं ममापि काचित् प्रज्ञा अभ्युदगात्, मन्ये सेयमपि भगवतः सद्गुरोश्च प्रेरणैवेति, यतः तेषां वासिष्ठगणपतिमुनिपादानामपि पद्यकाव्ये एव अधिकतरा प्रीतिः प्रवृत्तिश्च आसीत् इति गम्यते, "उमा सहस्रादि रचनायाम्", येन "काव्य कण्ठः" इति विशिष्टं पदं सम्प्राप्तं तत्र भवतामिति, तदेव नितरां सम्भावयामि विशिष्टतराम् ।

सेयं कल्पलता सर्वेषां वेदानां मूलभूतस्य सर्वेषामपि द्विजानां उपनयने अनिवार्यतया प्रथमतः ब्रह्मोपदेशार्हस्य, सर्ववेदाध्ययन-वैदिकयज्ञाद्यधिकार सिद्धिकरणस्य (वेदबीजस्य) "गायत्री मन्त्रस्य" मुखेनैव प्रारब्धा इयं संविद्रूपायाः चेतनात्मिकायाः गायत्र्या सकाशादेव अङ्कुरिता समभ्युदिता च, वेदस्य संविदात्मकत्वात् वाग्रूपत्वाच्च, तद्वा च एव सर्वज्ञकल्पायां सर्वसंवित्प्रकाशकत्वाच्च, तत्रापि प्रायः ऋग्वेदादिषु विद्यमानानां तात्त्विकार्थप्रधानानां वाग् देवताशक्तिसत्त्वानां मन्त्राणामेव सङ्ग्रहेण इयं वेदार्थफल प्रसादिनी सेयं कल्पलतेव सर्वसत्त्वार्थ संवित्प्रदायिनी भवितुमर्हतु इत्याशासे ।

अस्मिन् ग्रन्थे (३२) द्वात्रिंशत् कलाः सन्ति, प्रत्येकस्यां कलायां श्लोका अपि ३२ द्वात्रिंशदेव विद्यन्ते, तेन सर्वेषां गणनाया समग्रेऽस्मिन् ग्रन्थे १०२४ चतुर्विंशत्युत्तरं एक-सहस्रम् श्लोकानां सङ्ख्या भवति, प्रतिपादनार्थं प्रमाणाय गृहीताः ऋङ्मन्त्रास्तु (८४) चतुरशीतिसङ्ख्यापरिगिताः पदपाठसहिताः सन्ति ।

"शार्दूलविक्रीडितम्, स्रग्धरा, वसन्ततिलका, इन्द्रवज्रा, उपेन्द्रवज्रा, उपजातिः" इति वृत्तषटमेव वर्तते ।

सेयं सङ्ख्या पूर्णकलात्मिका, या पूर्णतां सम्पन्ना, तस्मात् एकैका सा कलाऽपि पूर्णसङ्ख्यात्मिकैव भवति, तस्याः इदं लक्षणम् गणितशास्त्रसङ्केतः वस्तुतत्त्वसिद्धः, तद्यथा

पूर्णिमायां चन्द्रमसः षोडशकला भवन्ति, ततः कृष्णप्रतिपदमारभ्य दर्शान्तं प्रतिदिनं एकैकया-कलया क्षीयमाणे चन्द्रमसि एकैवकला अवशिष्यते अमावास्यायाम् । नार्धं नापि सार्धम्, अतः साषोडशसङ्ख्या पूर्णात्मिका इति निश्चीयते, निर्णीता च—शास्त्रे उपनिषदादौ च सुप्रसिद्धैव,

"षोडशकलः सोम्यपुरुषः पञ्चदशाहानिमाऽशीः काममपः पिबनपिबतो विच्छेत्स्यते"

इति, छां० उ० ६, ७, १)

"सह पञ्चदशाहानि नाशा च०—इत्यादि—

"एव सोम्यते षोडशानां कलानामेकाकला अतिशिष्टाऽभूत्"

इति च (छां० उ० ६, ७, ६)

इहैवान्तः शरीरे सोम्य स पुरुषः यस्मिन्नेताः षोडशकलाः प्रभवन्तीति"

(प्र० उ० २, २)

तथा अन्यत्रापि—"ध्रुवैवास्व षोडशीकला०"

"आत्मैवास्य षोडशीकला०"

इत्यादि प्रसिद्धम्—

एवमेव विद्याऽपि चतुःषष्टिकलात्मिकैव श्रूयते, अत्र-एतदुभयमपि १०२४ एकयैव सङ्ख्यया गम्यते, सा च षोडशसङ्ख्या वागर्थात्मकयोर्नामरूपयोः शक्तिशिवात्मनोः गौरी-रुद्रयोर्योगेन द्वात्रिंशत् सङ्ख्यासम्पद्यते, तादृशीभिः पुनः द्वात्रिंशत्कलाभिः पूर्णा चतुर्विंशत्युत्तरा सहस्रात्मिकाभवति, अस्यामेव सङ्ख्यायां षोडशकलात्मिकाः चतुःषष्टिकलाः अन्तर्हिताः इति प्रतीयन्ते, तेन च षोडशस्वरात्मिका, चतुषष्टिवर्णात्मिका, चतुषष्टिवर्णात्मिका च सा वाग् बभूवेति गम्यते ।

अकारादयः विसर्गान्ताः षोडशस्वराः सुप्रसिद्धाः वर्णमालायाम्, तथा "अइउण्, ऋलृक्०" इत्वादिभिः सूत्रैः संशोधिताः पाणिना चतुःषष्टिवर्णाः प्रतिज्ञाताः ।

"त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः"

इति, (पा० शिक्षा० )

एतदर्शतत्त्वबोधकोऽयं दैर्घतमसार्षेयः सुप्रसिद्धः ऋङ्मन्त्रवर्णः—

"गौरीर्मिमाय सलिलानि तक्षती "एकपदी, द्विपदी, सा चतुष्पदी" ।
"अष्टापदी, नवपदी," बभूवुषी "सहस्राक्षरा," परमे व्योमन् ॥

(इति, ऋ० मं० १, १६४, ४१)

अत्र "एक-द्वि-चतुः-अष्ट-नवसंख्यानां योगेन "चतुर्विंशतिः" सम्पद्यते, "सहस्राक्षरा" इति स्पष्टतरा, सा गौरीरुद्राणी माध्यमिका वाग् देवता विद्युन्मयी अक्षरात्मिका संख्या-तत्त्वात्मिकाचेति वेदहृदयम्, एतेन "वागेयामाध्यामिका" इति यास्कनिरुक्तं संगच्छते ।

सोऽयं मन्त्रः अस्मिनेव ग्रन्थे द्वात्रिंशच्छ्लोकैः बहुधा व्याख्यातोऽपि तमिमं सूक्ष्मतमं तात्त्विकार्थमविदित्वैव इतः पूर्वमेव प्रथमतः तावत् सङ्ख्यापरिमितैरेवश्लोकैः सेऽयं ग्रन्थकल्प-लता समाप्ति नीता, साम्प्रतं एतद्भूमिकालेखनसमये एव अकस्मात् संस्फुरितोऽयं मन्त्रः

एतत्तत्त्वार्थ सत्त्वपूर्णः, अत एव तदानीं व्याख्यातपूर्वस्यापि अस्य मन्त्रस्य अयमर्थः इदानीमेव कथमिव स्फूर्तिपथमगादिति संचितयन् अत्यन्तं प्रहृष्टः ममायमन्तरात्मा, तदिदं पटना-नगरे सदाकताश्रमे श्रीराजेन्द्रप्रसादानां गृहे दिनाङ्के २४–११--१९६२ दिने, प्रातः संस्फुरितम्, तदनन्तरमेव सोऽयं विषयः कल्पलताग्रन्थे "गौरीर्मिमाय" इत्येतन्मन्त्रभाष्येऽपि नूतनं श्लोक रचयित्वा सद्य एव समस्थापयम् ।

"अत्रैक-द्वि-चतुःपराष्ट-नवभिर्योगाच्चतुर्विंशति ।
गौरीवाक् च तदुत्तरा प्रतिबभौ पूर्णा सहस्राक्षरा ॥
तस्मात् तत्परिसङ्ख्ययैव परया सम्पूर्णतामभ्यगाद् ।
वेदात् कल्पलतेव पूर्णकलया तत्वार्थ सत्त्वेऽन्वियात् ॥"

सोऽयं श्लोको नवम्यां कलायां अन्ते ३२ द्वात्रिंशत्तमश्लोकस्य स्थाने संस्थापितः ।

तदिदमकस्मात् सङ्घटितं नूतनतया संस्फुरितं वैदिकं मन्त्रार्थतत्त्वं श्लोकव्याख्यान श्रीराजेन्द्रप्रसादेभ्यः न्यवेदिषम् नित्यप्रवचनान्ते सन्दर्भान्तरे, भवन्तोऽपि तदिदं विचित्रतरं विशिष्टतरपूर्णसङ्ख्या गणिततत्त्वप्रचुरं वचनमनुश्रुत्य तदर्थमवबुध्य च समानं प्रहर्षं प्रायन्, सोऽयं परगुणग्राहकाणां गुणिनां स्वभावसिद्धः विशिष्टः सद्गुण इति संभावयामि, तमिमं राजेन्द्रप्रसादे विशिष्टं गुणं प्रत्यक्षमेवान्वभूवम् ।

॥ वेदार्थे तत्त्वत्रयसामरस्य योगः ॥

एकस्यैव परमस्य वस्तुना प्रत्यगात्मनः विभूतिरूपाणि त्रीणि वस्तूनि वेदोदितानि, तथा तत्सत्त्वान्वितानि तत्त्वानि च अनुश्रूयन्ते, तथा च ऋङ्मन्त्रवर्णः—

"प्रत्यङ्देवानां विशः प्रत्यङ् उदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥

इति (ऋ० १, ५०, ५)

स्पष्टार्थानुवचनम्,

"सुसन्दृशं त्वा वयं प्रति पश्येम सूर्य ।
विपश्येम नृचक्षसः ॥

(ऋ० १०, १५८, ५)

"पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥

(ऋ० १०, ९०, २)

इत्यादयोऽपि तान्येव त्रीणि तत्त्वानि लक्षणया बोधयन्ति, समर्थयन्ति सङ्केतोदितेन रूपकान्तरमुखेनेति वेदहृदयम्, तानि च त्रीणि तत्त्वानि "अधिभौतिकाधिदैविकाध्यात्मक-संज्ञाभि" परिक्लृप्तानि, प्रत्यक्ष-परोक्षापरोक्ष सत्त्वसिद्धानि, अचेतन-प्रचेतन-सचेतन सत्त्वा-न्वितानि, जगद्-ईश-जीवात्मवस्तुसम्बद्धानि च भवन्ति, "इत्यधिभूतम्, अथाधिदैवतम्, अथा-

ध्यात्मम्" इत्यादिब्राह्मणारण्यकोपनिषदादिषु स्पष्टमेव तदनुश्रवणमुपलभ्यते, अन्यत्र तु पञ्च-तत्त्वानि श्रूयन्ते, क्वचित् तेभ्योऽपि पृथक् तत्त्वद्वयं च "अधिलोकमधिज्यौतिषमधिविधमधि-प्रजमध्यात्मम्" इति प्रसिद्धम् तत्त्वपञ्चकम्, "अथाध्यक्षरम् (मों० उ०) अथाधियज्ञम्" इति च श्रुत्यन्तरेऽनूदितमस्ति, एतेषां ततोऽन्येषां तत्त्वानां सर्वेषामपि त्रिष्वेवान्तर्भावं मन्यन्ते तत्त्व-विदः वेदार्थविमर्शनपरायणा., "त्रयोऽर्थाः सर्ववेदानाम्" इति वचनानुसारेण ।

इत्यादि वचनमपि तमेवार्थं समर्थयति, एवमेतेषु त्रिषु तत्त्वेषु सर्वेष्वपि च एकस्यैव परमस्यात्मनः एकमेव तत् परमंव स्तुतत्त्वं समनुस्यूतं भवति व्यस्त-समस्तरूपेण, तादात्म्येन, सामरस्यसत्त्वेन चेति सर्वशास्त्र सिद्धान्तोदितम्, सर्वविद्वत्संमतं चेतिनिर्विवादमभ्युपगन्तव्य-मेवेति प्रतिज्ञायते ।

"अविभक्तं विभक्तेषु विभक्तमिव च स्थितम्" इति च तदनुस्मृतिः ।।

अतएव स्मिन् ग्रन्थे प्रायः सर्वेषामपि वेदमन्त्राणां तत्त्वत्रययोगेनैव सर्वोऽप्यर्थः समर्थि-तोऽस्ति ।। इति संक्षेपः ।

## ।। अथ प्रथमा प्रार्थना ।।

अस्यां प्रार्थनायां प्रथमतः मुक्तकण्ठेन याथार्थ्येन अभ्यर्थितमस्ति आर्षेयेण सौम्येन सम-भावान्वयेन सहृदयेनेति विज्ञापयामि, अस्याः प्रार्थनायाः विषय स्वरूपम् "तत्त्वार्थकं केवलम्" इति, वेदार्थप्रकाशने तात्त्विकार्थस्यैव प्राधान्यात् ।

तस्मात् काव्यालङ्कारादिकं, शब्दचित्रादिकम्, शाब्दबोधादिकम्, शृङ्गारादि रसावि-र्भावानुकूलं कथानकं च अत्र नास्तीति, तथैव कस्यचिन्मतस्य खण्डनं, कस्यचित् मण्डनम्, तदर्थं अन्येषा निन्दास्तुतिरूपं द्वेषोद्वेगादिकरं च किञ्चिदपि नास्तीति, केचित्तु अन्यमतखण्डनमन्त-रेण स्वमतस्य प्रतिष्ठापनं प्राशस्त्यं च भवितुं नार्हतीति मन्यन्ते, यथा न्याय-मीमांसादिशास्त्रेषु, तथा अस्मिन् ग्रन्थे वादविवादादिकं पूर्वोत्तर पक्षादिकं च नैव कृतम्, यथार्थानुवचनमेव प्रधान्येनाङ्गीकृतम् ।

धीयोगादि विद्यापरिशीलनार्थं यथोचितं साधनप्रक्रियादिकं च समर्थितमस्ति, वेदमन्त्रो-पदिष्टस्य तथा ब्राह्मणारण्यकोपनिषदादि वचननिर्दिष्टस्य च वस्तुतत्त्वस्य यथार्थस्थितिवर्णन-मेवात्रोपदिष्टम्, तस्मादस्मिन् प्रबन्धे तत्र तत्र अलौकिकस्य तात्त्विकार्थस्य स्पष्टीकरणार्थं बहुधा पुनरुक्तिः उपयुक्ताऽस्ति, साऽपि सौजन्यतया सद्भावतया च स्वीक्रियतामिति, इयं मम सविनयमभ्यर्थना "जनता-जगद्-ईश-सन्निधौ समर्पिता, तस्मात् विद्वांसः विद्यार्थिनश्च तथा सर्वजनाश्च इमां प्रार्थनां स्वीकर्तुमर्हन्ति इति पुनरपि संप्रार्थये ।। इति दैवरातः

## अष्टौ श्लोकाः (८)

## ।। ब्रह्मणस्पतये श्रद्धाप्रसूनाञ्जलिः ।।

अत्र "ब्रह्मणस्पतिः" इति पदद्वये "ब्रह्म" इति संज्ञा तु प्रत्यक्षब्रह्मरूपायाः । वेदमन्त्रा-त्मिकाया वाग्देवताया एव प्राधान्येन भवितुमर्हति, तस्याः पतिः परब्रह्मरूपः परमात्मैव इति अनुश्रूयते, एव उ एव ब्रह्मणस्पतिः, वाग् वै ब्रह्म तस्या एष पतिः तस्माद् ब्रह्मणस्पतिः" इति ।।

(बृ० उ० १, ३, २१) तन्निर्वचनात्, तस्य तदुभयात्मनः वाचक-वाच्यार्थसत्त्वान्वितस्य ब्रह्मणस्पतेः सत्तैव समग्रेऽस्मिन् प्रपञ्चे ब्रह्माण्डे पिण्डे च प्रधाना नित्यसिद्धा इति प्रतिज्ञायते ।

तस्मादत्र कल्पलतिका रचनायां केवलां स्वबुद्धिशक्ति सर्वथा अपर्याप्तां मन्यमानः तस्य ब्रह्मणस्पतेरेव सत्तां तत्प्रेरणां च प्रधानकारणीभूतां तामेव चेतनात्मिकां संवित्स्वरूपां कामयमानः सन् तमेव परमं पुरुषं परां शक्ति च शरणं प्रपन्नः तदभिवादनपूर्वकं तदनुग्रहात्मिकां संचेतनां संविदं छन्दस्वतीं सरस्वतीं वाचं देवीं च याचमानः इदमभ्यर्थये, श्रद्धाप्रसूनाञ्जलिसमर्पणेन एतैः पद्यात्मकैः चतुर्दशभिः प्रसूनैः सहस्रद्धया च अञ्जलिबन्धेन ।

एतेन ब्रह्मणस्पतिनापरपर्यायस्य कवीन्द्रस्य मुनेः वसिष्ठस्य गणपतेः, पितुः विघ्नेश्वरस्य मातामहस्य गणेशस्य तथा सर्वप्राधान्येन ब्रह्मणस्पति संज्ञार्हस्य भगवतः इन्द्रस्य च सदनुग्रहाय सेयं श्रद्धाञ्जलिः सम्पद्यताम्, तथा तेषामेतेषां सर्वेषामपि गुरुवर्याणां सत्प्रसादाय प्रतिकल्पतामिति च चिरं प्रतिपदमनुचिन्तयामि ।

अत्र चतुर्दश १४ श्लोकाः

## ॥ आर्षेयो वेदध्वजः ॥

### ॥ ई ॐ श्रीः ॥

इदं वेदत्रयबीजरूपं, तारत्रयशिरः स्वरूपं, प्रणवत्रयाक्षरात्मकं दैवरातीयं दिव्यं आर्षेयं वेदध्वजचिह्नम् ।

### ॥ अत्र मध्यस्थम् ॐ इति प्रथममक्षरम् ॥ ( १ )

अत्र मध्ये प्रतिष्ठापितः प्रणवः ओङ्कारः प्रसिद्धः, यजुर्मन्त्रेषु च चतुर्वेदीयेषु छान्दोग्यादिषु उपनिषत्सु च प्रतिपादितः सर्ववेदसारभूतः उद्गीथादि सामस्वरप्रधानः ब्रह्मात्मादि परवस्तुवाचकः इति अनुश्रूयते ।

"ओमिति ब्रह्म ओं खं ब्रह्म ओमित्येकाक्षरं ब्रह्म, ओमित्येतदक्षरमिदँ सर्वम्" ओमित्येतदक्षरमुद्गीथमुपासीत" "ओमित्येवं ध्यायथ आत्मानम्" इत्यादिषु तदनुश्रवणं सुस्पष्टतरम्, तदेतद्व्यक्तं प्रणवाक्षरम्

सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदंसङ्ग्रहेण ब्रवीमि, ओमित्येतत् ॥

(कठोप० १, २, १५) इति च स्पष्टोऽर्थः ।

### ॥ पूर्वं स्थापितं "ई" इति द्वितीयम् ॥ ( २ )

"ई" इत्येतत् तु एकाक्षरं गुप्तप्रणवसंज्ञकम्, तत्त्वत्रयसत्त्वेन प्रपूर्णम्, ऋग्वेदे चतुर्ष्वपि वेदेषु पठितानां ऋङ्मन्त्राणां अन्तः ॐ इत्येतदक्षरं यत्र कुत्रापि न दृश्यते, ओंकारस्य यजुष्ट्वेन-समाम्नानात्, तथा च वै आरण्यके अनुश्रूयते ब्रह्मयज्ञे "ओमिति प्रतिपद्यते० तदेतद्यजुः" इति ।

यथा "भूर्भुवः स्वः" इति व्याहृतीनां यजुर्मन्त्ररूपत्वात् ऋङ्मन्त्रेषु न तासां पाठोऽस्ति एतदानुपूर्व्येण, सामस्त्येन, तद्वदेव ओङ्कारस्यापि इति प्रतीयते ।

ऋङ्मन्त्रेषु तु परस्यब्रह्मणः सद्वस्तुनः चिदात्मनो वाचकं "ई" इत्येव तन्निदर्शकमक्षरमनुश्रूयते, यथा "तत् सत्" इत्यादिकम् "ओं तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति तदनुस्मरणम् ।

"ई" इति अस्मिन् केवले स्वरात्मके अक्षरे किञ्चिदस्तिरहस्यम् । तच्च तत्त्वत्रय-सामरस्येन "जगद्-ईश-जीवात्मनां योगैकसत्त्वबोधकत्वम् इति प्रतिज्ञायते ।

तथा हि प्रत्यक्ष-परोक्ष-अपरोक्षरूपेण विततानां अधिभौतिक-अधिदैविक-अध्यात्मिक तत्त्वान्वितानां जगद्-ईश-जीवात्मनां विभागेन समासेन च अर्थात् व्यस्त-समस्तरूपेण बोधकं ई इत्येतद् एकमेवाक्षरं भवति, तथा ऋङ्मन्त्रेषु त दर्शनात्, तथाहि—

"य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्"

इति ( ऋ० १, १६४, ३२ )

इति प्रत्यक्षस्य जगतः निदर्शकः ईङ्कारः।

"तिस्रो मातृस्त्रीन् पितृन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति"

( ऋ० १, १६४, १० )

इति परोक्षसिद्धस्य विश्वाधारकस्य परमात्मनः सद्वस्तुनो दर्शकं ईमिति एतदक्षरम्, अत्र "न ईं" इति पदविभागेन ईं इति तं परमं पुरुषं न अवग्लापयन्ति इत्यर्थः।

"य ईं चिकेत गुहा भवन्तमा यः ससाद धारामृतस्य"

इति, (ऋ० १, ६७, ४)

इति च अपरोक्षस्य अन्तरात्मनो दर्शकं भवति, गुहायां भवन्तं ईं एनं अन्तरात्मानं यःचिकेत जानाति इत्यर्थः सम्पद्यते, तथा ऋतस्य सत्यस्यात्मनः धारां चैतन्यधारात्मिकां ईं वाचं यः आससाद-प्राप, "श्लोकः धारा इला" इति धाराशब्दस्य वाङ्नामसुपाण (वेद निघण्टुः–१, ११) "तां पद्मिनीमीं शरणमहं प्रपद्ये०" इति श्रीसूक्ते तस्याः पराशक्तेः ईमित्येदक्षरमेव वाचकं भवति।

"आयातु वरदादेवी अक्षरं ब्रह्मसम्मितम्।
गायत्रीं छन्दसां माता इदं ब्रह्म जुषस्व मे॥

इति, (ना० उ० १५, १)

अत्र गायत्रीं ईं इति पदविभागात् ईं इत्यस्य ब्रह्मत्वं ब्रह्म सम्मितत्वं अक्षरात्मत्वं च उपदिष्टमनुश्रूयते।

छन्दो दर्शने तु ब्रह्मणस्पते तस्य परमात्मनः गुह्यं नाम ईं इति अनुश्रावितम्, तथैव तच्च विश्वस्य प्रकाशकं परमं ज्योतिरिति ज्योतिः स्वरूपं ब्रह्मेति च, स्पष्टार्थतया उपदिष्टं दृश्यते।

"ब्रह्मणस्पतेर्यः समिदं गृणाति श्रदस्मै दधानोऽमृतं नाम गुह्यम्।
तस्येदुविश्वमि भवाति भद्रं ब्रह्मतदीं-ज्योतिर्विश्वस्य दर्शयत्॥

इति, (छं० द० अनु० ३, १, ८)

एवं सोऽयमीङ्कारः केवल एव स्वतन्त्रेण उपदिष्टः अनुश्रूयते, तथा च यजुर्मन्त्रवर्णः—

"ईङ्काराय स्वाहा। ईङ्कृताय स्वाहा।

इति, (तै० सं० ७, १, १९, ९)

(वैश्वदेवकाण्डे अश्वमेधप्रश्नः।)

अत्र ईं इत्यपि तत्स्वरनादानुस्वाराद्यनुकरणमात्रं वेदितव्यम्, यथा ओङ्कारस्य।

"ओमित्येतदनुकृतिहस्मवा अप्योश्रावयेत्याश्रावयन्ति"

इति (तै० शी० उ० ८, १)

स्पष्टमेव अनुकरणरूपत्वम्, उपदिश्यते, अतएव तस्य अनुज्ञाक्षररूपत्वं प्रतिज्ञायते—

"तद्वा एतदनुज्ञाक्षरं विद्धि यद्धि किंचानु जानाति ओमित्येवतदाह"

इत्यादि (छां० उ० १, १८)

एवं ओं ईं इत्येतदुभयमपि समानमेवेति गम्यते ।

अन्ते स्थापितम् "श्री" इति तृतीयम् (३)

"शेषेयजु: शब्द:" इति (जै० मी० सू० ) इति न्यायेन यजुष्ट्वप्रधानं, छन्दोमयवाग्विभूतरूपं, ऋग्यजु: सामसरवसम्पत्स्वरूपं, लक्ष्मी बीजाक्षरं, श्रीदेव्या: शक्ते: वाचकं, परमात्मन: परमपुरुषस्य पत्नीस्वरूपं भवति "श्री:" इति संज्ञाङ्कितम्, तथा च यजु: ।

"श्रीश्चते लक्ष्मीश्च पत्न्यौ"

इति, (शु० य० सं० ३०, २२)

तदनुश्रवणम् ।

"अहिर्बुध्नियमन्त्रं मे गोपायायमृषयस्त्रयी विदा विदुः ।
ऋचः सामानि यजूंषि साहिश्रीरमृता सताम् ॥

इति च (तै० ब्रा० १/२/१/६)

तस्या: श्रिय: त्रयीस्वरूपत्वं अनुश्रूयते ।

अत्र उभयत्रापि "श्री:" इति विसर्गान्तिमेवतदेतद् बीजाक्षरं भवति, तदेतत् प्रथमा-विभक्त्यन्तं एकाक्षरं पदम् ।

तन्त्र शास्त्रे तु "श्रीं" इति अनुस्वारान्तं लक्ष्मीबीजम्, तच्च दशमहाविद्यासु अन्तिमं शक्तिबीजपरं कमलाबीजमन्त्राक्षरम्, तथा "ॐ ह्रीं श्रीं" इति षोडशी मन्त्रे, "ऐं ह्रीं श्रीं" इति त्रितारी मन्त्रेऽपि तृतीयं बीजं तत्समानमेव इति विशेष: ।

एवं ॐ इति व्यक्त: प्रणव:, ईं इति गुप्त: प्रणव:, श्री: इति शाक्त: प्रणव:, इति त्रितारात्मकमिदं सङ्केतेन संशोधितं ध्वजचिह्नम्, तच्च "ऋक्-सामयजुषां" त्रयाणां वेदानां अनुक्रमेण "ईं ॐ श्री:" इति प्राधान्येन प्रणवात्मकानि मूलबीजमन्त्राक्षराणि भवन्ति, "ऋचः सामानि जज्ञिरे, यजुस्तस्मादजायत । ऋचः समानि यजूंषि," इति ऋक्सामयजू: क्रमेणैव तत्पाठानुश्रवणम्, "ऋक्सामयजुरेव च" इति च तदनुस्मरणम् ।

अत्र अन्योऽपि कश्चिद् विशिष्टोऽर्थो गम्यते, "श्रीश्चतेलक्ष्मीश्चपत्न्यौ, इति वचनानुसारेण मध्ये प्रतिष्ठितस्य प्रणवार्थात्मन: तस्य परमपुरुषस्यज्ञानप्रधानस्य वाम-दक्षार्धात्मिके इच्छा-क्रियाशक्तिप्रधाने श्री: लक्ष्मी: इति उभे शक्तीभवत:, ते च श्रयते श्रीयते इति श्री:, लक्षयति लक्ष्यते इति लक्ष्मी:, इति व्युत्पत्त्या ईं इति बीजाक्षरं लक्षणया दक्षिणार्धशक्तिलक्ष्यकम्, तथा लक्ष्मीरिति या शक्ति: तस्या: इदं बीजाक्षरं ईं इति, "तां पद्मिनीमीं शरणमहं प्रपद्ये" इति तदनुश्रवणात्, इति सङ्केत:, एवमिह बहुधा वेदमन्त्रादि प्रमाणेन संविमृश्य मयैव सङ्गृहीतमीदं आश्रमे प्रतिष्ठापितं ध्वजरूपेण, तथा आश्रमस्य सर्वेषुग्रन्थेषु व्यावहारिकेषु पत्रेष्वपि

प्रथमतः संदर्शनार्थं सम्मानेन संधृतं महामाङ्गल्यप्रदं सर्वसम्पदादिसत्त्वास्पदं च भवितु मर्हति ।

अतः एव एतेषां तत्त्वबोधार्थं अत्र प्रथमतः श्लोकमुखेनैवोर्पणितम् तत्त्वस्वरूपम्, पाठकानां श्रोतृवर्गाणां च मनः समाधानार्थम् इति ।

सोऽयं वेदध्वजः चिरं विजयताम्, इति आशास्ते दैवरातः अत्र श्लोकाः १०—दश-एवं–८-१४-१० इति एषां योगेन ३२ श्लोकाः ।

॥ ई ॐ श्रीः ॥

# ॥ वेदार्थ कल्पलतिका ॥

## ॥ प्रथमाकला-गायत्री ॥

अथेयं कल्पलता वेदमूलभूतच्छन्दोरससत्त्वसुललिता, गायत्री मन्त्रमूलोदिता, प्रणवबीजा-क्षरमूलपूर्णबिन्दुपदसंश्लिष्टा, व्याहृतित्रयसत्त्वविशिष्टा, त्रयीस्वर-रसादिकलाविष्टा, तत्त्व-त्रयसामरस्य सत्त्वपरिक्लृप्ता, विश्वतोमुखेन स्वरूपेण वितता, सुविशालसर्वविभूतिविकास-विलोलिता, च संदृश्यते, सेयं विचित्रतर सवित्कला विलास सम्प्लुता, सर्वार्थतत्त्वप्रकाशन-समर्था, ज्ञान-भावना-कर्मादि-योगविद्यानुभूति सत्त्वरसपरिपूर्णा प्रभवतीति विमृश्यते ।

अस्यां कल्पलतायां द्वात्रिंशत् कलाः सन्ति, तासु प्रथमतः गायत्री-मन्त्रार्थतत्त्वसमर्थन परिक्लृप्ता-षट्कलान्तं प्रवृत्ता गायत्र्या एव सम्बन्धेन विशिष्टतत्त्वार्थोपवर्णनमुखेन १९२ द्विनवत्युत्तरेण एकशतश्लोकपरेण ।

तत्रापि अस्यां प्रथमायां कलायां गायत्री प्रणवव्याहृतिरूपाणां यजुर्मन्त्राणां तत्त्वार्थः निरूपितः, तेषां ऋषिदैवत-च्छन्दसामपि निर्देशपूर्वकम्, तथा गायत्री शिरसः तात्त्विकोऽर्थे । वर्णितः, ततः गायत्री मन्त्रस्यापि ऋषि-दैवत-च्छन्दाँसि समर्थितानि, तथा गायत्रीशब्दार्थोऽपि अन्ते समर्थितः सकेपतः, संक्षेततः, ब्रह्मोपदेशे बटोरुपनयने गायत्री मन्त्रात् पूर्वं "ओं भूर्भुवः स्वः" इति संग्रहेण संयोजिताः प्रणव-व्याहृति संज्ञकाः चत्वारो यजुर्मन्त्राः, ततश्च पूर्वाचार्यपरम्प-रया समागता तदुपदेशे जप-प्राणायामादिषु च तत्संयोजनेनैव जपादि प्रक्रियापद्धतिः, इति प्रतीयते, वस्तुतः गायत्री मन्त्रस्यास्य पाठः प्रणव-व्याहृतिभिः सह यत्र कुत्रापि मूलतः वेदेषु न विद्यते, गायत्री मन्त्रः ऋग्रूपः, नियताक्षरेण पादत्रयेण विशिष्टत्वात्, "प्रथमं छन्दस्त्रिपदा-गायत्री, अष्टाक्षरागायत्री" इत्यादि वचनात् ।

प्रणवव्याहृतीनां यजूरूपत्वम्, "ओमिति प्रतिपद्यते; त्रीनेवप्रायुङ्क्त भूर्भुवःस्वरि-त्याह, एतद्वै वाचः सत्यम्:' इति तन्निर्देशात् (तै० आ० २, ११) ।

"भूर्भुवः स्वरिति वा एतास्तिस्रो व्याहृतयः"

इति च, (शी० ३, ५, १)

एवमेव गायत्र्याः शिरोमन्त्रोऽपि यजूरूप एव, "ॐ आपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्" इति प्रसिद्धः, (ना० उ० १५, २) प्राणायामादौ एतैः सहयोगेन विनियोगोविहितः ।

"गायत्रीं शिरसा सार्धं जपेद् व्याहृति पूर्विकाम् ।
प्रतिप्रणव संयुक्तां त्रिरयं प्राणसंयमः ॥

(इति, या० स्मृ० २, )

तत्रापि जपादौ तिस्रो व्याहृतयः, प्राणायामे तु सप्तव्याहृतयो विहिताः इति विशेषः, ताश्च "ओं भूः, ओं भुवः, ओं सुवः, ओं महः, ओं जनः, ओं तपः, ओं सत्यम्" इति, (ना० उ० १५, २) ।

**ॐ इति प्रणवः प्रसिद्धः, ब्रह्मात्मवाचकः एकाक्षरी मन्त्रः,** य उद्गीथः स प्रणवः, यः प्रणवः स उद्गीथः, **स प्रणवः इति, (छा० उ० १, ५, १)**

"ओमित्येतदक्षरमुद्गीथमुपासीत्"

**इति च, (छा० उ० १, ४, १)**

**तस्य ऋषिः देवता छन्दः विनियोगश्च उपनिषदि श्रूयन्ते ।**

"ओमित्येकाक्षरं ब्रह्मअग्निर्देवता ब्रह्म इत्यार्षम् ।
गायत्रं छन्दं परमात्मं स्वरूपम् ।
सायुज्यं विनियोगम् ॥"

**इति, (ना० उ० १४, )**

**अन्यत्र तु** "प्रणवस्य ब्रह्मा ब्रह्मा दैवी गायत्री" **इति विशेषरूपेण स्मर्यते, (आ० गृ० परि० ) प्रणवस्य एकाक्षर सत्त्वात्** "दैवी गायत्री" **इति विशिष्टा संज्ञा,** "छन्दः । गायत्री । दैव्येकम्" **(छं० सू० १, ) गायत्र्या ऋचस्तु अष्टाक्षराप्त त्रिपदा रूपत्वम्, प्रसिद्धम्,** "गायत्री चतुर्विंशत्यक्षरात्रिपदा" **इति, (ना० उ० १४, ) एतेनैव एकाक्षरस्य प्रणवस्य यजुष्ट्वं गम्यते, समस्तव्याहृतीनां** "परमेष्ठीप्रजापतिः प्रजापतिर्बृहती" **इति ऋष्यादीनि, (आ० गृ० परि० )**

"गायत्रीशिरसः प्रजापतिर्ब्रह्माऽग्निवाय्वादित्या यजुः" **इति (आ० गृ० प० ) इति विशेषः ।**

**गायत्री मन्त्रस्य विश्वामित्रः ऋषिः सविता देवता, गायत्रीछन्दः इति सुप्रसिद्धमेव,** "गायत्र्यागायत्री छन्दो विश्वामित्र ऋषिः सविता देवता" **इति तदनुश्रवणम्, (ना० उ० १४, ) । तथा विनियोगोऽपि श्रूयते,** "गायत्री चतुर्विंशत्यक्षरात्रिपदाषट्कुक्षिः पञ्चशीर्षा, उपनयने विनियोगः" **इति, (ना० उ० १४) ।**

**अस्मिन् विषये तु अनिवार्यतया प्राप्तः विवादग्रस्तत्वेन समापतितः काचित् पुनर्विचार प्रसङ्गः, स च इत्थम्भूतः–अत्र विश्वामित्र ऋषिः भारतेतिहासप्रसिद्धः कश्चित् पुराणपुरुषः राज्ञः गाथिनः पुत्रः, स एवास्य मन्त्रस्य मण्डलस्य च द्रष्टा ऋषिर्भवितुमर्हति इति ।**

"कुशिकस्त्वैषीरथिरिन्द्र तुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार तस्येन्द्र एवगाथी पुत्रो जज्ञे ।
गाथिनो विश्वामित्रः स तृतीयं मण्डलमपश्यत् ॥"

**इति च सर्वानुक्रमसूत्रम् (ऋ० सर्वा० सू० मं० ३, १ ) इत्येकाऽर्थः, आर्षः पक्षसिद्धः ।**

तत्र "प्राणा वा ऋषयः, "प्राणो वै वसिष्ठः, प्राणो विश्वामित्रः" **इति च प्राणस्यै वसिष्ठविश्वामित्रादि नामतः ऋषित्वनिर्देशात्, प्राण एवात्र विश्वामित्रः ऋषिरिति अन्यः पक्षः, केचित्तु तत्रापि विचिकित्सया अस्मदादिषु प्रसिद्धस्य प्राणस्य कल्पितेऽपि ऋषित्वे तादृश मन्त्रद्रष्टृत्वसामर्थ्यदर्शनात् विश्वप्राणरूपस्य सूर्यान्तिर्यामिणः इन्द्रस्य ब्रह्मात्मन एव प्राधानान्येन ऋषित्वभिमन्यन्ते,** "पूषन्नेकर्षेयम सूर्य" **(ई० उ० १६, ) ।**

**"इन्द्रो ब्रह्मेन्द्र ऋषिः"**

**( ऋ० ८, १६, ७ )**

"यश्छन्द सा मृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात् सम्बभूव। समेन्द्रोमेधया स्पृणोतु।

(शी० उ० ४, )

इति च तदनुश्रवणम्।

अतएव राजर्षेऽपि विश्वामित्रस्य ऐन्द्रसत्त्वेनाविर्भावाद् भूयश्च तपसा सिद्धं ब्रह्मर्षित्व मपि वस्तुतत्त्वसिद्धमिति समर्थयन्ति, "अग्निरस्मि जन्मना जातवेदा:०" इति च तदनुश्रवणम्, तस्येव मन्त्रदर्शनम्, तस्य च विश्वामित्रस्य ऐन्द्रसत्त्वादाविर्भावेन इन्द्रात्मता संगच्छते, "तस्येन्द्र एव गाथी पुत्रो जज्ञे, गाथिनो विश्वामित्र:" इति तदनुस्मरणात् इति विशेषः।

अत्र सविता देवता इत्यस्मिन् विषयेऽपि भवति महतीबहुधाविचिकित्सा, मीमांसा च, तथाहि– "सविता" इति शब्दश्रवणमात्रेण असौदिविस्थितः सूर्य एव प्रथमतः (सर्वेषां) दृष्टि प्रथमवतरति, ततः बुद्धिपदं व्याप्नोति।

युक्तमेवैतत् वाच्यार्थे शब्दशक्त्या प्रथमतः व्यवहारप्रवृत्तेऽनिवार्यत्वात्, तत्त्वदृशा तु लक्ष्यार्थेऽपि शास्त्रोपदेशात् विशिष्टाप्रवृत्तिऽभीष्टैव-सर्वेषामिति निर्विवादम्, अत्र केवलस्य भौतिकस्य सूर्यस्य तादृशं दिव्यं परोक्षसिद्धं देवतात्वं नैवास्ति, तदन्तर्यामिण एव देवतात्वानुश्रवणात्, तस्यैवप्राधान्येन आश्रयणाच्च।

"योऽसा वादित्ये पुरुषः सोऽसावहम्"

(शु० य० सं० ४, १६)

"स यश्चायं पुरुषो यश्चा सा वादित्येत्स एकः"

इति च (भृ० उ० १०, ४)

तदनुश्रवणम्, अस्मिन् अर्थे अन्तर्यामिब्राह्मणं महत् प्रमाणम्,, आदित्यादन्तरा० यं आदित्यो न वेद, यस्य आदित्यः शरीरम्" यः आदित्येतिष्ठन्, आदित्यमन्तरो यमयति, इति, (बृ० उ० ३, ७, ९)।

स एव सर्वान्तरात्मा सविता स एवास्य गायत्री मन्त्रस्य परमा देवतात्मा प्रधाना, इति वेदशास्त्रादि प्रमाणसिद्धं तत्त्वम्, सर्वेषां वेदविदं सम्मतमेव।

"आप्राद्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च"

इति (ऋ० १, ११५, १)

तदनुश्रुतिः।

तस्माद् गायत्री इति स्त्रीलिंग शब्द मात्रेण अत्र न काचिद् गायत्रीनामोदिता देवता भवितुं अर्हति, तस्याः छन्दोऽभिधानार्थकत्वात्, तथाऽपि तेजोध्यानातलम्बनार्थमेवतस्य सवितुर्योगेन तदधिष्ठानभूता परादेवतैव छन्दोमुखेन तद्धर्मेण च समन्वयात् गायत्रीनाम्ना परिकल्प्यते प्रतिध्यायते च तज्जपोपासनादि योगेषुः।

"बालां बालादित्य मण्डलमध्यस्थाम्०।
ब्रह्मदैवत्यां गायत्रीं नामदेवतां ध्यायामि ॥

(आ० गृ० प० )

तथा तामेव आदि योगोदितां सन्ध्यात्रयेऽपि पृथक् पृथगभिधानैः विविधरूपैश्च तदभिध्यानं विधीयते ।

"मध्यन्दिने तां युवां युवादित्य मण्डलमध्यस्थाम्० ।
रुद्रदैवत्यां सावित्रीं नामदेवतां ध्यायामि ।। इति ।।
"अथ सायं तां वृद्धां वृद्धादित्य मण्डलमध्यस्थाम्० ।
विष्णु दैवत्यां सरस्वतीं नामदेवतां ध्यायामीति० ।।

(आ० गृ० परि० )

वस्तुतस्तु तत्तेजोध्यानमेव प्रधानम्, न तु श्लोकादि पठनम् इति ज्ञेयम् । "भर्गोदेवस्य धीमहि" इति मूले मन्त्रवर्णे एव तदनुध्यान क्रियायोगात्, एवमेव पञ्चशीर्षादि तत्त्वविशेषेणापि स्त्रीरूपत्वेनापि कल्पनया केचिद्ध्यायन्ति, वस्तुतस्तु गायत्री इति छन्द सः नामधेयं नतु देवतायाः, देवता तु सवितैवेति वस्तु सिद्धं तत्त्वम् ।

अत्र गायत्री छन्द सो विषयेऽपि किञ्चिदवशिष्टं विशिष्टं निवेद्यमस्ति, तच्च मूलश्लोकेऽपि अनुक्तमिति किञ्चिदेव निवेद्यते ।

"अष्टाक्षरा गायत्री त्रिपदा चतुर्विंशत्यक्षरा" इति तच्छन्दसोलक्षणम्, अस्मिन् गायत्री मन्त्रे प्रथमेपादे "तत् सवितुर्वरेण्यम्" इति सप्तैवाक्षराणि विद्यन्ते, तथाऽपि "वरेण्यं" इति पदे अक्षरद्वयव्यूहेन तत्र अष्टाक्षरभावनायोगात् तत् पूरयितुं युक्तम् ।

"एकाक्षरी भावान् व्यूहेत्" इति ( ) तन्मार्ग दर्शनोपदेशानुसारेणैवेति तदिदं सङ्गच्छते ।

गायत्र्याः शिरोमन्त्रः

"ॐ आपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्"

इति, (ना० उ० १५, २)

प्रणव व्याहृति वदेव अयं शिरो मन्त्रोऽपि यजुः-स्वरूपः, गायत्रीमन्त्रात् पृथग्भूत एव, प्राणायामादौ विनियोगार्थं सङ्गृहीतः, विशिष्टार्थस्तु श्लोके वर्णितः ।

गायत्री शब्दार्थः सुप्रसिद्ध एव तदव्युत्पत्तिसिद्धः, "गायन्तं त्रायसे यस्माद् गायत्रीत्वं ततः स्मृता" इति स्पष्टोऽर्थः, अस्मिन्नर्थे स्पष्टार्थक मौपनिषदं वचनम् "एवं वैषागायीत्री अध्यात्मं प्रतिष्ठिता साहैषा गयाँस्तत्रे 'प्राणा वै गयाः' तद्यद् गयाँस्तत्रे तस्माद् गायत्री नाम०" इति, (बृ० उ० ५, १४, ४) ।

एवं व्युत्पत्त्यन्तरेण अर्थान्तरमपि गम्यते—गायत्री नाम स्वयं गायति त्रायते च इति, "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च, वाग् वै गायत्री, वाग् वा इदं सर्वं भूतं गायति त्रायते च" इति तदनुश्रवणम् (छां० उ० ३, १२, १) अत्र प्रत्यक्षब्रह्मरूपायाः वाचकशक्त्याः इदं स्वतः सिद्धं सामर्थ्यं यद् सर्वं भूतार्थरूपवस्तु बोधरूपम्, तत्प्रकाशनेन तद्रक्षणसत्त्वं च, तदिदं सामान्यतः सर्वासां वाचां सामर्थ्यं प्रत्यक्षसिद्धमेव, अत्र छन्दस्वत्याः गायत्र्याः वेद वाचस्तु ततोऽपि विशिष्टतरं सामार्थ्यं अस्मिन् अन्तिमे श्लोके समर्थ्यते, तच्च इत्थम्भूतम्—गायत्रेणच्छन्दसा गुप्तं तत् परं ब्रह्मवस्तु सिद्धं सेयं गायत्री स्वयमेव गायति, तथा ब्रह्मोपदेश-

मुखेन प्रतिबोधितं तद् वस्तु प्रकाशनार्थं श्रुतिमतां विदुषामन्तः तदनुभावपर्यवसायिताभ्युदय योगार्थं प्रतिपालयति इति वैदिकमार्षेयं तत्त्वम् ।

अतएव उपनिषदुक्तं तद्रहस्यं मनुश्रूयते—"यश्छन्द सा मृषभो विश्वरूपत्र छन्दोभ्योऽध्यमृतात् सम्बभूवा समेन्द्रोमेधया स्पृणोतु । अमृतस्यदेव धारणोभूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधु मत्तमा । कर्णाभ्यां भूरिविश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । "श्रुतं मे गोपाय ।" इति (शी० उ० ४, १) "ॐ नमोब्रह्मणेधारणं मे अस्त्वनिराकरणं धारयिताभूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओम्" इति च, (ना० उ० ७, ६) ।

॥ इति प्रथमाकला समाप्ता ॥

---

## ॥ द्वितीया कला ॥

### ॥ गायत्री मन्त्रार्थ प्रकाशिका ॥

अत्र प्रथमतः—गायत्री मन्त्रस्य अन्वयानुसारेण अर्थोदर्शितः,—"यः, नः, धियः, प्रचोदयात्, सवितुः, देवस्य, तत्, वरेण्यम् भर्गः, धीमहि" इति दशानां पदानां प्रत्येकशः तदर्थानां समर्थनं कृतमस्ति, ततः एकेनैवश्लोकेन सामान्यतः समग्र मन्त्रार्थः समर्थितः, ततश्च पुनः अधिभौतिकं अधिदैवतं, अध्यात्मं चेति तत्त्वत्रयविभागेन तन्मत्रार्थस्यप्रतिपादनं विशिष्टरूपेण विमर्शनेन सप्रमाणं कृतं विद्यते ।

(१) "यः" इत्यस्य तत्त्वत्रयान्वयेन प्रत्यक्ष-परोक्षापरोक्षसिद्धस्य सवितुः—तथा तदन्तर्यामिणः—तथा अस्माकं अन्तरात्मनश्चबोधकत्वेन समर्थनम्, एकेनैवशब्देन एतेषां त्रयाणामपि अर्थानां सङ्ग्रहेण सम्पन्नम् ।

(२) "नः" इति अनेन एकेनैवपदेन (अस्मच्छब्दस्य) "षष्ठी-चतुर्थी-द्वितीयानां" तिसृणां विभक्तीनां त्रयाणामपि अर्थानां सङ्ग्रहः शक्यते कर्तुम्, अस्मच्छब्दस्य तासु विभक्तिषु "नः" इति एकरूपादेशात् ।

"युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वां नावौ"

(पा० सू० ८, १, २०)

"बहुवचनस्य वसूनसौ" (२१) इति तत् सूत्रद्वयम्, अस्मिन्नर्थे शब्दशास्त्रप्रसिद्धं सदुदाहरणम् ।

"सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद् वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः ॥"

इति, (कौमुदी)

तद्वदेव अत्रापि नः इति पदेन तद्विभक्तित्रयाप्ताः अर्थाः त्रयोऽपि सङ्गृहीताः कल्पलतायाः तत्त्वत्रयसमन्वयेन वाच्यार्थ-लक्ष्यार्थ-ध्वन्यार्थयोगेन, इति विशेषः ।

"प्रेरयेन्नो धियोऽस्माकं योऽस्मान् प्रतिधियोऽनुताः ।
योऽस्मभ्यं सर्वदोऽभीष्टः सविताऽसौ च सोऽप्ययम् ।।" इति ।।

"तथाहि—"यः नः-अस्माकं धियः प्रेरयेत्" इति षष्ठीविभक्तिपरोऽर्थः, "यः नः—अस्मान् धियः प्रतिप्रेरयेत् विषये प्रवृत्त्यर्थम् इति, अपरः तथा ताश्च धियः नः—अस्मान् प्रतिप्रेरयेत् प्रत्यङ्मुखेन निवृत्त्यर्थं विषयेभ्यः इति च द्वितीयाविभक्तिपरोऽर्थः ।। "यः नः - अस्मभ्यं इष्टः सर्वार्थसिद्धिकृते इति चतुर्थीविभक्तिपरोऽर्थः, एतेषु त्रिष्वपि अर्थेषु प्रमाणपराः ऋङ्मन्त्रादयो विद्यन्ते, ते च अन्ते दीयन्ते ।। इति सङ्क्षेपः ।।

(३) "धियः"—इदं द्वितीयाबहुवचनान्तं पदम्, धीयन्ते आत्मना इति धियः, आत्मानं दधते इति धियः, विषयान् वा आत्मनि दधति इति धियः, तस्य च धीन्द्रियस्य इन्द्रात्मबोधकत्वेन इन्द्रलिङ्गत्वं दर्शितम् ।

"इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा"

इति (पा० सू० ५, २, ९३)

इन्द्रात्मनस्तु ज्ञानादिसाधनीभूतानि आन्तराणि धीन्द्रियाणि यः प्रेरयेत् इति, "धीङ आधारे" इति दिवादेः आत्मने पदिनः धातोरपि धीशब्दनिष्पत्तेः आत्मनः धियां च परस्परं आधाराधेयभावत्वं प्रतीयते, आत्मवस्तुरूपं चेतनमेव सर्वासां धियां आधारभूतं आन्तरतमधिष्ठानं भवति । तथा चेतनात्मनः तस्य ता एव धियः सर्वव्यवहारास्पदीभूताः करणरूपाः साधनात्मिकाः सन्ति ।। इति ।। तदिदं कर्तरि कर्मणि चार्थेऽपि समानमेव इति विशेषः ।।

(४) "प्रचोदयात्—प्रेरयेत्" "चुद् सञ्चोदने" चुरादिः, (७४) अत्र चेतनात्मना धियां प्रेरणं च त्रेधावृत्तिविशिष्टम्, ताश्चवृत्तयः प्रवृत्ति-निवृत्ति-निष्ठारूपाः त्रिविधाः स्वभावसिद्धाः सर्वेषामपि धीन्द्रियाणाम्, शास्त्रान्नियमितास्तु—सत्सु प्रवृत्तिः, असद्भ्यो निवृत्तिः, अत्यन्ते हिते अन्तरात्मनि परमात्मनि च निष्ठा, इति विवेकः, अत्र "प्रचोदयात्" इति लिङन्तं क्रियापदमिदम् "प्रचोदयेत्" इत्यस्यैव आर्षरूपम्, प्रेरयेदित्येवतदर्थः ।

(५) "देवस्य" देवः इत्यस्य अकारान्तपुल्लिङ्गस्य षष्ठ्येकवचनान्तं पदम्—"दिव्" क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदस्वप्नकान्तिगतिषु" इति दिवादिः दीव्यतीतिदेवः ।

"द्युत्" दीप्तौ, भ्वादिः—द्योतते इति देवः, द्योतयति "इत्यादिना स्वयंम्प्रकाशः विश्वप्रकाशकश्च देवः इति गम्यते, तेन ज्योतिर्मयः कश्चिद् दिव्यविभूतिः इति प्रतीयते, सच तत्त्वत्रयेण त्रिविधः, प्रत्यक्ष-परोक्षापरोक्षसत्त्वः, तदेतत् पदं सवितृशब्दस्य विशेषणपरम् ।

(६) "सवितुः" सवितृ इति ऋकारान्त पुंल्लिगस्य षष्ठ्येकवचनान्तं पदम् । "षूङ प्राणिप्रसवे, दिवादिः, षूप्रेरणे तुदादिः, इति धात्वर्थयोगात् सर्वभूतप्रसवधर्मा, प्रेरणकर्मा च सविता इति गम्यते, सच तादृशः प्रसवोऽपि उत्पादनरूपः प्रेरणादिरूपश्च, सच अन्ततः बाह्यतः परतश्च भवितुमर्हति इति च प्रतिज्ञायते, अस्य सवितृ शब्दस्यापि त्रिविधोऽर्थः, प्रत्यक्षसिद्धो भौतिकः तेजोमयः तेऽसौ दिवि प्रत्यक्षं दृश्यते, अमुष्यापि आन्तरतमः केवलश्चेतनः तदन्तर्यामी अधिदैवततत्त्वेन परोक्षसिद्धः, सच सवितृशब्दस्य लक्ष्यार्थरूपः, अस्माकं आन्तरः प्रत्यगात्मा अध्यात्मतत्त्वेन गम्यते, सर्वासां धियां प्रेरकः, इति ।

"प्रत्यङ्देवानां विशः प्रत्यङ्उदेषि मानुषान् ।
प्रत्यङ्विश्वं स्वर्दशे ।।" ऋ० १/५०/५
"सूर्य आत्मा जगतस्तस्थुषश्च"
इति च तदनुश्रुतिः (ऋ० १/११५/१)

"योऽसावसौ पुरुषः सोऽहमस्मि"
(ई० उ० १६)

"योऽसा वादित्ये पुरुषः सोऽसावहम्"
इति (शु० य० सं० ४०, १६)

इति च औपनिषदं दर्शनम् ।

(७) "तत्" इति सर्वनामसंज्ञकं नपुंसकं द्वितीयैकवचनान्तं पदम्, परोक्षस्य वस्तुनः सन्निदर्शकम् "तदितिपरोक्षेविजानीयात्" इति प्रसिद्धम् ।

"तदिदास भुवनेषु ज्येष्ठम्"
( ऋ० १०, १२०, १ )

"तत् सवितुर्वृणीमहे० श्रेष्ठं सर्वधातमम"
इति च (ऋ० ५, ८२, १)

ओंतत् सदिति निर्देशो ब्राह्मणस्त्रिविधः स्मृतः" इति गीतास्मृतिः सुप्रसिद्धा ।

(८) "वरेण्यम्" वरणीयं श्रेष्ठं च, वरितुं शक्यं योग्यं च, इति तदर्थः, "वृञ् वरणे" स्वादिः, "वृञ् आवरणे" चुरादिः, एतद्धात्वर्थयोगात् तदुभयार्थयोः सिद्धिः, अस्यापितत्त्वत्रय-योगेन प्रत्यक्षं परोक्षं अपरोक्षं च स्वरूपमनुसन्धेयम्, प्रत्यक्षमादित्यादिविभूतिगतम्, परोक्षं तु-तदन्तर्यामिनिष्ठम्, अपरोक्ष मन्तर्हितं प्रत्यगात्मसिद्धम्, तदेतद्वरेण्यं पदं तेजसो विशेषणम्, वरेण्यं भर्गः इति तद्योगात् ।

(९) "भर्गः" इति पदं सकारान्तं नपुंसकं द्वितीयैकवचनान्तम्, "भर्गस्" इति च आर्षेयम् तद्रूपम्, "भ्रस्जपाके" इति तुदादिः, एतद्धात्वर्थयोगात् पाकसत्त्वकं सूक्ष्मतमज्योति-र्वाचकंपदम्, रुद्रस्य तु "हरः स्मरहरो भर्गः" इति अकारान्तं पुलिङ्गं पदम् ।। तथा च अत्र दिव्यं देवतासत्त्वकं कालाग्निरुद्रादि ज्योतिः स्वरूपं परोक्षसिद्धम्, प्रत्यक्षं विद्युदग्निसूर्यादिरूपं भौतिकम्, आन्तर्यमाध्यात्मकं चैतन्यज्योतिः स्वरूपं च तद् भर्गः वरणीयं भवतीति निर्गलितोऽर्थः ।

(१०) "धीमहि" इतीदंक्रियापदम्, "ध्यै चिन्तायाम्" (भ्वा०) इतिध्यानार्थकस्य आत्मनेपदिनः लिङ्लकारस्य उत्तमपुरुषस्य बहुवचनान्तं पदम्, "तदेतदार्षरूपम्" "ध्याये महि" इति तद्रूपस्यानुश्रवणात्, "ध्यायेमहिप्रतेवयम्" इति, (ऋ० ) अतएव तद्व्याख्यावसरे "धीमहि—ध्यायामः" इति (आ० गृ० परि० सूत्रे) तन्निदर्शनं सङ्गच्छते, तथैव "धीङ्" आधारे" इति (दिवादेरात्मनेपदिनः आधारार्थकस्य धीङः धातोः लिङ्लकारस्य उत्तमपुरुष-बहुवचनान्तं पदम्, तथैव "धाञ् धारणपोषणयोः" इत्यस्यापि धीमहि इति रूपं भवितुमर्हति, "छदिरधिनिधीयते" (ऐ० ब्रा० ) इति, तदा संस्थापनमेवतदर्थः भवति, यथा निधिरूपेण धनं निधीयते, समाधि रित्यपितदर्थः सम्पद्यते, यथा—"मनः समाधीयताम्," इति, योगशास्त्रे तु

पतञ्जलिदर्शने तेषां त्रयाणामपि अर्थानां योगेन पृथक् अभिधानानि पृथग्रूपेणाभिधेयानि च दर्शितानि विद्यन्ते, "धारणा,-ध्यानम्, समाधिः" इति, "देशबन्धश्चित्तस्यधारणा", "तत्र प्रत्ययैकतानताध्यानम्, तदेवार्थमात्रनिर्भासं स्वरूपशून्यमि समाधिः" इति, तत्र धाञ् धातोर्धारणा, ध्यै धातोर्ध्यानम्, धीङधातोः समाधिः "इति त्रयोऽर्थाः प्रतीयन्ते, अत्र तु धीमहि इति एकेनैवक्रियापदेन तेषां त्रयामपि अर्थानां सङ्ग्रहः युज्यते, तदा तस्य ज्योतिषः ध्यानम् निष्ठा, तत्रैव विलीनता च तेषां स्वरूपाणितत्त्वदृशासम्पन्नानिलक्षणानि भवन्ति, तदेवं आर्षस्यास्य "धीमहि" इति क्रियापदस्य वाच्यार्थ-लक्ष्यार्थ-ध्वन्यार्थादितत्त्वसिद्धः सङ्केतिकभाषाऽनुविद्धोऽर्थः इति, सङ्क्षेपतस्तत्समर्थनम्, अथ षोडशतमेश्लोकेगायत्र्याः समग्रमन्त्रार्थः उपवर्णितः, प्रथमतः सामान्यतः तदर्थबोधानुकूलयार्थम् ॥ तच्च आश्वलायनगृह्यपरिशिष्टसूत्रेप्रसिद्धम् ।

"यः सवितानोऽस्माकं धियोधर्मादि विषयबुद्धीः प्रचोदयात् प्रेरयेत् ।

तद् वरेण्यं वरणीयं देवस्य सवितुर्भर्गः प्राजापत्यं तेजोमयं रूपंवयंधीमहिध्यायामः ॥इति॥

ततः अधिभौतिकादितत्त्वत्रयेण तदर्थसमर्थनम् पृथक्-पृथक् प्रकारेण तद्विवेचनमुखेन कृतम् ।

## ॥ अधिभौतिकम् ॥

तत्र अधिभौतिकतत्त्वसिद्धेऽस्मिन् बहिर्ब्रह्माण्डेदिविदृश्यमानः ज्योतिर्मयः असौ प्रत्यक्षसिद्धः विप्रकृष्टः विश्वप्रकाशकः सूर्यएव सविता, देवश्च, यः खलुज्योतीरस्मिभिः अस्माकं प्राणभृतां सर्वेषामपि चक्षुरन्तः प्रविष्टः सन् अन्तः प्रसुप्ताः जागृता अपि स्तब्धाः सर्वाः धियः प्रेरयति,—बहिः विषयेषु प्रवर्तयति, तथा विषयेभ्यः तेभ्योनिवर्तयति, तथा कस्मिँश्चिद् अभीष्टे वस्तुनि विषये तथा आत्मनि च ता धियः प्रतिष्ठापयति, तस्य अमुष्यसवितुर्देवस्य वरणीयं दृस्यमानं सेव्यं अनुग्राहकं च तत् दिव्यं तेजः प्रत्यक्षं प्रपस्यन्तः ध्यायामः इति, एवं मन्त्रार्थज्ञानपूर्वकं तद्भावनया चं तदेवानुध्यायेत्, तदेतत् प्रतिदिनं सन्ध्योपासनायां गायत्रीमन्त्रस्य जपानुष्ठानसमये तदर्थतत्त्वमपि अनुसन्धेयमिति भावः ।

## ॥ अधिदैवतम् ॥

अधिदैवते तु तत्त्वे—अमुष्य प्रत्यक्षस्यैव सूर्यस्य अन्तर्यामी सविता, यः केवलः चैतन्यज्योतिः स्वरूपः परोक्षसिद्धः, बाह्येन चक्षुषा अदृस्यः केवलं स्वयं दृष्टस्वरूपः यः परमः पुरुषः इति परब्रह्मसंज्ञकः परमात्मा इति च वेदे प्रतिपादितः, लोके विद्वद्भिः उपदिश्यमानः श्रूयते, सः स्वयम्प्रकाशः विश्वेषां प्रकाशकश्च परमो देवतात्मा भवति इति, तस्य तत् परोक्षं वरेण्यं श्रेष्ठं ज्योतिरेव प्राप्तुं तदेवलक्ष्यमभिसन्धाय तस्यैव चेतनया अभ्युदितं आदित्यं ज्योतिः प्रपस्यन्तः तदवानुचिन्तयन्तः तस्मिन्नेव विश्वाधिष्ठानभूते परमेपदे स्वीयाः सर्वा अपि धियः समर्पयन्तः ताः प्रतिष्ठापयेयुः, तथा आत्मानमपि समर्प्य तत्रैव विलीनतया तस्यैव तादात्म्ययोगेन तदेव प्रतिपद्येरन् इति ।

## ॥ अध्यात्मम् ॥

अध्यात्मतत्त्वेतु अस्माकं अयमन्तरात्मैव सविता यः अन्ततः एव सर्वाः धियः प्रेक्षति विषयेषु प्रवर्तयति, तथैव पुनः अन्तराकर्षयति, आत्मनि च पुनः प्रतिसन्धारयति, अस्य

अन्तरात्मनः दिव्यरूपस्य सचेतनस्य सर्वधीन्द्रिय प्रेरकं तदिदं स्वान्तर्यं चैतन्यमेवानुलक्ष्य बाह्येन चक्षुषा आदित्यं तेजः प्रपश्यन्, प्रत्यञ्चमात्मानमनुचिन्तयन् अस्मिन्नेव स्वस्वरूपे प्रतितिष्ठेत्, इति विशेषः ।

एवमेतस्य गायत्री मन्त्रस्य अत्र समर्थितेऽपि अस्मिन् अर्थे अन्येऽपि विषयाः प्रमाण विशेषाश्च बहवः सन्ति अवशिष्टाः, तेऽपि षट्कलान्तव्याख्यानेन स्फुटी भवन्ति ।

एतन्मन्त्रस्य अर्थविषये प्राचामाचार्याणां तथा अर्वाचीनानां भारतीयानां विदुषां बहुविधानि बहूनि व्याख्यानानि दृश्यन्ते तेषां अर्थानां समन्वयेनैव इयं कल्पलता विरचिता,

तत्रापि जैनमतावलाम्बिनां जिनेन्द्र सूराणामपि गायत्रीं मन्त्रव्याख्यानं विद्यते, महता विचारेण विस्तारेण प्रपञ्चितम् तथैव पाश्चात्य विपश्चितां भट्ट मोक्षमूल्लर-मेग्डोनाल प्रभृतानामपि गायत्रीमन्त्रभाष्यं विद्यते, तत्र स्व स्वमतानुसारेण तत्त्वविशेषदृष्टिभेदेन च अर्थव्याख्यानभेदेऽपि गायत्री मन्त्राश्रयणं तु सर्वेषामपि समानमेव, तत्र केषाञ्चित् केवलं तत्त्वज्ञानार्थं, अन्येषां केवलं ध्यानार्थं, केषाचित् सन्ध्योपासनादौ जपादौ धीयोगादिसिध्यर्थं च इति गायत्री मन्त्रावलम्बनं तु सर्वेषामपि समानमेव ।

एवं मतभेदेन व्याख्यानेऽपि परस्परं विरोधाभासेऽपि नास्तिकलहः खण्डन-मण्डनादि कोलाहलः, यथा एकमेव कल्पवृक्षमाश्रित्य यथाशक्ति यथाभक्ति तदुपासनया स्वं स्वमभीष्टं फलं प्राप्नुवन्ति सर्वेऽपि समानरूपेण, यथा च आदित्यः एक एव समग्रेऽस्मिन् प्रपञ्चे विद्यमानानां समानभावेन समाश्रयीभूतः, तद्वदेव तस्यैव ब्रह्मणः संविदादि सत्वेनाभ्युदितेयं गायत्री प्रत्यक्षब्रह्मरूपा सतीवेदमता सर्वेषामपि अस्माकं मातेव सर्वात्मना सन्त्रात्री प्रमात्री च सर्वार्थसिद्धये प्रभवतीति प्रतिज्ञायते ।

इयमेव भारतीय संस्कृतेः संरक्षणार्थं, तथा भारतीयानामस्माकं आर्षेय दिव्यवैदिक संस्कृतेः अभ्युदयार्थं च मूलभूता गायत्रीयं सर्वेषां शरण्या, वरेण्या च सर्वसम्पदभ्युदयाय श्रेयः प्राप्तये निःश्रेयसाय अमृतत्वावाप्तये च इति सम्पद्यतेतराम्,

वस्तुतस्तु न केवलं भारतीयानां इयं माता, अपितु सर्वेषां मानवानां जीवानां देवनां दानवानमपि सद्बुद्धि प्रभृतानां सत्प्रवृत्तीनां सिद्धिदात्री प्रत्यक्षसिद्धा ब्रह्मात्मिका देवतात्मा काचिद् दिव्य विभूतिरेवेति स्वतः सिद्धं तत्त्वम् तद्वदेव इयं कल्पलताऽपिकल्पवृक्ष इवैव सर्वेषा मपि सर्वार्थसिद्धये प्रभवतादित्याशासे ।

---

## ॥ तृतीयाकला ॥

### ॥ गायत्र्याः तात्त्विकं स्वरूपम् ॥

एवं समर्थितेऽस्मिन् गायत्री मन्त्रार्थे तस्याः वाचकशक्तिरूपायाः छन्दस्वत्याः गायत्र्याः स्वरूपतत्वमपि उपवर्णयितुं इयं कला प्रवर्तते, वेदे परमपुरुषस्य ज्ञानप्रधानाद्वाक्सत्त्वात् ज्योतिर्मुखात् प्रथमतः इन्द्रस्य अग्नेश्च आविर्भावः, तस्मादेव अग्नेः ज्योतिरात्मनः सकाशात्

गायत्र्याः वाचः सम्भवः, तथा सा च प्रत्यक्षब्रह्मरूपा गायत्री सर्वेषां छन्दसां जननीति च अनुश्रूयते,

"मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत"

( ऋ० १०, ९०, १३ )

"मुखादग्नि रजायत"

( शु० य० सं० ३०, १३ )

"अग्नेर्गायत्र्यभवत् सयुग्वो"

( ऋ० १०, १३०, ४ )

"गायत्री, (ईं) छन्दसांमाताइदं ब्रह्मजुषस्बमे (नः) इति च"

(ना. उ. १४)

तदनुश्रवणम्, अनेन तस्याः छन्दस्त्वयाः गायत्र्याः वाचकशक्तितत्त्वसिद्धं वाग्रूपत्वं, प्रत्यक्षब्रह्मरूपत्वं च गम्यते, अस्मिन्नर्थे औपनिषदं ब्राह्मणानुवचनं भवति स्पष्टार्थकम्, तथाहि— "गायत्री वा इदं सर्वंभूतं यदिदं किञ्च, वाग् वै गायत्री, वाग्वाइदं सर्वंभूतं गायति त्रायते च"

इति (छां० उ० ३, १२, १)

अत्र सर्वभूतस्वरूपेण नामरूपात्मना वाचकसत्त्वेन० याप्तत्वात् वाग्रूपत्वम्, तथा तद्गायनात् सन्त्राणनाच्च तस्याः गायत्रीत्वं इति च तल्लक्षणं तात्त्विकं स्वरूपं च उपदिश्यते,

एवमेव तस्याः परमं स्वरूपतत्त्वमपि अनुश्रूयते—"तस्या उपस्थानम्, "गायत्र्यस्येकपदीद्विपदीत्रिपदीचतुष्पदी, अपदसि न हिपद्यसे, नमस्ते तुरीयाय दर्शताय पदाय परोरजसे, असावदोमाप्रापद्, अहमदः प्रापम्"

इति, (बृ० उ० ४, १४, ७)

गायत्र्याः उपस्थानार्थकः शुक्लयजुर्मन्त्रवर्णः उपनिषदुपदिष्टः प्रसिद्धः, तस्याः एक पात्वम्-केवलेन चैतन्येन, द्विपात्वम्-चिदचिद्योगेन, त्रिपात्वं-व्याहृति-भुवन-त्रयीमयादिरूपेण, चतुष्पात्वं च वाचः पुरुषस्य च चतुष्पादसत्त्वेन, तदेतत् सर्वमपिवाचकशक्ति-वाच्यवस्तुरूपयोः वाक्-पुरुषयोः, वाग्-ब्रह्मणोः, वाग्-आत्मनोरपि सर्वात्मना समानमेवेति प्रतीयते,

तथाहि वाचः तत्स्वरूपतत्त्वम्—

"चत्वारि वाक् परिमिता पदानि०"

( ऋ० १, १६४, ४५ )

"गौरीर्मिमाय सलिला नितक्षती,-एकपदी-द्विपदी-सा चतुष्पदी"

'इति' ( ऋ० १, १६४, ४१ )

परमपुरुषस्यापि चतुष्पा तु स्वरूपत्वम्—

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"

इति ( ऋ० १०, ९०, ३ )

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्"

इति (ऋ० १, २२, १७)

"तद् विष्णोः परमं पदं सदापश्यन्ति सूरयः"

इति च ( ऋ० १, २२, २० )

एवं तयोर्वाक्-पुरुषयोः चतुष्पाद्रूपतत्त्वयोगात् पूर्वसिद्धं तथा उत्तरत्र उपप्राप्तम्, वास्तविकं पूर्णत्वरूपं अपात्तत्त्वमपि अर्थात् सिद्धं समर्थ्यते, "अपदसि न हि पद्यसे" इति, नामरूप गुणधर्मादि सर्वविशेष विरहितमेव तदपाद्रूपतत्त्वमिति व्यतिरेकमुखेनोपदेशः, तथा च ऋङ्मन्त्रवर्णः—

"अपादेति प्रथमा पद्वतीनाम्०"

( ऋ० १, १५२, ३ )

अपादग्रे समभवत् सो अग्रे स्वर्राभवत्"

इति आर्थर्वणीयो मन्त्रः, ( अ० सं० )

तदपाद्रूपमेव गायत्र्याः तुरीयं पदमिति तदुत्तरेण मन्त्रशेषेण गम्यते,

"नमस्ते तुरीयाय दर्शताय पदाय परोरजसे" इति

तस्य च तुरीयपदात्मनः स्वरूपं तत्रैवोपवर्णितम्,

"अथास्या एतदेव तुरीयं दर्शतं पदं परोरजाः य एष तपति ।
यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ॥
ददृश एवह्येष परोरजा । इति,
सर्वमु ह्येवैषरज उपर्युपरितपति" ॥

इति, (बृ० उ० ५, १४, ३)

एतेन गायत्र्या वाच्यार्थः लक्ष्यार्थरूपश्च परमः सवितैव तस्याः तत्तुरीय पदाभिध इति सिध्यति,

अत्र अस्मिन् यजुर्मन्त्रे तुरीयपदार्थके अस्ति किञ्चिद् रहस्यम्, तत्र "परोरजसेऽसावदोम्"इत्येव तद्गायत्रीमन्त्रस्य तुरीयं पदमिति वदन्तः, यतीनामेषा तुरीयपदा गायत्रीति च विदन्तः तथैवानुजपन्ति च केचित् सन्यासिनः उपासकाश्च, वस्तुतस्तु–"परोरजसेऽसावदोम्" इति एतदन्तं मन्त्रो न भवति, किन्तु—

"नमस्ते तुरीयाय दर्शताय पदाय परोरजसे ।
असावदोमा प्रापदहं पदः प्रापम्" ॥

इत्येव तन् मन्त्र पाठोऽस्ति, इति, तदर्थबोधोऽपि एवं भवति—तस्मै-परोरजसे दर्शताय तुरीयाय पदाय ते नमः, असौ-परोरजाः सविता-अदः तुरीयं पदं-मा प्रापत्—मां उपाप्नवत्, तथा अहं अदः तुरीयं पदं प्रापं- उपाप्नवम्" इति तद्योगाव बोधार्थकं तत्त्वम्,

अस्मिन्नेवार्थे ऋङ्मन्त्र एव प्रमाणम्—

"गूलहं सूर्यं तमसापव्रतेन तुरीयेण ब्रह्मणाऽविन्ददत्रिः"

इति (ऋ० ५,४०)

स चतुरीयः प्रत्यक्षब्रह्मरूपो मन्त्रः परब्रह्मणोवाचकः प्रणवात्मकः एव भवितुमर्हति, प्रणवान्ते श्रूयमाणः बिन्दुरूपो वा "अमात्रश्चतुर्थः" इति तस्यैव चतुर्थपदत्वेन निर्देशात् इति संक्षेपः

अथ छन्दोदर्शनेतु—सः तुरीयपादगायत्रीमन्त्रः अनुश्रूयते—

"तत् ते सवित स्तुरीयं पदं पश्यामि दर्शतम् ।
ज्योतिर्विश्वस्य दर्शयत् ॥

इति (छं० द० १, १, ३)

तस्यायमर्थः-हे सवितः ते-तव तत् तुरीयं दर्शतं पदं पश्यामि, तत् परमं पदं विश्वस्यादि जगतः दर्शयेत् प्रकाशकं ज्योतिः-परञ्ज्योतिः स्वरूपमितिनिष्ठमनग्रभाष्यम्—अत्रेदं वासिष्ठ-मन्वयभाष्यम्, तत्रापि गायत्र्यास्तुरीय पदार्थविषयकं तद्विशिष्टं तत्त्वम्, "एवमिह यानि गायत्र्याः त्रीणि पदानि सवितुरेवतानि भवन्ति, यानि सवितुः त्रीणिपदानि, गायत्र्याः वाचो देव्याः तानि भवन्ति, तानि च उच्चारणीयानि, सर्वान्तर एवात्मा तुरीयं पदम्, तच्च दर्शनीय-मेवनोच्चारणीयम्—परञ्ज्योतिः स्वरूपत्वादिति। अत्र अदौ दर्शतं इति दर्शितमेवतत् तुरीयं पदं "दर्शयत्-ज्योतिः" इति यद् विशेषयति तद्‌षिज्ञापयति—"तस्य सर्वान्तरात्मनः तद् दर्शनं तु—स एव सर्वस्यापिद्रष्टा दर्शयिताचेतितत्त्वतो—द्रष्टृत्वेन दर्शयितृत्वेनैवदर्शनं भवितु मर्हति, न तु दृश्यतयेति ।

॥ अथ धीयोगाभ्यास प्रक्रिया ॥

अत्र गायत्रीमन्त्रार्थे "धीमहि" इति बोधितस्य धारणाध्यानसमाधिरूपस्य साधनस्य अभ्यासः उपदिष्टः, स तु—गायत्री मन्त्रार्थज्ञानमात्रेण न सिध्यति, विनैवाभ्यासं प्राप्तुं अशक्य एव स धीयोगः इति प्रतीयते, तथा च ऋङ्मन्त्रवर्णः—

"यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ॥

इति (ऋ० १, १८, ७)

स च धीयोगः प्रसिद्धः वेदोपनिषदादिषु उपदिष्टः, तदुपासनाद्यभ्यासैकसाध्यः ।

"तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्"

इति (कठो० २, ३, ११)

स च अभ्यासः आन्तरेणधीन्द्रियेणैव साध्यः इति युज्यते ।

"देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः ।
नमस्यन्ति धियेषिताः ॥"

इति (ऋ० ३,६२,१२)

"उपत्वाऽग्नेदिवे दिवेदोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥"

इति (ऋ० १, १, ७)

अहरहः सन्ध्या मुपासीत" इत्यादि वचनैः तद्विधानानुदर्शनात् ।

तत्र अप्रमादरात प्रथमं साधनम् "अप्रमत्तेन वेद्धव्यम्" (मुं० ३, २, २, ४) "अप्रमत्त-स्तदा भवति" (कठो० २, ३, ११) इत्यादि मुखेन तदुपदेशात् । तादृशस्य अप्रमादस्य सिद्धये

ज्ञानपूर्विकीजागृतिरेव आवश्यकीति विज्ञायते, तदर्थं जागृतिसत्त्वसम्पन्नानां अवलम्बनमेव शरणम्, तच्च बाह्यम्—आभ्यन्तरं चेतिद्विविधं प्रसिद्धम्, बाह्यं तदभ्यासशीलानां तद्योग-सत्त्वशालिनां विदुषाम्, तथा तत्परिशीलनसिद्धानां तद्योगनिष्ठानां आत्मनिष्ठानां च अवलम्बनम् ।

"अविद्वांसो विदुष्टरं सपेम"

( ऋ० ६, १५, १० )

"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"

इति (मुं० उ० १, २, १२)

तद्विधानात्, तद्यथा-जागरणादिव्रते सर्पादिदंशननिमित्ते च जागृतिकामः अन्यं जागृवां स मेव अवलम्बते अवस्यतया अनिवार्यतयाचेति प्रत्यक्षदृष्टमेव, तत्रतत्परावलम्बनमपि सह्यमेव ।

"अविद्वांसो विदुष्टरं सपेम"

( ऋ० ६, १५, १० )

"अहस्तासो हस्तवन्तं सहन्ते"

इति च (ऋ० १०, ३४, ९)

तदन्याश्रयणादि दर्शनात् ।

आन्तर्ये तस्मिन् अवलम्बने तु प्राण एव प्रथमः, समाश्रयणार्हः, सर्वास्पदीभूतश्चेति-सुप्रसिद्धः सर्वानुभूतएवेति न पृथग्वक्तव्यम् । सोऽयं प्राण एव अस्माकं शरीरेऽन्तः सदा जागरण-शीलः प्रचरति ।

"प्राणग्नय एवैतस्मिन्पूरे जाग्रति"

इति (प्र० उ० ४, ३)

तदनुश्रवणम्, यः स्वयं जागर्ति तमेव सर्वेऽपिशरणं व्रजन्ति जागृति सत्त्वकायाः ।

"यो जागार तमृचः कामयन्ते"

(ऋ० ५, ४४, १४)

"अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति ।
अग्निर्जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥

इति (ऋ० ५, ४४, १५)

"जागर्षित्वं भुवनेजातवेदः"

इति च (ऋ० ५, ४४, १६)

योऽसौनहिः ब्रह्माण्डे ज्योतिरात्मा अग्निः स एवायं पिण्डे वैश्वानरोऽग्निः अन्तरान्तरात्मस्वरूपः सचेतनः ।

"वैश्वानरो जायमानोन राजाऽवातिरज्ज्योतिषाऽग्निस्तमाँसि"

(ऋ०)

इति च तदनुश्रवणम् ।

सोऽयं प्राणः अस्माकं हृदयाद् समुदितः सन् मुखद्वारानासिकया च प्रतिक्षणं प्रचरन् आस्ते बाह्यान्तर्यगतिसत्त्वेन प्राणापानरूपेण ।

"अन्तश्चरति रोचना ऽस्य प्राणादपानती"

(ऋ० १०, १८९, २)

इति तदनुश्रुतिः ।

अपाङ् प्राङे तिस्वधया गृभीतो ऽमर्त्योमर्त्यैना सयोनिः"

इति च (ऋ० १, १६४, ३८)

"सोयोऽस्य प्राङ सुषिः स प्राणः, यः प्रत्यङ सुषिः सोऽपान "इति च औपनिषदं वचनम्"

(छा० ३, १२, १०३)

सोऽयं प्राणः क्रियाशक्तिप्रधानः, प्राणपानादि क्रियायोगात् ।

अथ प्राणादपि अन्तरङ्गं मनः, तच्च इच्छाशक्ति प्रधानम्, भावना सङ्कलपादिकरणं सूक्ष्मम्,

"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्

इति तदनुश्रुतिः ।। (ऋ० १०, ३, १२)

अत्र प्राणः मनश्च एकं मिथुनम्, तयोः साहचर्ययोगात् ।।

"आत्मन एष प्राणो जायते, यथापा पुरुषे छायौतस्मिन्नेतदाततं मनोकृतेनाया-त्यस्मिच्छरीरे"

(प्र० ३, ३) इति तन्निदर्शनम्,

अस्यैव मनसः कामः सङ्कलपादि साधनत्वेन अन्तःकरण रूपत्वं सिध्यति,

"अन्यत्र मना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रोषमिति मनस्तत्थेव पश्यति मनसाश्रृणोति, कायः सङ्कलपोविचिकित्सा श्रद्धाऽश्रद्धा ध्रृतिरध्रृतिर्हीर्धीर्भीरित्येत् सवं मन एव" इति ।। (बृ० उ० १, ४, ४)

एतेनापि इच्छा शक्ति प्रधान्यं मनस एय सिध्यति ।। अस्मिन्नर्थे ऋङ्मन्त्रः—

"इच्छाभिद्धृदा मनसा चिदिन्द्रम्"

इति ।। (ऋ० ६, २८, ५)

अत्र सर्वेन्द्रियेभ्योऽपि आन्तरतमा परावागेव ज्ञानशक्तिप्रधाना, अस्मिन् त्रिकरण प्रस्तावे तदर्थसत्त्वयोगात्, "तस्यासतऋषयः सप्ततीरे वागष्टमीब्रह्मणा संविदाना"

इति तदनुश्रवणम्, (बृ० उ०)

अत्र "प्राणा वा ऋषयः प्राणानेवैतदाह, वागष्टमी ब्रह्मणा संविदानेति वाग्घि अष्टमी ब्रह्मणासंवित्ते"

इति चवदनुवचनम् (बृ० उ० २, २, ३)

अतः श्रोत्र त्वक् चक्षुर्जिह्वा प्राणमनोबुद्धिभ्यः परा सूक्ष्म सा वाक् एतेषु धीन्द्रियेषुता-द्विषयेषु च अनुस्यूता सती तत्तदर्थप्रकाशनाय प्रवर्तते, तस्मादेव सा ज्ञानशक्ति प्रधानेति

**गण्यते, कर्मेन्द्रियेषु गृहीतासु सेयं वाग् वैखरीति उच्यते,** "वाक् च मनश्च" **तदेकं मिथुनम्, तयोः परस्परात्मनि प्रतिष्ठानात्,** "वाङ्मे मनसिप्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्"
**इति औपनिषदं वचनम् ।। (रो० उ० शान्ति मन्त्रः)**

**तथा** "वाङ् माता मनः पिता"
**(इति च स्पष्टं तदनुवचनम्)**

**तथैव वाक् च प्राणश्चेति तदेकं मिथुनम्,** अतः **तमेतमेय मुख्यं प्राणं ब्रह्मणस्पतिं-बृहस्पतिं च संस्तुवन्ति,** "एष उ एव ब्रह्मणस्पतिः वाग् वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः"
**इति ।। (बृ० उ० १, ३, २१)**

"एष उ एव बृहस्पतिः वाग् वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः"
**इति च (बृ० उ० १, ३, १०)**

**एतत् त्रयमेत्रिकरणम्, अन्तरात्मनः सर्वार्थेष्ववलम्बनम् भवति,** "त्रीण्यात्मनेऽकुरुतेति मनोवाचं प्राणन् तान्यात्मनेऽकुरुत"
**इति ।। अथच चेतनात्मनस्तन्मयत्वम्"**

"एतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणामयः"
**इति च तदनुवचनम् ।। (बृ० उ० १, ४, ३)**

**तदेतदेव त्रिकरणम् तेजोऽबन्नात्मकमिति उपदिष्टम्,—**
"अन्नमयाँहि सोम्यमनः आपोमयः प्राणः तेजोमयी वाक्"
**इति ।। (छां० उ० ६, ५, ४)**

**तस्यास्य त्रिकरणस्य त्रयीरूपत्वमनुश्रूयते—**"ऋचं वाचं प्र पद्ये, मनो यजुः प्र पद्ये, साम प्राणं प्रपद्ये,"
**इति यजुर्मन्त्रः, (शु० य० सं०)**

**एताषामेन त्रयाणां करणानां अधिभूतादि तत्त्वयोगेन बहुधारूपाणि प्रतिपादानि, तथाहि—**"तयोलोका एत एव वागेवायंलोकः मनोऽन्तरिक्षलोकः प्राणोऽसौलोकः" **इति, तथा** "त्रयोवेदा एत एव, देवाः पितरोमनुष्या एत एव । माता पिता प्रजा एत एव विज्ञातं विजिज्ञाख्यं अविज्ञातमेत एव ।
**इत्यादि— (बृ० उ० १, ४, ५—१३)**

**तदेतत् सर्वमपि मूलतः ऋङ्मन्त्रेष्वेव सूक्ष्मदृशाऽनुश्रावितमस्ति ।**

"पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः"
**(ऋ० १०, १७७, २)**

**तत्र पतङ्गः चेतनात्मा, गन्धर्वः प्राणः,**

"यज्जातवेदो भुवनस्य मूर्धन्नतिष्ठो अग्ने सह रोचनेन ।
तं त्वाहेम मतिभिर्गीर्भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ।।"
**(ऋ० १०, ८८, ४)**

**अत्र** "उक्थं प्राणे वा उक्थं प्राणो हीदं सर्वमुत्थापयति"
**इति ।। (बृ० उ० ४, १३, १)**

त्रिकरणयोगः—एवमेतेषां त्रयाणां करणानां सहसन्नियमनात् एकस्मिन्नेवलक्ष्ये प्रतिष्ठापनेन त्रिकरणयोगः सम्पद्यते, तत्प्रक्रिया च एवं भवति—प्राण इवैव अन्तरङ्गं मनः, ततोऽपि आन्तरतमा सूक्ष्मा परावाक् केवलं चेतनात्मिका, प्रत्यञ्चि अन्तरात्मनि अहमिति पदेन प्रत्ययेन च सहैव संस्फुरति अजस्रया धारया सञ्चेतमाना प्रतीयते, तथा वाचा सह गायत्री मन्त्राक्षराणि अनुक्रमेण संयोजयेत्, स प्रणव व्याहृति पूर्वकाणि, तथा मनसा तदर्थं भावयेत्, तथा समग्रमन्त्रार्थरूपं ज्योतिरनुचिन्तयेत्, प्राणेन च तानि मन्त्राक्षराणि समुच्चरन् प्रजपेत्, सस्वरेण स्पष्टोच्चारणमुखेन, तेनैव क्रमेण प्रजपन् बाह्येवा अन्तरात्मनि वा एकस्मिन्नेव-लक्ष्ये एतानि त्रिकरणानि यथास्थिरीभावेयुः तथा निरीक्षेत ताटस्थ्येन, सोऽयं मन्त्रयोगः इत्यपि प्रसिद्धः, अन्यत् सर्वं विशिष्टं तत्प्रक्रियादिकं पञ्चधीयोगे समर्थ्यते एतदनुपदमेवेति संक्षेपः ।

अथ पञ्चधीयोगः—एतैरेव त्रिभिः करणैः सह श्रोत्र-नेत्रयोः अपि संयोजनेन पञ्च-धीयोगः कल्पते, तत्रेदं कारणं भवति—समग्रेऽस्मिन् प्रपञ्चे सर्वाण्यपि भूतजातानि अर्थाद् वस्तुजातानि नाम-रूपाभ्यां संहितान्येव आदिसृष्टौ प्रथमतः समाविर्बभूवुः, तयोर्नाम-रूपयोः ग्रहणे ज्ञानं च (साधनभूतं) श्रोत्रं नेत्रं चेति ज्ञानेन्द्रियद्वयमपि आत्मनि अन्तःप्रतिष्ठितं सर्वानुभवसिद्धमेव, तस्मात् अस्मिन् धीयोग त्रिकरणेन सहैव एतत्करणद्वयसंयोजनमपि आवश्यकं मन्यन्ते योगविदः पञ्चधीयोग सम्पत्तये इति प्रयीयते,

"ऋचं वाचं प्रपद्ये, मनोयजुः प्रपद्ये, सामप्राणं प्रपद्ये, चक्षुः श्रोत्रं प्रपद्ये"

"इति च यजुर्मन्त्रः तमेतमेव अर्थमनुश्रावयति"

"केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैतियुक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवोयुनक्ति ।।

इति च, (के० उ० १, १)

एतेषां पञ्चानां धीन्द्रियाणां योगः बहुविधेन मुखेन शतशः स्थानेषु वेदोपनिषदादिषु उपदिष्टो दृश्यते, तत्र एतेषु इन्द्रियेषु एकैकेनापि इन्द्रियेण तत्साधनंभवितु मर्हति, एकै-केन्द्रियविषयपरिक्लृप्तेः तत्तु अपूर्णमेव भवतीति योगसिध्यर्थं तदपर्याप्तमेवेति मन्तव्यम्, तत्रेदमौपनिषदं वचनम्,

"प्राणन्नेव प्राणोनामभवति, वदन् वाक्, पश्यँश्चक्षुः- शृण्वञ्छोत्रम्, मन्वानो मनः, तान्येतानिकर्मनामान्येव" । "स योऽत एकैकमुपास्ते न स वेद, अकृत्स्नोह्येषः"

इति ।। (बृ० उ० १, ४, ७)

"अतः एककेन भवति, आमेत्येवोपासात, अत्र ह्येते सर्व एकं भवन्ति, तदेतत् वदनीय-मस्य सर्वस्य यदयमात्मा, अनेन हि एतत् सर्वं वेदा" ।। इति ।।

सोऽयं धीयोगः त्रिविधो भवितुमर्हति, बाह्यः आन्तर्यः, परश्चेति, तत्र समन्वयदृशा बाह्यः व्यतिरेकमुखेन आन्तर्यः, ताटस्थ्येन परः इति तद्विवेकः"

"प्रवृत्ति-निवृत्ति-निष्ठा सत्त्वास्ते त्रयो धीयोगाः भवन्ति, तत्र तृतीयः परोयोगः निष्ठा-त्मकस्तु-प्रवृत्ति-निवृत्त्युभयात्मकः—तथा प्रवृत्ति-निवृत्त्यनुभयात्मकः इति द्विधा भवति, स च केवलं निष्ठारूपोनाम ताटस्थ्येन औदासीन्येन आत्मस्थितिरूप एवेति विशेषः"

एतेषां पञ्चानां धीन्द्रियाणां समन्वयेन ध्येयैकवृत्तिमुखेन बाह्यदृशा प्रवृत्त्या आदित्यादिज्योतिः स्वरूपे प्रतिष्ठापनेन तदनुचिन्तमेव प्रथमम्, बाह्यं धीयोगस्वरूपम्"

तथा बाह्येभ्यः शब्द-रूपादिविषयेभ्योः व्यतिरेकमुखेन निवृत्ति-प्रमुख्येन वागादीनां धीन्द्रियाणां आन्तरतमे निजे प्रत्यगात्मनि सर्वेन्द्रियाधिष्ठानरूपे ध्येयैकलक्ष्ये द्रष्टरिधियां योजनेन तदनुध्यानमेव द्वितीयं आन्तर्यं धीयोगस्वरूपम्,

एवमेव बाह्ये आदित्यादि ज्योतिर्षिधियां धारणया तेन आदित्यज्योतिषः आत्मनश्च सहयोगेन ततोऽपिपरतमे परोक्षसिद्धे लक्ष्ये वस्तुनि केवले चैतन्यसत्वे योजनया तत्रैव तादात्म्येन विलीनतया तदन्तर्निष्ठात्मकमेव तृतीयस्य परयोगस्य लक्षणम्,

तथैव बाह्य वस्तूनामवलम्बनादि राहित्येन धियां ताटस्थ्येन केवलं द्रष्टत्वरूपेण संस्थितिरेव निष्ठायोगलक्षणं भवति, एतेषु विषयेषु बहूनि वेदोपनिषदादि प्रमाणानि विद्यन्ते तेषु द्वित्राण्येवात्रदीयन्ते,

"उद्वयं तमसस्परि ज्योतिष्पस्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्मज्योतिरुत्तमम्" ।।

इति (ऋ० १, ५०, १०)

'जीवा ज्योतिरशोमहि"

इति च (ऋ०)

प्रणवोधनुः शरोह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्"

इति (मुं० उ० २- २, ४)

"ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ।"

(मुं० उ० २, २, ६)

"यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा प्रमुच्यते,

एवं हवै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्"

इत्यादि (प्र० ५, ५)

"धनुर्गृहीत्वौपनिषदं महास्त्रं शरंह्युपासानिशितं सन्धयीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्यविद्धि" ।।

इति च (मुं० उ० २, २, ३)

एवमादीनिवचनानि धीयोगपराण्येव, अत्र प्रणवाक्षरावलम्बनमनुश्रूयते, तस्मिन्नेवस्थाने स प्रणवगायत्रीमन्त्रावलम्बनमित्येव अत्र विशेषः, इतोऽपि परमोयोगः ताटस्थनिष्ठारूपोऽस्ति,

"यदापञ्चावतिष्ठन्ते ज्ञानानि मनसा स ह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ।।
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ" ।।

इति (क० उ० २, ३, १०-११)

सोऽयं पञ्चधीन्द्रिययोग एव अध्यात्मतत्त्व प्राधान्येन विद्वद्यज्ञः इति संविद्यते, तस्मिन् विद्वद्यज्ञरूपे परमे योगे आत्मैव यष्टा यजमानः,

"आत्मा यज्ञस्य पूर्व्यः"

इति च तदनुश्रवणम्। (ऋ० ९, २, १०)

तद्यज्ञपत्नी च पराश्रद्धा,

"श्रद्धां देवा यजमाना वायुगोपा उपासते।
श्रद्धां हृदय्ययाकूत्या श्रद्धया विन्दते वसु॥"

(ऋ० १०, १५१, ४)

"श्रद्धया सत्यमाप्यते"

इति च यजुः॥ (शु० य०)

"श्रदस्मै धत्त स जनास इन्द्रः"

इति॥ (ऋ० मं० २, १२, ४)

"श्रद्धां यज्ञमारभे"

इति च यजुः (तै०)

"श्रद्धामयोऽयं पुरुषो योयच्छ्रद्धः स एव सः" इति च स्मृतिः (गी०) तत्र "वागादय एव पञ्चधीन्द्रिय सत्त्वाः पञ्च ऋत्विजो, योजकाः याजका तद्यज्ञस्य साधनीभूताः तद्योगयज्ञ परायणाश्च भवन्ति, (इच सन्तः—"वाग्घोता, प्राण उद्गाता, चक्षुरध्वर्युः मनोब्रह्मा, श्रोत्र मग्नीत्। यावद् ध्रियते सा दीक्षा"

इत्यादि॥ (ना० उ० २४)

सोऽयं धीयज्ञः आन्तर्योऽपि श्रौतेन बाह्येन सोमयागादिसत्त्वेन समानः समन्वित एवेति प्रतीयते, तत्साम्येन ऋत्विजादि निर्देशाच्च,

अथ अत्र प्रस्तुतेऽस्मिन् साम्प्रतिके धीयोगे गायत्रीजपादिमुखेन तदुपासनायां तदभ्यास-प्रक्रियेयं भवति—अत्र प्रथमतः प्राणस्यैव अवलम्बनं प्रधानम्, '-प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" इति निर्देशात्, (प्र० उ० ४, ३) सोऽयं प्राणः बहिरन्तश्च प्राणापानरूपेण प्रतिक्षणं सञ्चरति श्वासोच्छ्वासरूपेण, अस्य गतेर्निरीक्षमेव प्रथमं साधनम्, तथा अन्तरात्मनि अह-मिति पदेन प्रत्ययेन च संस्फुरन्त्या परया वाचा सह गायत्री मन्त्राक्षराणां संयोजनं यथानुक्रमम्, तपश्च तद्गायत्रीमन्त्रार्थस्य ज्ञानेन सह भावनेन च तथा समग्रमन्त्रार्थरूपस्य ज्योतिषः अनुचिन्तनम्, तथा प्राणेन सह तन्मन्त्राक्षराणां योजनेन तत्प्राणमुखेन वैखर्या वाचा समुच्चा-रणम्, श्रोत्रेण च तदनुश्रवणम्, नेत्रेण च तज्ज्योतिः स्वरूपस्य सन्दर्शनम्, एवं प्रक्रियया तन्मन्त्रजपेन तेषां धीन्द्रियाणां तस्मिन्नेव जपे तदर्थानुचिन्तने च प्रतिष्ठापनम्, सूक्ष्मतरे आन्तरे मानसिके तन्मन्त्र जपे तु अन्तः श्रोत्रेणैव तदनुश्रवणम्, अन्तर्दृष्ट्या च तत्तेजोदर्शनं च अनुसन्धेयम्,

अत्र सर्वत्रापि अप्रमादः स्वप्रबोधश्च जागृति मुखेन ज्ञानसत्त्वेन यथा भवेत् तथैव प्रयतितव्यम्,

अस्य धीयोगस्य तत्त्वं पूर्वपीठिकायामपि विस्तरशः समर्थितमस्ति, तथा "साक्षात्कार-योग सुधायां" बहुधा प्रक्रियापरेण प्रकारान्तरेण विशेषतः समर्थितोऽयंधीयोगः वेदोपनिषदादि प्रमाणपुरःसरम् अत्र ग्रन्थविस्तृति दृशा एतावतैव विरम्यते इति संक्षेपः,

---

## ॥ चतुर्थी कला ॥

### ॥ मन्त्रार्थज्ञानसाहित्यम् ॥

गायत्र्यादीनां वेदमन्त्राणां स्वाध्याये जप-यज्ञादिषु विनियोगेऽपि सस्वरेण शास्त्रीयेण स्पष्टोच्चारेण शुद्धपाठेन सहैव तन्मंत्रार्थज्ञानसाहित्यस्यापि आवश्यकत्वात् शास्त्रे तदर्थ ज्ञानमपि विहितं दृश्यते, अन्यथा तेषां निरर्थकत्वमपि अभिहितं श्रूयते, तथा च ऋङ्मन्त्रवर्णः–

"यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥"

इति ॥ (ऋ० १०, ७१, ६)

अस्यार्थोऽपि पूर्वपीठिकायामुपन्यस्तः,

तथा—"स्थाणुरयं भारहारः किलाभूदधीत्यवेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्म" ॥

इति च स्पष्टार्थक एव,

"तस्माद् ब्राह्मणेन निष्कारणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च"

इति तद्विधिः शास्त्रीयः अर्थज्ञानेनैव तद्वेदाध्ययनस्य सार्थकतां समर्थयति,

एवमेव ब्रह्मात्मादि सत्यवस्तु तत्त्वज्ञानेऽपि तदेतत् समानमेवेति गम्यते,

"ऋचो अक्षरे परमे व्योमन् यस्मिन देवा अधि विश्वे निषेदुः ।
यस्तत्र वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥

इति ( , १६४, ३९)

अस्यार्थोऽपि पूर्वपीठिकायां द्रष्टव्यः ।

वस्तुतस्तु तन्मन्त्रार्थज्ञानोदयायैव तज्जपोपासनादेर्विधिः तथा तदनुष्ठादिप्रवृत्तिः, तेन मन्त्रार्थादिज्ञानाभावेऽपि जपादिरूपेण कर्मोपासनादियोगेन तत्फलादिसिद्धिर्भवतीति प्रतीयते, फलोदयस्य क्रियाधीनत्वात्, तस्मात् अर्थज्ञानं विना वेदमन्त्राणां जपोपासनादिकं सर्वात्मना निरर्थकं निषिद्धम् इति वक्तुं न शक्यते, नापि तत् परित्याज्यमिति च युज्यते परित्यक्तुं चेति, तत्र शब्देष्वेव काचित् शक्तिरस्ति, सैवस्वीयमर्थज्ञानं जनयितुं स्वयं प्रभवति, ततोऽपि विशिष्ट-तरा (काचित्) मन्त्रशक्तिः, आर्षेयदिव्यसत्त्वयोगात्, "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति कवीन्द्रवचनानुसारेण तत् सर्वथा सङ्गच्छते" मन्त्रार्थशक्तेर्बोधकः ऋङ्मन्त्रवर्णः

"अमन्यमानाँ अभि मन्यमानै र्निर्ब्रह्मभिरधमो दस्यु मिन्द्र"

इति (ऋ० १, ३३, ९)

अर्थज्ञानशून्यान् अज्ञानपि तदुपासकान् स्वकीयत्वेन अभिमन्यमानैः प्रत्यक्षब्रह्मरूपैः वेद-मन्त्रैः हे इन्द्रत्वं दस्युं हिंसकं जनं निरधमः उत्सारयामास" इति तदर्थः,

एवमेव तत्त्वार्थज्ञानं विषयेऽपि तत् समानम्, तत्र सामान्यतः शब्दज्ञानमपि तदनु-भवोदयेनैव सार्थकतामुपैतीति प्रशस्यते, तथा आशास्यते, पुनः पुनः परिशील्यते च "आवृत्ति-रसकृदुपदेशात्"

इति (ब्र० सू०)

तन्निर्णयानुसारेण, "अनुभवपर्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्मफलविषयत्वा-दिच्छायाः" इति शारीरकं भाष्यानुवचनम् "अथातो ब्रह्मजिज्ञासा" इति ब्रह्ममीमांसासूत्रस्येति सङ्क्षेपः। गायत्रीमन्त्रमुखेन सन्ध्योपासनादिनित्यकर्मानुष्ठानम्,

अथ गायत्रीमन्त्रमुखेन ब्रह्मोपदेशाद् बटोरुपनयनानन्तरं तेनैव मन्त्रेण नित्यमनुष्ठातुं अनिवार्यतया सन्ध्योपासना विधीयते—"अहरहः सन्ध्यामुपासीत" इति, तस्यैवविधेर्मूलभूतोऽयं ऋङ्वर्णः गायत्रीमन्त्रेण सहैवतस्मिन्नेव तृचे पठितः अनुश्रूयते वैश्वामित्रार्षेयः—

"देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः।
नमस्यन्ति धियेषिताः॥

इति (ऋ० मं० ३, ६२, १२)

तस्यायमर्थः—विप्राः द्विजाः नरः धिया इषिताः प्रेरिताः सन्तः सुवृक्तिभिः सुष्ठु आवर्जकैः सन्नियामकैः यज्ञैः तं देवं सवितारं नमस्यन्ति-अभिवादयन्ते, इति, एतेन सन्ध्योपास-नायाः सन्ध्यावन्दनमिति सञ्ज्ञाऽपि प्रसिद्धा इति प्रतीयते, तेन सा सन्ध्योपासना काचिद् यज्ञरूपाधीयोगेनासाध्या इति गम्यते।

तस्याः सन्ध्योपासनायाः अग्नेराराधनया सह तत्पूर्वमेव अनुष्ठातुं विधानाद् गम्यते प्रतिदिनं प्रतिसन्ध्यं च सा विहितेति।

"उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्।
नमो भरन्त एमसि॥

इति (ऋ० मं० १, १, ७)

हे अग्ने!–दिवेदिवे-प्रतिदिनम्, दोषावस्तः-सायं प्रातश्च धिया-धीयोगेन नमः-नमनं हविष्यमन्नं च भरन्तः समर्पयन्तः त्वां उपैमः इति।

इदं च समिधाधानादिमुखेन बटूनां तथा हविरादिना गृहस्थानां च सामान्यतः सर्वेषामपि अग्नेराराधनादिविधानं इति प्रतीयते।

"यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये।
यो नमसा स्वध्वरः॥

इति च तदनुश्रवणम्। (ऋ० ८, १९, ५)

अत्र केवलेन समिधाधानेन बटूनां यज्ञसिद्धिः नित्याग्निपरिचर्यात्मिका, गृहिणां गृहिणीनां च दर्शपूर्णमासादिव्रतहोमः समिधा-हवनेन, विधीयते, नित्यहोमः पयोघृतादेराहुत्या, "वेदेन" केवलेनापि मन्त्रेण ब्रह्मयज्ञः, नमसा नमस्कारमात्रेण सत्कार-परिचर्यादिः सिध्यति, इत्यादिकं स्पष्टं ऋङ्मन्त्रेष्वेवतद्विधानं श्रूयते ।

"समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन् हव्या जुहोतन ।।"

इति (ऋ० ८, ४४, १)

"ब्रह्मणस्पतिं ब्रह्मणासन्दुवस्य"

इति (छं० द० ३, १, ४)

"नमोभिर्देवमसुरं दुवस्य"

इति च (ऋ० ५, ४२, ११)

तदेवं मन्त्रविधानादिशासनानुसारणेन तदनुष्ठानं उपनिषत्सुप्राशस्त्येनोपदिष्टं श्रूयते ।

"तदेतत् सत्यं मन्त्रेषु कर्माणि कवयोयान्यपश्यँस्तानि त्रेतायां बहुधा सन्ततानि ।
तान्याचरथ नियतँ सत्यकामा एष वः पन्थाः सुकृतस्य लोके ।।

इति (मुं० उ० १, २, १)

सेयं सन्ध्योपासना गायत्रीमन्त्रमुखेनैव विधीयते ।

"जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।
संन्ध्यां प्राक् प्रातरेवं हि तिष्ठेद्यसूर्यदर्शनात् ।।"

इति च, (मनुस्मृ० २,)

तदेतद् वेदशास्त्रादि शासनात् तत्फलाद्यनुसन्धानमन्तरेणैव अवश्यकर्तव्यबुद्धया नित्यमनुष्ठेयम् । सर्वेषामप्युपनीतानामनिवार्यतया विहितं ब्रह्मकर्म, सर्वेभ्योऽपिश्रेष्ठतमं वैदिकं यज्ञरूपम्, तदेतदेव नित्यकर्मणः ब्रह्मकर्मणोऽपि प्रधानं लक्षणम्, निष्कामकर्मयोगस्यापि स्वरूपम्, तत्समानमेव, "यस्य करणे फलाभावः, अकरणे प्रत्यवायः" तदेव नित्यं कर्म, इति तन्निदर्शनात्, इति विशेषः, तत्र तन्मन्त्रार्थज्ञानाभावे तत् कृतमपि सर्वं निरर्थकम्, अतएव नानुष्ठेयमित्यपि यत्र कुत्रापि विहितं न दृश्यते, न तु तद्येन केनापि युक्तिविशेषेण कल्पयितुं शक्यते, कुत एतत्, कथमेतदुपपद्यते ! —उच्यते-अष्टमे वर्षे पञ्चमे वा उपनीतः स बटुः तन्मन्त्रार्थ ज्ञानपूर्वकं आदित्यज्योतिर्ध्यानेन सहैव तन्मन्त्रजपादिकं कर्तुं कथं शक्नुयादिति चिन्त्यमेव, यत्र विदुषामपि तदशक्य-सम्पादमेवेति प्रतीयते, तस्मात् तदर्थज्ञानादिसत्त्वाभ्युदयार्थमेव तदुपासना विधीयते इत्येव वक्तुं युक्तमिति सम्पद्यतेतराम्, न तु तत् पुनः केवलस्य शब्दार्थ-ज्ञानम्—किन्तु-तदर्थरूपस्य सत्यवस्तुनः ब्रह्मात्मनः अनुभवपूर्णे तत्त्वज्ञानोदयेऽपि सोऽयं समर्थः गायत्रीमन्त्रः, तथासेयं उपासनाधीयोगप्रधाना प्रथमा काचिद् परायोगविद्या, संविद्-भावना-क्रियायोगादिसत्त्वसम्पत्तिसाध्या इत्यपि प्रतिज्ञायते, सोऽयमेवार्थः उपदिश्यते स्मृतिमुखेन,

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् " ।। इति

"तदेतदपि वेदोपनिषदादितत्त्वार्थे न समानमेव भवति"

"योऽसावादित्ये पुरुषः सोऽसावहम्"

(वा० सं० ४०, १६)

"योऽसावसौ पुरुषः सोऽहमस्मि"

इति (ई० उ० १६)

"स यश्चायं पुरुषो यश्चा सावादित्यो स एकः"

इति (तै० भृ० उ० १०, ४,)

अत्रेदं रहस्यम्—बाल्ये बटूनां प्रथमतः कृते न ब्रह्मोपदेशेन उपलब्धेन गायत्रीमन्त्र-मुखेन धीयोगादिसाधनपूर्वकं तदर्थानुसन्धानतः ज्योतिरनुध्यानतश्च नित्योपासना विधीयते, उत्तरत्र ज्ञानदशायां केवलेन प्रणवेन अन्तर्विमर्शात्मकेन तपसा च साधनविशेषेण तदुपदेशः तदनुध्यानमित्येव विशेषः तदविशेषश्च इति सम्पद्यते,

## ॥ ब्रह्मसूत्रम्-यज्ञोपवीतम् ॥

बटूनामुपनयने द्विजत्वसिद्धि-संस्कारसत्त्वयोगाय ब्रह्मोपदेशात् पूर्वमेव समन्त्रकं ब्रह्म-सूत्रं तद् यज्ञोपवीतं धार्यते, "यज्ञोपवीतं परमं पवित्रम्" इति मन्त्रेण, तदेव द्वितीय जन्मरूपम्, दिव्यसत्त्वप्रापकम्, वैदिकं आर्षेयब्रह्मवर्चस्त्वादियोगाभ्युदयसम्पादकं च भवति, इति शास्त्रीयं वस्तुसिद्धं तत्त्वम् ।

तदिदं बाह्यलौकिक दृशा केवलं कृत्रिमं वेषभूषादिवत् अलङ्कारमात्रार्थकम्, इति भासते, तथा केवलं आडम्बररूपमेवेति च अवभासते, इति केचिद् वदन्ति, स्यादेतत्-तावत्-तस्य तात्त्विकार्थं स्वरूपाज्ञानात् तथा भवितुमर्हति, तच्च निषेद्धुं आक्षिप्तुं निन्दितुं च सुलभतरम्, किन्तु-तस्य तत्त्वं विमर्शितुं वेत्तुं वेदयितुं च कठिनतरमिति प्रतीयते, तद्यथा-उपनिषन्मुखेन विमर्शितं सूत्रात्मकं ब्रह्मवस्तुतत्त्वम्, मीमांसितं च, "सहोवाचवायुर्वैगौतम तत् सूत्रम्, वायुना वै गौतमसूत्रेण अयं च लोकः परश्चलोकः सर्वाणि भूतानि सन्दृब्धानि भवन्ति," इति, (बृ० उ० ३, ७, १)

तथा "योवैतत्काप्यसूत्रंविद्यात् तंचान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देव-वित् स वेदवित् स आत्मवित् स सर्वविदिति०" च तत्सूत्रात्मविज्ञानेन ब्रह्मात्मवित्त्वं च दर्शितम् ।। अत्र सर्वान्तर्यामिणः चेतनात्मनः बोधकलिङ्गं वायुरूपं प्राणात्मकशक्तिपूर्णं सूत्रं सञ्चेतनाशक्तिविशिष्टमिति उक्तंभवति तद्वदेव सूक्ष्मतमं दिव्यं ब्रह्मात्मसत्त्वं बोधयितुं समर्थमिदं ब्रह्मसूत्रं भवति, तथा तद्ब्रह्मात्मवस्तुसाक्षात्कारार्थं गृहीतस्य दीक्षाव्रतस्य इदं प्रतिसरबन्धादिरूपम्, मौञ्जीबन्धनसूत्रेण रज्जुरूपेण तत्त्वैनयतुल्यम्, यज्ञोपवीतं नाम यज्ञार्थ-मेव तद्धारणविधानार्थत्वात् इति च प्रतीयते ।। यथा लौकिकेऽपिव्यवहारे कस्यचिद् वीर्यवत्तरस्य ध्येयस्यसिध्यर्थं कङ्कणबन्धादिरूपम् ध्रियते ।

तदिदं ब्रह्मसूत्रम् मूलतः आमूलाग्रमध्यं समानरूपं अविच्छिन्नंसद् एकमेव भवति, ब्रह्मवस्तुवदेव सिद्धं साधितं प्रतिक्लृप्तं च, तच्च प्रथमतः त्रिवृकृतम्, त्रिगुणीकरणेन साधितम्, साध्यं च, तत्त्व त्रयोक्लृप्तेन सत्त्वेन, गुणत्रयादिस्वरूपेण ब्रह्मवस्तुवत् ।

तच्च पुनस्त्रिगुणीकरणात् साधितं नवतन्तुरूपात्मकमेकमेव सूत्रं भवति, तद्वदेव तस्मिन् एकस्मिन्नेव सूत्रे तेजो जल-पृथिवी रूपाणि त्रीणि भूतानि, तथा, अग्निवायु सूर्यरूपाणि

त्रीणिज्योतिषि च देवतासत्त्वयुक्तानि, वाक्-प्राण-मनोरूपाणि आध्यात्मकानि आन्तर्याणि त्रीणिकरणानि च तेषु नवतन्तुषुक्लृप्तानि तद्भावनार्हाणि च भवन्ति ।

एवं एकेनैव तन्तुनाद्वेधाद्विवारं वा त्रिवृत्करणेन साधितस्य नवतन्तुकस्य पुनः सिद्धस्य एकस्यैव सूत्रस्य पुनरपि "संविद्-भावना-क्रियारूपेण वेदत्रयेणावृतोऽहम्" इति मौञ्जीबन्धने भावनयागम्यते मौञ्जीरज्जुरपि यज्ञोपवीतानुरूपैव भवति ॥ "मौञ्जीत्रिवृत् समलक्षणा" इति

त्रिदलीकृताभिः त्रिशदितिभिः वेष्टनेन तन्मध्ये निबद्धेन एकेन ब्रह्मग्रन्थिना साधितं तत् पवित्रं यज्ञोपवीतम् सम्पद्यते, तच्चयज्ञायैव सन्धारणार्हम् भवति समन्त्रकमेवेति, तदिदं तन्मन्त्रार्थेनैवगम्यते ।

"यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्चशुभ्रं यज्ञोपवीतं बलमस्तुतेजः ॥"

इति अयं प्रसिद्धः यज्ञोपवीतधारणे विनियुक्तो मन्त्रः । अत्र "प्रजापतेर्यत् सहजंपुरस्तात्" इति तदाविर्भावबोधको द्वितीयः पाद, "पुरस्तात्"—आदिसृष्टौ प्रथमतः ब्रह्मात्मनस्तस्य प्रजापतेः सहजं—सहैवाविर्भूतं यत्, तदिदं परमंश्रेष्ठं पवित्रं सूत्रात्मकम्, यज्ञोपवीतमिति, तदेतत् तात्त्विकं ब्रह्मसूत्रम्, तत्त्वत्रयेण त्रिवृत्कृतेन त्रिगुणीकरणेन नवभिः सङ्ख्यान्तैः वस्तुभिः पूर्वोक्तैः सिद्धमित्यर्थः सम्पद्यते, तत्सङ्केतार्थेन सिद्धमिदं ब्रह्मसूत्रम् ब्रह्मवस्तुबोधकं बाह्यं प्रतीक रूपं चिह्नमिति भावः ।

## ॥ आक्षेपः ॥

अत्र गायत्री मन्त्रेण अनेनैव ब्रह्मोपदेशविषये केषांचित् प्रायः सर्वेषां विदुषां अयं आक्षेपो विद्यते, सच इत्थम्भूतः—ब्रह्मोपदेशेन बटोरूपनयनार्थं गायत्रीमन्त्रो विधीयते,— "गायत्र्या ब्राह्मणमुपनयीत" इति तत्र ऋग्वेदे तथा चतुर्ष्वपि वेदेषु सहस्रशः गायत्री मन्त्राः विद्यन्ते, तेषु "तत् सवितुर्वरेण्यम्" इत्यस्यैव ग्रहणे किं प्रमाणम्, किं कारणं च इति सन्दिह्यते, यतः— मन्त्रब्राह्मणोपनिषदादिषु कल्पसूत्रादिषु गृह्यसूत्रेष्वपि यत्रकुत्रापि स्पष्टतया अस्यैव-मन्त्रस्य विधानं न दृश्यते, तत्केन कारणेन अयमेव मन्त्रो गृहीतः इत्येव आक्षेपस्य बीजम्, तत्समाधानं च एवं भवितुमर्हति, अस्ति तत्र किञ्चित् तत्त्वार्थवैशिष्टयम्–तच्च इत्थम्भूतम्—

तत्र प्रथमं तत्त्वम्—परोक्षवस्तुसत्त्वार्थकम्, यत् प्रथमे पादे अन्तर्हितम्, वाच्यार्थसिद्धं लक्ष्यार्थावबोध्यं च, "तत् सवितुर्वरेण्यम्" इति, अत्र "तत्" इति प्रथमं पदं परोक्षार्थबोधकम् "तदिति परोक्षे विजानीयात्" इति प्रत्यक्ष शब्दशास्त्रनियमात् । एतेन तदितिपदं परोक्ष-सिद्धस्य वस्तुनः ब्रह्मात्मनो निदर्शकं इति सिध्यति, तस्मिन् अर्थे ऋङ्मन्त्रादिरूपाणि वेदोपनि-षदादिषु प्रसिद्धानि बहूनि प्रमाणानि विद्यन्ते ।

"तदिदास भुवनेषु ज्येष्ठम्"

इति, (ऋ० १०,१२०, १)

"आनीदवातं स्वधया तदेकम्"

इति (ऋ० १०, १२९, २)

**"रूपं रूपं प्रतिरूपोबभूव तदस्य रूपं प्रतिचक्षणाय"**

**इति, (ऋ० ६, ७, १८)**

"तदेतत् ब्रह्मापूर्वमनन्तरमबाह्यम्"

**इति, (बृ० उ० २, ४, १९)**

"यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥"

**इति, (के० उ० १, ४)**

"तदेवश्रुक्रंतद्ब्रह्मातदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदुनात्येतिकश्चन ॥"

**एतद्वैतत् इति च, (कठो० २, २, ८)**

**इत्यादि वचनैः तस्यैव ब्रह्मात्मनः इन्द्र शब्देन निर्देशः, तथा तत् इति सः इति च तच्छब्देनैव तन्निर्देशश्च भवति ।**

इन्द्रो यातो वसितस्य राजा सेदु राजा क्षयति चर्षणीनाम्"

**इति (ऋ० १, ३२, १५)**

"इन्द्रो ब्रह्मेन्द्र ऋषिः० **इति, (ऋ० ८, १६,) तस्यैव ब्रह्मात्मनः साक्षात्कारेणोदिता ब्रह्मात्मता परोक्षदृशा प्रतिदर्शिता च ।** "स एतमेव पुरुषं ब्रह्मततमस्यद्इदमदर्शमितीञ् इतिस्मादिदन्द्रोह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण" **इति (ऐ० उ० १, ३, १४) ।**

"ओं तत् सदिति निर्देशोब्रह्मणस्त्रिविधः स्मृतः" **इति च स्मृतिः ।** "सवितुः वरेण्यम् भर्गः" **इति पदत्रयमपि तस्यैव परोक्षस्वरूपतत्त्वबोधकं भवति । तत्र सवितृशब्दः विश्वोत्पत्तिमूलकारणीभूतस्य सत्यवस्तुनोबोधकः, साक्षाद् वाच्यार्थेन सम्बन्धेन, तथा हि—"षूङ प्राणिप्रसवे" इत्यस्य दिवादेः–तथा "षूप्रेरणे" इति च तुदादेश्च धातोः प्रसवप्रेरणार्थयोगेन सोऽयं सवितृशब्दः दिविप्रतिदिनमभ्युद्यतः प्रत्यक्षस्य भौतिकस्य ज्योतिर्मयस्य सूर्यस्य बोधकः, रूढार्थेनवाचकशक्तिमुखेन च, तथा तदन्तर्यामिबोधकोऽपि भवितुमर्हति लक्ष्यार्थयोगेन, तथा एकस्यैव शब्दस्य प्रत्यक्ष-परोक्षसिद्धयोः उभयार्थयो बोधकत्वमनुश्रूयते सूर्यशब्देनैवोपदिष्टम् ।**

"सुसन्दृशं त्वां वयं प्रतिपस्येमसूर्या विपस्येमनृचक्षसः"

**इति, (ऋ० १०,)**

**तस्यायमर्थः—हे सूर्य त्वां वयं सुसन्दृशं सम्यग् द्रष्टारं प्रतिपस्येम, तथा नृचक्षः—मनुष्यदृशः–विपस्येम प्रत्यक्षमपि विशेषेण विषयीभूतं दृश्यं पस्यामः इति, अत्र प्रत्यक्षदृष्टोऽसौ सूर्यः बाह्यः वाच्यार्थरूपः भौतिकतत्त्वसिद्धश्च, केवलं द्रष्टृरूपः सूर्यस्तु अमुष्यैव अन्तर्यामिस्वरूपः परोक्षसिद्धः केवलं चैतन्य सत्त्वः ।**

"योऽसावादित्ये पुरुषः सोऽसावहम्"

**इति (शु० य० सं० ४०, १७ )**

**इति तदनुश्रवणात् ।**

"सयश्चायं पुरुषो यश्चासावादित्ये स एकः"

इति च, (तै० भृ० १०, ४)

तस्यैवपरोक्षस्य सूर्यस्य प्रत्यक्षसिद्ध सूर्यान्तर्यामित्वमपि अनुश्रूयते, तथाहि—

"यः आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्योन वेद यस्मादित्यः शरीरम् ।
यः आदित्यमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः ।।"

इति (बृ० ३, ७, ९)

तस्यैव सूर्यान्तर्यामिणः सन्निदर्शकं पदं इदम्, अत्र "सवितुः तत् वरेण्यं भर्गः" इति पदत्रयम् समासेन, वरेण्यं वरिष्ठं श्रेष्ठं इति तद्विशेषणरूपम्, तत् इति पदं तद्विशेष्यं वस्तु-निदर्शकम्, ज्योतिः भर्गः इति पदं तत्स्वरूपबोधकम्, इति तदर्थसमन्वयः ।

"भर्गः"–"भ्रस्ज पाके" इति तुदादेः धातोः अर्थयोगात् विश्वपरिपाककारणीभूतं सूक्ष्मतमं केवलं चैतन्यं ज्योतिर्गम्यते, यत् खलुकालात्मना वैद्युतेन सत्त्वेन व्याप्तं कालाग्नि-रुद्रात्मकं ज्योतिः श्रूयते, अतएव भर्ग इति शब्देन रुद्रएवस्तूयते "भर्गोहि नामोतजातवेदाः" इति, (ऋ०           ) "हरः स्मरहरोभर्ग" इति च रुद्रस्यनामधेयं सुप्रसिद्धमेव, स च पुंल्लिङ्गान्तः भर्ग शब्दः, अत्र तु "भर्गस्" इति नपुंसकः इति विशेषण । सोऽयं भर्गशब्दः तच्छब्दस्यविशेषणरूपः, अतः तत् भर्गः पराज्योतिः स्वरूपमेव, भवितुमर्हति, तस्मात् सर्वेभ्यः श्रेष्ठतमं उत्तमं भवति, अत्र प्रत्यक्षसिद्धं अदः द्युलोकस्थं आदित्यं तेजः उत्तरम्, श्रेष्ठतरम्, इति भावः, तदिदं स्पष्टमेवान्यत्रश्रूयते ।

"उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्य मगन्म ज्योतिरुत्तमम् ।।"

इति, ( ऋ० १, ५०, १० )

अत्र उत्तरं द्युलोकस्थं ज्योतिः प्रत्यक्षं पश्यन्तः इति तदनुदर्शनात्—

"विपश्ये मनुचक्षसः"

इत्यनेन तत् समानम् ।

"अगन्मज्योतिरुत्तमम्"

इति च तत्परमं ज्योतिः अन्तर्याति सत्त्वम् ।

"सुसन्दृशं त्वा वयं प्रति पश्येम सूर्य"

(ऋ० १०, १५८, ५)

इत्यनेन उपदिष्टं द्रष्टत्वसत्त्वपूर्णं तदेव सवितुः गायत्र्याश्चतुरीयं पदमिति सम्पद्यते, एतदर्थावबोधकः औपनिषदोयजुर्मन्त्रवर्णः ।

"गायत्र्यस्येकपदीद्विपदीत्रिपदी चतुष्पदी अपदसिनहि पद्यसे नमस्ते तुरीयाय दर्शताय-पदाय परोरजसेऽसा यदोम् । प्रापदहमदः प्रापम्" इति (बृ० उ० ५, १४, ७) ।

अतः तस्य परोक्षस्य तुरीयपदस्यैव तद् वरेण्यं भर्गः इति पदत्रयेण निर्देशः इत्युपद्यते ।

"अग्ने रायेदिदाहिनः सुवृक्तिभिर्वरेण्य"

( ऋ० )

"वैरण्यस्यते वसइयानासो अमन्महि"

इति, ( ऋ० )

"नेरण्याऽनु प्रयाणमुषसो विराजति"

इति च, ( ऋ० )

तदनुश्रवणम् । अथवा "सवितुः देवस्य" इति विशेष्य-विशेषणरूपयोरुभयोः पदयोः योगेन सवितृशब्दः सूर्यान्तर्यामि वाचक एव भवितुमर्हति, तस्य देवस्य दिव्यात्मनः परात्म-वस्तुनः वरेण्यं वरणीयं प्रत्यक्षतो दर्शनीयं ध्येयं च तत्-अदः दिविप्रत्यक्षसिद्धं आदित्यं तेज एव भर्गः शब्दवाचकं भवति, तदिदं अधिभौतिक तत्त्वेन प्रत्यक्षं दर्शनीयं भवति, सर्वेऽपि सन्दृश्यते इति भावः ।

अत्र "सवितुः तेजसश्च" औपचारिकोभेदव्यपदेशः, "राहोः शिरवत्" तयोः तादात्म्यात् अनन्यसत्त्वाच्चेति प्रत्येतव्यम् । इति च श्रीमदाद्यशङ्करभगवत्पादाचार्याणां गायत्रीमन्त्रभाष्योक्तं तत्त्वम् वैशिष्ट्यं चेति सङ्क्षेपः ।

"भर्गो देवस्यधीमहि"

इति द्वितीयेन पादेन तस्यैव सवितुः परमात्मनः अधिभौतिकं दिव्यं तेजः स्वरूपमुप-वर्ण्यते, अमुष्य तस्य च "धीमहि" ध्यानमुखेनोपास्यत्वेनोपदेशात् ।

"देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः ।
नमस्यन्ति धियेषिताः ॥"

इति, ( ऋ० ३, ६२, १२, )

"तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।
पश्येम शरदः शतम् ॥"

इति च, (ऋ० ७, ६६, १६)

अथ तस्यैव परमात्मनः सवितुः अध्यात्मकं तत्त्वं तु—"धियोयोनः प्रचोदयात्" इत्यस्मिन् तृतीये पाद्ये अन्तर्हितं गम्यते, "यः—अयं अपरोक्षसिद्धः प्रत्यगात्मानः अस्माकं धियः प्रेरयेत्" तस्यास्य सवितुर्देवस्य "इति अस्यैव दिव्यभावेन तद्वरेण्यं तेजः धीमहि" इति अन्तरात्मनः तेजोऽनुध्यानं प्रतीयते "ओमित्येवंध्यायथ आत्मानम्" (मुं० उ० २, २, ६) इत्यादिषु प्रणवेनध्यानयोगवत् अत्रगायत्री मन्त्रमुखेनापि तदनुध्यानोपपत्तेः ।

एवं सर्व वेदोपनिषदसत्त्वं, तत्त्वत्रयसामरस्ययोगः, तादृशतात्विकार्थरहस्यं अस्मिन्नेव मन्त्रे विशेषतो विद्यते, तथा तज्ज्ञानोपासना कर्मादि योगानां तत्समन्वयेनोपदेशः सर्वार्थ-साधकोधीयोगः, संविद्-भावना-क्रिया प्राधान्यं, लौकिक-प्रापञ्चिकश्रेयः फलप्रदं सामर्थ्यम्, तथा पारमार्थिकं निःश्रेयसरूपामृतत्वप्रतिष्ठा च अनेनैव मन्त्रेण सिध्यतीति प्रतीयते, तस्मा-देतैर्बहुविधैः कारणैः अयमेवगायत्रीमन्त्रो ब्रह्मोपदेशार्थं विहितः इत्युन्नीयते ।

## ।। धीयोगवैशिष्ट्यम् ।।

तत्रापि अस्मिन् गायत्री मन्त्रे विद्यते किञ्चिद् वैदिकंविशिष्टं धीयोगतत्त्वम्, तथाहि–अस्मिन् विषये ऋग्वेदे अनुश्रूयते—

"यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ।।"

इति, (ऋ० १, १८, ७)

तस्यायमर्थः—यस्माद् ब्रह्मणस्पतेः परमपुरुषात् ऋतेविपश्चितः—ज्ञानिनोऽपि यज्ञः न सिध्यति, तादृशः सः परमात्मा धीनां योगं सर्वासांधियां एकस्मिन् लक्ष्ये संयोगमनुसृत्य स्वयमेव इन्वति-दीप्यते प्रकाशते स्वरूपेण आविर्भवतीतियावत् ।

अत्र तत्त्व त्रययोगेन प्रत्यक्ष–परोक्षापरोक्ष सत्त्वेन तथा तत्समन्वयेन धीयोगेनैव यः विद्वद्यज्ञः सिध्यति सोऽयं तादृशोधीयोगोऽपि अस्मिन् गायत्री मन्त्रे उपदिष्टोऽस्ति, अक्षरशः प्रत्येकस्मिन् पदे पादे च सूक्ष्मरूपेण तादृशार्थ सत्त्वात् । अतः अयमेव मन्त्रो ब्रह्मोपदेशार्थं उपनयने समुचितः इति प्राचीनैः ऋषिभिः सङ्गृहीतः तथा शास्त्रमुखेन विहितश्चेति प्रतीयते ।

तस्माद् गायत्री मन्त्रमुखेनोपदिष्ट एव सर्वतः प्रथमोब्रह्मोपदेशः, वेदविद्याद्यधिकार-सत्त्वसम्पादकः, ब्रह्मवर्चस्त्वादि सत्त्वप्रापकः, सर्वथा प्रधानः ब्रह्मात्मवस्तु साक्षात्कारार्थं प्रभवतीति प्रतिज्ञायते, अतएव अन्तिमे तुरीयाश्रमे सन्न्यासे यतीनामपि अन्ततः अस्मिन्नेव गायत्रीमन्त्रे प्रवेशः उपदिश्यते, तथैव पुनरनुष्ठीयते च सन्न्यासग्रहणविधौविरजाहोमादे रनन्तरमिति प्रसिद्धमेवेदम् । यः मन्त्रः उपनयने प्रथमतः वेदादि विद्याधिकारार्थं वैदिक—यज्ञ-धर्मादि ब्रह्मकर्मानुष्ठानार्थं च गुरोर्मुखात् उपदेशमुखेन सङ्गृहीतः,—तथा पुनः प्रतिदिनं सवनत्रये सन्ध्यायां अनिवार्यतया निष्कामनया वेदशासन मात्रया अवश्य-कर्तव्यतया च नित्यं समुपासितः, यस्यैवमन्त्रस्यमुखेन स सर्वान्तिरात्मापरमः पुरुषः समाराधितः तस्यैव ब्रह्मात्मनः साक्षात्कारार्थं अन्ते तस्मिन्नेव गायत्रीमन्त्रे प्रवेशात् सोऽयं मन्त्रः एव ब्रह्मो-पदेशार्हः इति यथोक्तं सर्वमुपद्यतेतराम् ।

तथा च सूत्रितम्–आचार्येन्द्रेण बौधायनेन—सन्न्यासविधाने—

"ॐ भूः तत् सवितुर्वरेण्यं गायत्रीं प्रविशामि । ॐ भुवः भर्गोदेवस्य धीमहि सावित्रीं प्रविशामि, ॐ स्वः धियोयोनः प्रचोदयात् सरस्वतीं प्रविशामि ।

यथोपदेशमनुप्रवेशात् तदर्थसिद्धिं कृतकृत्यतादि समृद्धिं च अभिमन्यन्ते, सर्वेऽपि वेदविदो विपश्चितः इति निर्विवादमभ्युपगन्तव्यमेव भवति, तथाऽस्तु । तत्रैव अन्यदपि विषयवै-शिष्ट्यमस्ति तच्च गायत्रीमन्त्रे महावाक्यार्थ सत्त्वम्—सन्न्यासे उपदेष्टव्यानां तथा ब्रह्मात्म-तत्त्वावबोधार्थं उपनिषदि उपदिष्टानां "तत् त्वमसि" अहं ब्रह्मास्मि, प्रज्ञानं ब्रह्म, अयमात्मा ब्रह्म," इत्यादीनां महावाक्यानां रहस्यार्थ तत्त्वं अस्मिन् गायत्री मन्त्रे गुप्तरूपेण वाच्यार्थ-लक्ष्यार्थ-ध्वन्यार्थादिरूपेण सूक्ष्मसत्त्वेन प्रतिष्ठितमस्तीति प्रतिज्ञायते, तथाहि—अस्मिन् मन्त्रे "तत्" इति प्रथमं पदं वाच्चार्थत एव परोक्षसिद्धस्य परब्रह्मवस्तु तत्त्वस्यैव बोधकमिति

सुप्रसिद्धमेव, "तदिति परोक्षेविजानीयात्," "ओंतत् सदितिनिर्देशोब्रह्मणस्त्रिविधः स्मृतः" इत्यादिकं तद्वचनम् ।

"सवितुः" इति पदस्य ब्रह्मवस्तुबोधकत्वमपि उपनिषद्वचनेनैव सिद्धम्, तथाहि—

"यतो वा इमानि भूतानि जायन्ते ।
येन जातानि जीवन्ति ।।
यत् प्रयन्त्यभि संविशन्ति ।
तद् विजिज्ञासस्वातद् ब्रह्मेति ।।

इति, (तै० भृ० उ० १, १)

तत्र यत् खलु जगज्जन्मादिकारणत्वेन ब्रह्मेति निर्दिष्टं - तत्त्वं केवलेन सवितृशब्देन तथा तत् सवितुर्वरेण्यं भर्गः इति पदचतुष्टयेन च विशिष्टतया स्पष्टार्थतया च प्रतीयते, ब्रह्ममीमांसायां "अथातो ब्रह्मजिज्ञासा । जन्माद्यस्य यतः" इत्यत्रतादर्थ्येनैव ब्रह्मोपदेशवत् इति ।

स एवार्थः अत्रापि उपदिष्टो गम्यते, एकेनैव सवितुः इति पदेन, "षूङ प्राणि प्रसवे" इति धात्वर्थयोगात् सर्वेषां प्राणिनां प्रसवादि कारणीभूत एव सविता इति तस्य जगत्कारणत्वमर्थादेव सिध्यति, यत् खलु आविर्भावकारणं तदेव स्थितो रक्षणे पुनः प्रविलयेऽपि स्वयमास्पदी भूतमितिगम्यते, उपादानकारणे सुवर्ण-मृत्तिकादौ तत्कार्यरूपाणां कङ्कण-कुण्डलादीनां घट-शरावादीनां च तथा विधस्य रूपस्य प्रत्यक्षदर्शनात् सिध्यति ।

एवमेव "तत् त्वं असि" इत्यस्य महावाक्यस्यतात्विकः समग्रार्थेऽपि अस्मिन् गायत्रीमन्त्रे अन्तर्हितोगम्यते, तद्यथा—तत् इति प्रथमेपदे सिद्धं सवितुः वरेण्यं ज्योतिः स्वरूपात्मकम्, सर्व प्रसवादिकारणरूपं ब्रह्मैव भवितुमर्हतीति व्याख्यातमेव, "त्वं" इति पदस्य अर्थः "धियो योनः प्रचोदयात्" इति तृतीयपादेन गम्यते, यः अस्माकं धियां प्रेरकः सोऽयमन्तरात्मा जीवरूपेणनिर्दिष्टः, युष्मच्छब्द प्रत्ययगम्यत्वेन तदुद्देशेनेतिप्रतीयते, "असि" इति पदस्यार्थः "तत्-त्वं" इत्यनयोरुभयोः पदार्थयोः समन्वययोगरूपः "भर्गो देवस्य धीमहि" इति द्वितीय पादेनगम्यते, तस्मिन् ज्योतिर्ध्याने तादृशानुसन्धाने समाधाने च तत्तादात्म्यसत्त्वस्य लक्ष्यरूपेण स्वीकारोपदेशात् ।

"नभिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणासह ।
सोऽहमस्मीत्युपासीत विधिनायेन केन चित् ।। इति

तद्विधानानुस्मरणम् । तत्र "तत् त्वमसि" इत्यस्यैव प्रतिच्छायापन्नमिदं तद्विलोमानुभावार्थ सत्त्वकं भवति तच्च—"अहं ब्रह्मास्मीति", प्रतीयते ।

तथाहि—तत्त्वोपदेष्टागुरुः शिष्यमुद्दिश्य यदा उपदिशति तदा "तत् त्वं असि" इति तदुपदेशस्य स्वरूपवचनं भवति, तदुपदेशानुरूपेण अर्थभावेन यदाशिष्यः स्वयं तद् गृह्णाति तदातु तदहमस्मीत्येव प्रत्येति, तथैव प्रत्येतव्यं भवति, तत्तुलक्ष्यार्थानुसारेणैवेति सङ्गच्छते, न तु पुनः तत् त्वमसीति, तद् भवितुमर्हति वाच्यार्थ सत्त्वेन यथाशब्दम्, एतेन "आवृत्तिरसकृदुपदेशात्" इति विहिता प्रत्ययावृत्तिऽपि तदहमस्मीत्येव युक्तम्, नैव "तत् त्वमसि तत्त्वमसि" इति प्रत्ययावृत्तिरिष्यते, नापि सा शिष्यते शास्त्रेण, तस्मात् यथाकथञ्चिदुपदिष्टं अध्यात्मतत्त्व

सर्वमपि अपरोक्षानुभवेनैव सार्थतामुपैतीति अभ्युपगन्तव्यमिति सम्पद्यते, अस्मिन्नर्थे वेदोपदिष्टानिबहुविधावचनानि श्रूयन्ते—

"योऽसावादित्ये पुरुषः सोऽसावहम्"

(शु० य० सं० ४०, १६)

"योऽसावसौ पुरुषः सोऽहमस्मि"

इति च, (ई० उ० १६)

"अहं तदस्मितदसित्वमेतत"

इति च ततोऽपि स्पष्टार्थकं वचनम्। तदेतदेवरूपान्तरेणापि निर्दिष्टं दृश्यते— "मदो माप्रापद् अहमदः प्रापम्" इति (बृ० उ० ) अन्योऽन्यभावसम्पत्ति योगबोधकं वचनम्। ऋङ्मन्त्रेतु इतोऽपि विशिष्टतरं तत्त्वार्थकं वचनमनुश्रूयते अन्योऽन्यात्मकतया जीवेशयोर्योगेन तादात्म्याविर्भावानुवचनम्।

"यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम्।
स्युष्टे सत्या इहाशिषः॥"

इति, ( ऋ० मं० ८, ४४, २३)

अत्र तयोः सायुज्यसम्पत्तियोगः प्रतीयते।

"अहं च त्वं च वृत्रहन् संयुज्याव सनिभ्य आ"

इति, (ऋ० ८, ६२, ११)

एवमेव ब्रह्मात्मसायुज्यार्थे प्रणवाक्षरस्यविनियोगोऽपि एवमेव तत्त्वार्थं प्रतिबोधयति।

"ओमित्येकाक्षरं ब्रह्म अग्निर्देवता ब्रह्म इत्यार्षम्।
गायत्रं छन्दं परमात्मं सरूपम्।
सायुज्यं विनियोगम्॥"

इति (ना० उ० १५)

एवमेव "प्रज्ञानं ब्रह्म" अयमात्मा ब्रह्म" इत्यादीनामपि अर्थतत्त्वं अस्मिन् गायत्रीमन्त्रे लक्ष्यार्थरूपेण गुप्तसत्त्वेन सिद्धं वेदितव्यम्। यः बुद्धीनां प्रचोदकः सोऽयं सर्वान्तरः प्रज्ञानात्मैवभवितुमर्हति, अस्य च तच्छब्दार्थेन योगात् परोक्षत्वम्। सवितुः वरेण्यं भर्गः इति शब्दार्थेन च ब्रह्मत्वं गम्यते।

अनयैवरीत्या अयमात्मात्माधीनां प्रेरकः चेतनः तत्–परं ब्रह्मसवितुः वरेण्यं ज्योतिः स्वरूपं ध्यायामि इति।

अत्र केचिदेवं वदन्ति—अस्मिन् मन्त्रे ध्यानादि साधनावलम्बनार्हं सूर्यदेवतादि रूपं बाह्यं वस्तु वैशिष्टयमेवोपवर्णितमनुश्रूयते, न तु–परत्मात्मनः नैर्गुण्यादिकं उच्चतरं स्वरूपमिति, तेन उच्चतमब्रह्मात्मतत्त्वज्ञानादि कृते नोपयुक्तोऽयं मन्त्रः केवलं कर्मकाण्डादिपरः, अतएव नाध्यात्मतत्त्वादि समर्थकः, नापि उपनिषत्प्रतिपादित परमवस्तुबोधार्थको भवतीति, तत्रेदं समाधानम्—यः धियां प्रेरकः सोऽयं धीभ्यः पर एव भवितुमर्हति कश्चित् चेतनात्म-

स्वरूपः आन्तरतमः इति च निर्विवादम्, अस्यैवान्तरात्मनः इन्द्रात्मता प्रतीयते, बुध्यादीनां सर्वेषामपि इन्द्रियाणां तदाधिष्ठानरूपत्वेन चेतनात्मनः तस्यबोधेलिङ्गरूपत्वाभ्युपगमात् ।

"इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा"

इति (पा० सू० ५, २, ९३)

शब्दशास्त्रानुवचनाद् गम्यते ।

तथा "सवितुः देवस्य वरेण्यं भर्गः" इति पदैः मनोनेत्रादिधिन्द्रियप्रेरकस्य अमुष्य सवितुः अन्तर्यामिणस्तस्य परञ्ज्योतिः स्वरूपत्वमवधार्यते, तत् इति तु पदं परोक्षस्य परं ब्रह्म वस्तुनोनिदर्शकमेवेति सिद्धमेव, "धीमहि" इति क्रियापदमपि न तु केवलं बाह्यवस्तु-ध्यानवत् ध्यानमात्रार्थे पर्यवसन्नम्, अपितु समाधि पर्यन्तार्थप्रतिबोधकमेव, "धाञ् धारण पोषणयोः" इत्यस्यधारणार्थकस्य धाञ् धातोः अर्थयोगात्, तथा, "धीङ आधारे" इति दिवादेः आत्मनेपदिनः आधारार्थयोगाच्चधारणा-ध्यान-समाधिरूपं तत्त्वं अनेन एकेनैवक्रिया-पदेनगृहीतुं शक्यते, तत्तद्ध्येयादि लक्ष्यार्थानुसारेण ।

सवितुः तस्य देवस्य अन्तर्यामिसत्त्वेन तत्त्वत्रययोगात् तेषां त्रयाणामपि अर्थानां समन्वयेन तदेतत् सर्वमपि परात्मतत्त्वं धीयोगसत्त्वे प्रतिष्ठितम्, स एव धीयोगः पूर्णात्मतत्त्व-ज्ञानेन पूर्णः अध्यात्मतत्वप्रधानः विद्वद्यज्ञाद्यनुविधानः एवेति उन्नीयते, "तस्यैवं विदुषोयज्ञस्या-त्मायजमानः श्रद्धापत्नी० इत्यादिकं तदनुश्रवणम् । तस्मिन् विद्वद्यज्ञे आत्मैव स्वयं यजमानः, तदन्तरात्मवस्तुवृत्त्येकनिष्ठा श्रद्धैव तद्यज्ञपत्नी, स च यज्ञः अध्यात्मतत्त्वज्ञानपूर्वकेण वाक्-प्राण-चक्षुमनः-श्रोत्ररूपाणां पञ्चानामृत्विजां सहयोगेन धियां योगेन अन्तरेव यष्टुं योग्यः ज्ञान-भावना-कर्मयोगेन साधयितुं च शक्यः, सोऽयं यज्ञः सर्वेषां यज्ञानां ज्ञानादिरूपाणामपि सम्पादक एवेति सम्पद्यते, तत्रापि प्रथमोपदेशोपलब्धेन गायत्रीमन्त्रेणैव प्रतिदिनं समुपास्येन समुपासितेन च सोऽयं धीयोगः उपनयनादारभ्य अद्ययावत्—अनुवर्तनेन सुदृढां दिव्यभुमिकां प्राप्तः सन् तत्परब्रह्मात्मसाक्षात्काराय प्रभवति इति सङ्गच्छते ।

"सतु दीर्घकालनैरन्तर्य सत्कारासेवितो दृढभूमिः"

इति, (यो० सू० )

तद्विधानं योगशास्त्रे प्रसिद्धम् ।

तथा तादृशेन महत्तमेन साधनेन अस्माकं सर्वेषामपि उपनयनादारभ्य आमरणं तावदीर्घकालपर्यन्तं नित्यमनिवार्यतया उपासितुं उपदिष्टः सोऽयं गायत्री मन्त्रः एक एवास्ति, तथा एतन्मन्त्रमुखेन अनुष्ठातुं विहिता तदुपासनापि एकैवास्ति नित्यकर्मरूपा ब्रह्मकर्मात्मिका निष्कामकर्मयोगसिद्धिहेतुभूता ब्रह्मात्मतत्त्वज्ञानोदयार्थं समर्था, तत्साक्षात्कारसमर्था च, इति प्रतीयते । "गायत्रीमात्र सारोऽपि वरं विप्रः सुयन्त्रितः", "जप्येनैव तु संसिध्येद् ब्राह्मण्येनात्र संशयः, कुर्यादन्यन्नवाकुर्यान् मैत्रो ब्राह्मण उच्यते" इति च तद्वचनम् (मनुः) ।

तस्मात् सोऽयं गायत्रीमन्त्रः सर्वथा प्रधानभूतः सर्वार्थसिद्धि समृद्धिसमभ्युदयादि कारणीभूतः इति प्रतिज्ञायते,—सोऽयमेवास्माकं भारतीयानां भारतीय-वैदिकार्षेयदिव्यसंस्कृतेः मूलबीजरूपः सर्वविद्याज्ञानादि निधिस्वरूपश्चेति प्रतीयते, तत्रापि सर्वेषामिन्द्रियाणां संयमने, स्थिरीकरणेन सुदृढभावेन च संस्थितये, सद्विषयेषु प्रवृत्तये, सात्त्विकैकवृत्तये सद्विद्यासंविदादि

सम्पत्तये च अयं गायत्रीमन्त्रः एव सर्वथा शरणम्, तथा एतन्मन्त्रमुखेन दिव्यदेवतात्मोपासना च सर्वात्मना प्रधानं साधनं सर्वार्थसिद्धिकरणं च भवतीति सम्पद्यते ।

तथैव बहूनां जनानां एकस्मिन्नेव ध्येये योजनार्थं, तादृशलौकिकवैदिकादिध्येयसिद्धये ऐकमत्येन स्थिरीकरणार्थं, एकस्मिन्नेव साधनविशेषे प्रेरणार्थं च सोऽयं गायत्रीमन्त्रः एकमात्रमेव सर्वसञ्जीविनी मात्रैवेति च अनुमीयते, प्रत्यक्षसिद्धमिति च प्रतीयते, भारतेऽस्मिन् भूमण्डले समग्रेऽपि वा प्रपञ्चे एतादृशमलौकिकं दिव्यं आर्षेयं वैदिकं साधनं नैवान्यदस्ति, नापि पुनरन्यद्भवितुं मर्हति इति च प्रतीयते ।

अपि च वैदिक ऋषिकालात् आरभ्यैव प्रवृत्तमिदं दिव्यं सूक्ष्मतमं सत्त्वं गायत्रीमन्त्र-मुखेनैव प्रवर्तितं तत्साधनं च तथा तत्साध्यं सर्वाधिगम्यं परमं ध्येयं च अद्ययावत् अविच्छिन्न-धारया तेषां सद्विधाशिक्षणपरयाचारणादि परम्परया च समागतं सत् भारतीयजनतायामन्तः सूक्ष्मरूपेण जीवति, जागर्ति च जनान् प्रतिप्रबोधयितुं च वीर्यवत्तरेण स्वेनदिव्येन ब्राह्मेण सामर्थ्येन तथा प्रतीचीनेन आध्यात्मकेन सत्त्वेनेति न विस्मर्तव्यम्, नापि तत् पुनः सम्प्राप्तुं प्रमदितव्यतिति च तत्समृद्धयेसुदृढभावेन जनता-जगद्-ईश सन्निधौ सविनयमभ्यर्थये, अस्मिन् विषये अस्तिमेमहान् आत्मविश्वासः वेदविद्या संविद्धिकाससत्त्वः वैदिकधीयोगविद्याभ्युदय-शक्तिवितीर्णः तत्त्वत्रयसामरस्ययोगसत्त्वपूर्णः इति तदेव परमंध्येयं चिरमनुचिन्तयामि ।

एवमादि दिव्यसामर्थ्यसर्वस्वेनपूर्णः सोऽयं गायत्रीमन्त्र एव ब्रह्मोपदेशार्थं गृहीतः इति निवेदयितुं अत्यन्तं प्रहृष्टोमम अन्तरात्मा ।

सोऽयं विषयः वाराणस्यां हिन्दू विश्वविद्यालये-सन् (१९६१) समये बहूनां वेदविदां संस्कृतविद्याविशारदानां मीमांसा-वेदान्तादि शास्त्रपण्डितानां परिप्रश्नेन तत्समाधानार्थं वेदो-पनिषदादिप्रमाणपुरःसरं महताप्रपञ्चेन त्रिचतुरेण तत्त्वपरेण उपन्यासेन, तत् सर्वमपि दैवरातीयव्याख्यानमालायां आत्मकथायां च समर्थितमस्ति ।

अत्र ग्रन्थबाहुल्यदृशा एतावतैव विरमामि ।

प्रणमामि च सर्वान् विद्वद्वरान्—गायत्रीमन्त्रतत्त्वार्थोपवर्णनार्थं तावदवकाशदाननिमि-त्तेन तेभ्योधन्यवादसमर्पणमुखेनसर्वेभ्यो वेदविद्भ्यो नमः ।।इति।।

---

## ।। पञ्चमीकला ।।

### ।। गायत्रीमीमांसा ।।

अत्र एतावत् पर्यन्तम्—तावता महता प्रपञ्चेन तत्त्वार्थमुखेन समर्थितं सर्वमपि तत्त्वं ब्रह्ममीमांसादिनिर्णीतेन औपनिषदतत्त्वार्थेन समन्वितम्, तदेव मीमांसामुखेन स्पष्टतया समर्थ्यते, वेदेषु चतुर्ष्वपि सुप्रसिद्धे पुरुषसूक्ते प्रसिद्धोऽयं तृतीयः ऋङ्मन्त्रः

"एतावा॑नस्य महि॒माऽतो॒ ज्याया॑ँश्च॒ पूरु॑षः"

(ऋ० १०, ९०, ३)

"तावा॑नस्य महि॒मा तत॒ो ज्याया॑ँश्च॒ पूरु॑षः"

इति, (साम० ६२०,)

"ताव॑न्तो अस्य महि॒मान॒स्ततो ज्याया॑ँश्च॒ पूरु॑षः"

इति (अथर्व० १९, ६, ३)

**तस्येदमुपव्याख्यानरूपमौपनिषदं ब्राह्मणानुवचनम्—**

"गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च, वाग्वै गायत्री, वाग्वा इदं सर्वं भूतं गायति त्रायते," **इत्यादि—सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनक्तम्**

"तावा॑नस्य महि॒मा तत॒ो ज्याया॑ँश्च॒ पूरु॑षः ।
पादो॑ऽस्य॒ सर्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥"

(साम० ६२०, )

**इति ॥ (अयं सामवेदस्थो विशिष्टपाठः) (छां० उ० ३, १२, १-६)**
**("तदिदं प्रकरणं-इतः आरभ्य-खण्डद्वयेन पूर्णतां नीतम्")**

**अस्य समग्रस्य प्रकरणस्य ब्रह्ममीमांसायां निर्णीतः तात्त्विकोऽर्थः,** "ज्योतिश्चरणाभिधानात्" **इति अनेन ज्योतिरधिकरणेन, (ब्र० सू० १, १,) तत्र एतत्प्रकरणस्योपसंहारे अन्ततः**—"अथ यदतः परोदिवोज्योतिदीप्यते विश्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद् यदिदमन्तः पुरुषे ज्योतिः" **इत्यादि ॥ (छां० उ० ३, १४, ७)**

**अत्र ज्योतिः शब्देन निर्दिष्टः सः ब्रह्मात्मा-परमः पुरुष एव भवितुमर्हति,** "चरणाभिधानात्" **इति तस्य चतुष्पात्त्वेन निर्देशवचनात् इति सूत्रार्थः, एतदुपत्याख्यानस्य मूलमूलप्रमाणार्थम्—तदेतदृचाऽभ्यनक्तम्—इति उदाहृते ऋङ्मन्त्रवर्णे-पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि" इत्यस्मिन् उत्तरार्धर्चे तस्य पुरुषस्य चतुष्पाद्विभूतियोगोपवर्णनमनुश्रूयते, उपक्रमे तावत्** "गायत्री वा इदं सर्वं" **इति छन्द स एव निर्देशात् गायत्री इति छन्दोऽनुवचनमेवेदं भवितुमर्हति न तु ब्रह्मणः इति—आशङ्कायां तत्समाधानम्**

"छन्दोऽभिधानान्नेति चेत् न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनात्" **इति,**

**तत्र गायत्र्याः छन्दस्विन्याः तथा तद्वाचश्च अवलम्बनेन तस्यां सिद्धस्य चतुतष्पात्त्वतत्त्वादिगुणानुयोगेन ब्रह्मवस्तुतत्त्वानुसन्धानार्थं तत्र मनः समाधानोपदेशः सङ्गच्छते, इति, तत्रापि**

"पादो॑ऽस्य॒ सर्वा॑ भू॒तानि॑" इति

**सर्वभूतात्मकैक पादाद्युपदेशात् तस्य परब्रह्मवस्तुरूपत्व मेवेति सम्पद्यते,** "भूतादि पादव्यपदेशोपपत्तेश्चैवम्" **इति ॥**

**अथ प्रकारान्तरेण कारणान्तरेण च तदेतदाक्षिप्य समाधत्ते—**

"उपदेशभेदात् नेतिचेत् न उभयस्मिन् अपि अविज्ञेधात्" **इति ॥**

**उपदेशभेदात्**—**तत्र पूर्वत्र उदाहृते ऋङमन्त्रे** "त्रिपादस्यामृतं दिवि" **इति द्युशब्दस्य सप्तम्यन्तम् पदम्, तेन द्युलोके तत् त्रिपात् तत्त्वं प्रतिष्ठितमिति गम्यते, उपनिषदि "अथ**

यत्तदतेः परोदिवोज्योतिदीप्यते" इति अत्र दिवः इति षष्ठयन्तं पदम्, एतेन द्युलोकात् परतः तत् त्रिपात् तत्त्वं प्रकाशते इति अर्थः गम्यते, तत्र उभयोः स्थानयोः भिन्नार्थोपदेशात् नैव युक्तं तयोः समानार्थतेति आक्षेपः, तत्समाधानं च, उभयस्मिन्नपि अर्थे नास्ति विरोधः लक्ष्यार्थबोधे तदुभयमपि सङ्गच्छते इति ॥

अयमर्थः शारीरकभाष्येऽपि समर्थितोऽस्ति, "वृक्षाग्रेस्येनः, वृक्षाग्रात् परतः स्येनः" इति "तत्र विभक्तिभेदेऽपि नैवास्ति वस्तुभेद इति भावः" "अथ तत्र रूपान्तरेणापि तदर्थः योजयितुं शक्यते-तथाहि—उपक्रमवचने उपनिषदि" "गायत्री वाइदं सर्वं भूतं यदिदं किञ्च-वाग् वै गायत्रीः" सैषा चतुष्पदा षड्विधा गायत्री "इति गायत्र्याः वाचः चतुष्पात्-तत्त्वोपदेशो-विद्यते" ततः तदेतदृचाभ्यानक्तम् इति उदाहरणे मन्त्रवचने०"

ततो ज्यायाँश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि ॥

इति तु पुरुषस्य तत् त्रिपात् स्वरूपमुपदिष्टम् गम्यते, अन्ते उपसंहारे तु पुनः उप-निषद्वचने "अथ यदतः परोदिवोज्योतिर्दीप्यते" इति ज्योतिःशब्देन यत् किञ्चित् तृतीयमेव परतमं वस्तु निर्दिष्टमिति प्रतीयते, तन्मीमांसायां च अन्ततः निर्दिष्टं ज्योतिः शब्दमेव आदितः सङ्गृह्य पूर्वोक्तयोः गायत्री-पुरुषयोः चतुष्पात् तत्त्वयोगेन तद्ब्रह्मत्वपरं परमं वस्तुतत्त्वं निर्णीतम् । तत्रेदमाक्षेपबीजम्—अत्र त्रेधारूपोपदेशसत्त्वम्, तेन गायत्री-पुरुषः-ज्योति इति वस्तूनित्रीणि पृथक् पृथगेव भवितुमर्हन्ति, इति च तदुपदेशभेदात् तत्र त्रयाणामपि वस्तूनां समन्वयेन तस्य ब्रह्मत्वनिर्णयेनोप पद्यते इति तदर्थः,

एवमेव तत्रैव अवान्तरम् अन्यदपि एकम् आक्षेपस्य कारणं विद्यते इति गम्यते, 'ज्यो-तिश्चरणाभिधानात्' इति यदनुदितं तदेव मूलतः असङ्गतमिव प्रतिभासते, 'अथ यदतः परोदिवो ज्योतिर्दीप्यते" इत्यत्र तस्य ज्योतिषः चतुष्पादादिनिर्देशो न दृश्यते, तस्मात् तदनुवादेन ब्रह्मत्व-निर्णयो न सङ्गच्छते इति, तस्येदं समाधानम्—ज्योतिरात्मनस्तस्य ब्रह्मणः चतुष्पात् स्वरूप-तत्त्वमन्यत्रोपदिष्टमुपश्रूयते, "तथाहि—सत्यकामाय जाबालाय ब्रह्मवस्तुतत्त्वोपदेशे निर्दिष्टं तच्चतुष्पात् तत्त्वं दृश्यते, ते च ब्रह्मणः चत्वारः पादाः प्रत्येकशः चतुष्कलासमन्विताः, षोडश-कलातत्तपूर्णाः (इति विशेषः) ॥

तत्र "प्राची-प्रतीची-दक्षिणा-उदीची" इति चतसृभिर्दिक्कलाभिः परिक्लृप्तः ब्रह्मणः प्रकाथवान् नाम प्रथमः पादः ॥ तथा "पृथिवीअन्तरिक्षंन्द्यो:-समुद्रम्" इति चतसृभिः भुवना-त्मिकाभिः कलाभिः प्रतिपन्नः परिव्याप्तः अनन्तवान् नाम द्वितीयः पादः । तथा "अग्निः-सूर्यः-चन्द्रः-विद्युत्" इति चतुष्कलाभिः समुदितो ज्योतिष्मान् नाम तृतीयः पादः । "प्राणः-चक्षुः-श्रोत्रं-मनः" इति चतुष्कलात्मकः आयतवान् नाम आन्तर्यः आध्यात्मिकः तस्य ब्रह्मणः चतुर्थः पादः । एवं चतुष्पादैः समुदीर्णम् षोडश कला सत्त्व परिपूर्ण तत् परमं बर्णह्मस्वरूपं ज्योतिः इति निर्गलितोऽर्थः । (छा० उ० ४, ५-८) ।

तद्वदेवं मायत्र्यः वाचः, तथा पुरुषस्यच दिव्यं ज्योती रूपत्वमपि वस्तु सिद्धमेवेति औपनिषदं तत्त्वम्, अस्तमित आदित्ये याज्ञवलक्यचन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेव-

वायं पुरुषः इति वागेवास्य ज्योति र्भवतिन चैवायं ज्योतिषाऽऽस्तेपल्यते कर्म-कुरुते विपल-येतीति' इति। (बृ० उ० ४, ३, ४) "तेजोमयीवाक्" इति। (छा० उ० ३, ६, ५, ४)

एवमिह गायत्री-ब्रह्मात्मकयोः वाग्-वस्तुस्वरूपयोः वाचक-वाच्य-सत्त्वयोः समान नाम-रूपगुणधर्मादियोगात् समानभावता गम्यते, तस्माद् गायत्र्याः वाचः-पुरुषस्य चतुष्पात्तादि-रूपेण ज्योतिः स्वरूपेण च सामस्त्यात् ब्रह्मात्मता इति सर्वथा सङ्गच्छते।

तदेतत् सर्वमपि तत्त्वं वाच्यार्थेन लक्ष्यार्थेन च अस्मिन् गायत्री मन्त्रे प्रतितिष्ठतीति-निर्णीतोऽर्थः।

## ।। गायत्रीयन्त्रम् ।।

अत्र प्रसङ्गाद्गायत्रीयन्त्रमपि समर्थितम्-तत्त्वत्रयार्थसमन्वयेन, तस्यास्य यन्त्रस्यापि सङ्केतरूपेण ब्रह्मात्मतत्त्वबोधकत्वमस्ति, यज्ञोपवीत-ब्रह्मसूत्रमिवैवेति तस्यापि तात्त्विकार्थयोगेन समर्थनम्, अस्मिन् गायत्रीयन्त्रे "विन्दुः, त्रिकोणं, षट्कोणं, अष्टदलकमलं (क्वचित् चतु-र्विंशतिदलकमलंच) तथा भू पुरम्" इति रेखया समुल्लिखितं चक्रं विद्यते, तदिदं यन्त्रम्-गायत्र्याः वाचः ब्रह्मात्मनः पुरुषस्य च तत्त्वत्रययोगेन परिक्लृप्तं प्रत्यक्षं रूपकं भवति, परोक्ष-दिव्यसूक्ष्मतमतत्त्वादिबोधार्हम्, तदनुध्यानाद्यवलम्बनार्हम्, तद्दिव्यदेवताभावेन वरिनस्योपा-सनादिसमाराधनयोग्यं वैदिकतत्त्वोपक्लप्तं शास्त्रीयसत्वाप्तं इति प्रतिज्ञायते, तदेतदेव सप्रमाणं वेदोपनिषदादिवचनपुरःसरं प्रतिपाद्यते—तथाहि—अत्र बिन्दुः त्रिकोणं च प्रत्यक्षतम् ब्रह्म रूपायाः गात्र्याः वाचः, तथा पर ब्रह्मणः विश्वरूपस्य सर्वान्तिरात्मनः परमपुरुषस्य च चतुष्पा-त्तत्वपरिपूर्णं तद्बोधकं साङ्केतिकं चक्ररूपं चिह्नं भवति।

## ।। बिन्दुतत्त्वम् ।।

अत्र बिन्दु तत्त्वं प्रथमं विश्वाधिष्ठानरूपं यत्किञ्चित् सद् वस्तुबोधकं अन्तिमं पूर्ण विरामात्मकमेव, यस्य पूर्णबिन्दुसञ्ज्ञा, परमाणुसञ्ज्ञा च लौकिके वेदिकेच शास्त्रे व्यवहारेऽपिच सुप्रसिद्धा, एस्य च सङरमानादिकं न विद्यते, नापिपुनः भावयितुं शक्यम्, तदेतदेव बिन्दोः स्वरूपं लक्षणं चेति सुप्रसिद्धमेव, तदिदं प्राचाम् अर्वाचीनाना सर्वेषामपि विदुषां पाश्चात्यविप-श्चितामपिनिर्विवादास्पदमेव, सहा सर्वत्रापि समानमेव भवति। तत्रापि एतावानेवास्तिभेदः तद्विरोषानुवादश्च, बिन्दोः आश्रयीभूतं स्थानमेवास्तियत्किञ्चित् इति बाह्य-भौतिकदृशां पाश्चात्यानां मतम्, सः पूर्ण बिन्दुरेव सर्वाधिष्ठानरूपः इति प्राचां प्रत्यदृशां वैदिकं तत्त्वम्, तत्स्वरूपलक्षणंतु-परमम् अणुतमम्, तथा सर्वतः महत्तमंच भवितुमर्हति, "अणोरणीयान् महतो-महीयान्" इति च तदनुश्रुतिः, (क० ३, १, २, ३०) "किंस्विदा रीदधिष्ठानमारम्भणं कतमः स्वित्कथाऽऽसीत्" इति च ऋङमन्त्रवर्णोपवर्णितम्।

सोऽयं पूर्णबिन्दुः यन्त्रेऽस्मिन् मध्ये अर्न्ताहितः, गायत्र्याः वाचः परदेवतायाः तुरीयपाद-रूपः, तथा परब्रह्मणः पुरुषस्य अन्तरात्मनश्च सामानः अमात्रः अपात्सञ्ज्ञकः अपात्स्व रूपश्च भवति,

"अपदसि नहि पद्यसे, नमस्ते तुरीयाय दर्शताय पदाय" (बृ० उ०) "अमात्रश्चतुर्थः" (मां० उ०) इति वाचः गायत्र्यास्तत्तुरीयपदोपर्वनम्, तथा सुरुषस्यापि तत्समानमेव,

"अपादेति प्रथमा पद्वतीनाम्"

(ऋ० १, १५२, ३)

"अपादग्रे सर्म भवत्०"

( अ० सं० ) 10/2/29

"अमात्रं त्वा धिषणातितिविषेमहि"

(ऋ०) 1/102/8

"परो मात्रया तन्वा वृधान न ते महित्वमन्म श्नुवन्ति"

(ऋ० ७, ९९, १)

इत्यादीनि पुरुषस्य तदपादतत्त्वबोधकानि,

## ॥ त्रिकोणतत्त्वम् ॥

त्रिकोणं हि त्रिपदायाः गायत्र्याः वाचः तथा परमपुरुषस्य च त्रिपात्तत्त्वबोधकं चिह्नम्, तथा अधिभूतं-अधिदैवतं अध्यात्मं चेति प्रसिद्धस्य प्रत्यक्षापरोक्षसत्त्वस्य तत्त्वत्रयस्यापि लक्ष्यकं साङ्केतिकं लिङ्गं भवति,

अतएव अस्मिन् त्रिकोणे एव, त्रयोवेदाः, तिस्रोव्याहृतयः, त्रीणिभुवनानि, तिस्रो देवताः ज्योतिरात्मानः, त्रीणि करणानि, तिस्रः शक्तयश्च अन्तर्हिता भवन्ति,

तस्माद् बिन्दौ प्रणवाक्षररूपः ओङ्कारः, त्रिषु कोणेषु तिस्रो व्याहृतयश्च लेखनीयाः इति विधानमस्ति, तदेतत् प्रथमम् अधिदैवतं त्रिकोणम् षट्कोणचक्रम् एवं षट्कोणमपि त्रिकोणद्वय-संयोगेन सम्पद्यते, तयोः एकं प्रागग्रं त्रिकोणमधिभूतम्, प्रत्यग्रंतु अध्यात्मकम्, तथा-तस्मिन्नेव षट्कोणे अधिदैवतमाध्यात्मकं चेतिद्वयं, अधिभौतिकं अधिदैवतं चेति द्वयं इत्यपि भावयितुं शक्यम्" तदातु आन्तर्यंत्रिकोणम् आध्यात्मिकं भवति,

अथ 'गायत्री चतुर्विंशत्यक्षरत्रिपदा षट्कुक्षिः" इत्यनेन एतेषु षट्कोणेषु गायत्र्याः षट्कुक्षिकल्पनाऽपिदृश्यते, तत्रापि दिक्संस्थानुसारेणेति गम्यते "तिर्यगूर्ध्वाधरदिक्षट्कुक्षिम्" इति, तत्र षण्णांकोणानां अग्नेय-निऋति-वायव्यऐशान्य-ऊर्ध्व-अधरदिक् संस्थापरिक्लप्तिः इति विशेषः अत्र कुक्षिपदाक्षरं उदरपरं तथा अवान्तरान्तरङ्गपरं च भवितु मर्हति, तस्मात् एतेष्वेव षट्सुकोणेषु षण्णांअङ्गानां हृदयादीनांकल्पनया गायत्रीमन्त्रस्य षडङ्गन्यासानुसारेण तन्मन्त्राक्षराणां विन्यासो विहितः, तद्धृदयादिमन्त्रैः नमः प्रभृतिभिः सहैव, तदनुक्रमस्तु एवं-विधः—"तत्सवितुः हृदयायनमः, (१) वरेण्यम् शिरसे स्वाहा, (२) 'भर्गो देवस्य शिखायै वषट्, (३) धीमहि कवचायहुम् (४) धियोयोनः नेत्रत्रयायवौषट्, (५) प्रचोदयात् 'अस्त्रा-यफट्, (६) इति. (आ. गृ. परि-सूत्रम्)

## ॥ अष्टदलकमलम् ॥

ततः षट्कोणाद् बहिः अष्टदलकमलम्, तदपि अष्टदिक्परिक्लृप्तम्, तत्तु अष्टापद्याः तथा अष्टमर्तेः पुरुषस्य च तत्त्वेन सम्प्राप्तम्,

"वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम्"

(ऋ० ८, ७६, १२)

"गौरीर्मिमाय० अष्टापदी नवपदी बभूवुषी"

इति च (ऋ० १, १६४, ४१)

तदनुश्रुतिः। पुरुषस्य भगवतो रुद्रस्व अष्ट मूर्तित्वं प्रसिद्धम्, आकाशादीनां पञ्चानां भूतानां तथा सूर्याचन्द्रमसोः जीवस्य च योगेन इति।

अत्र मध्यमेन बिन्दुनासहनवानां पादान, परिकल्पन भवति, एतेषामेव अष्टानां दलानां त्रिगुणीकरणेन चतुर्विंशतिदलानां कल्पनाऽपि अभवत्, एतेष्वपि दलेषु गायत्री मन्त्राक्षणां विन्यास कर्तुंशक्यम्, युक्तं च, तत्रापि अष्टदलेषु अष्टविभागेन चतुर्विंशप्ति दलेषु एकैकं अक्षरमिति विवेकः,

॥ भूपुरम् ॥

तदेतद् भूपुरं अष्टदिगात्मकं चतुर्द्वारकं भवति, तच्च चतसृभीरेखाभिः त्रिपद्टिकाभिः त्रिगुणात्मिकाभिः रक्त-शुक्ल-कृष्णाभिः त्रिवर्ण परिक्लृप्ताभिः सम्पद्यते, तदेवत्तु इन्द्रादिभिः अष्टभिः दिक्पालैः देवतैरधिष्ठितम्, तथा अष्टमातृकाभिः शक्ति देवताभिश्च समुपबृंहितं भवति तत्रापि पञ्चाशन्मातृका बीजाक्षरैः अकारादिभिः क्षकारान्तैः तद्भूपुरबेष्टनमपि विहितम्, तच्च एवं रूपम्—पूर्वादिषु चतसृषु दिक्षु क्रमेण चतुर्वर्णविभागेन अकारादीनि विसर्गान्तानि षोडशाक्षराणि विन्यस्यानि, तथा ककारा दीनि क्षकारान्तानि च अष्टसुदिक्षु विन्यसेत् इत्येव विशेषः।

॥ तात्त्विकं विशिष्टं गायत्रीमन्त्रम् ॥ (तत्र चतुष्पात् तत्त्वम्)

अत्र पूर्वोक्ते अर्चनादिषु उपयुक्ते यन्त्रे एव परिकल्पितं विशिष्टतत्त्वेन, तदेतत् तु पूर्वादिदिक्चतुष्ठय संस्थाप्तं चतुर्दलात्मकम्, मध्यबिन्दुना सह पञ्चसङ्ख्योदितं पञ्चारचक्ररूपं पञ्चपादात्मकं पञ्चशीर्षात्मकं च भवति,

"गायत्री-त्रिपदाषट्कुक्षिः पञ्चशीर्षी"

इति तद्वचनम्॥ (ता० उ० १५,)

अत्र चतुर्दलंकमलं तत्त्वतः चतुष्पादात्मकं चतुर्मुखात्मकं च भवितु मर्हति, तच्च वाचः गायत्र्याः पुरुषस्य परब्रह्मणः, चतुर्मुखस्य ब्रह्मणश्च तत्त्वार्थकं भवति,

"चत्वारि वाक् परिमिता पदानि०"

(ऋ० १, १६४, ४५)

"गौरीर्मिमाय० सा चतुष्पदी"

(ऋ० १, १६४, ४१)

"गायत्र्यस्येक पदी द्विपदी त्रिपदी चतुष्पदी"

इति (बृ० उ० १०।९०।२)

इत्यादीनि वाचः गायत्र्याश्च चतुष्पात्तत्त्व बोधकानिवचनानि, सैषा चतुष्पदा षड्विद्या गायत्री" इति च, "पादोऽस्यविश्वा भूतानि त्रिपादस्या मृतं दिवि" इति पुरुषस्य, (ऋ० )

"तदेतत् चतुष्पात् सकलं ब्रह्म" **इति ब्रह्मणः**, तच्च चतुष्कलायुक्तैः चतुर्भिः पादैः पूर्णम्" छां० उ० ४, )

**बिरिञ्चेस्तु चत्वारि वेदात्मकानिमुखानि सुप्रसिद्धान्येव**, "सोऽयमात्माचतुष्पात् । सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादामात्रा मात्राश्च पादाः अकार उकारोमकार इति, अमात्रश्चतुर्थः" **इति च प्रणवाक्षरस्य ओङ्कारस्य वाग्रूपस्य वाचकस्वरूपस्य, तथा तदर्थात्मकस्य ब्रह्मात्मनः सद्वस्तुनश्च चतुष्पात् तत्त्वमनुश्रूयते" (मां० उ० )**

ब्रह्मणः तानिचतुर्मुखानि च चतुर्वेदस्वरूपाणि चतुर्दिक्संस्थानि प्रसिद्धानि, "**ऋचां** प्राचीमहतीदिगुच्यते, यजुषां दक्षिणा, साम्नामुदीची, अथर्वाङ्गिरसां प्रतीची" **इति (तै० य०)**

## ॥ पञ्चपात् तत्त्वम् ॥

**बिन्दुना सह चतुर्दलचक्रेण पञ्चपात्वं गम्यते इत्युक्तमेव, तत् पञ्चपात्तत्त्वमपि वाचः पुरुषस्य कालात्मनश्च समानम्,**

"पञ्चपादं पितरं द्वादशा कृतिम्"

(ऋ० १, १६४, १२)

"पञ्चारेचक्रे परिवर्त माने तस्मिन्नातस्थुर्भुवनानि विश्वा"

**इतिच(ऋ० १, १६४, १३)**

**कालात्मतः ऋतुचक्रस्वपरूपम्, तत्र** "हेमन्तशिशिरयोः समासेन" **इति पञ्चर्तुदर्शनात् ॥**

**तदेवं ब्रह्मचक्रस्वरूपमपि श्रूयते**

"पञ्चस्रोमतुं पञ्चयोन्युग्रवक्त्रां पञ्चप्राणोर्मिं पञ्चवुध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेशां पञ्चाशद्भेदां पञ्चपर्वामधीमः" ॥

**इति ॥ (श्वे० उ० १, ४)**

**तथा** –"सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे" **इति तस्य पञ्च पर्वादि संस्थस्य ब्रह्मचक्रत्वम् ।**

**तदेतदेव गायत्र्याः पञ्चशीषस्वरूप तत्त्वं भवति,** "गायत्री त्रिपदा षट्कुक्षिः पञ्च-शीर्षा" **इति तन्निर्देशात् । (ना० उ० १५)**

**तदिदं प्राणात्मकस्य पञ्चब्रह्मरूपस्य पञ्चमुखस्य रुद्रस्यापि समानमेव भवति । तानि च मुखानि प्राची-दक्षिणा-प्रतीची-उदीची ऊर्ध्वाचेति पञ्चदिक्संस्थानि,** "नमो रुद्रेभ्यः० तेभ्यो दश प्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्योनमः" **इति तदनुश्रवणम् । (रुद्राध्यायः यजुः, अनु० ११)**

"तस्य वारातस्य हृदयस्य पञ्चदेवसुषयः सयोऽस्य प्राङसुषिः प्राणः, योऽस्य दक्षिणः सुषिः स व्यानः, योऽस्यप्रत्यङसुषिः सोऽपानः, योस्योदङसुषिः स समानः, योऽस्योर्ध्वः सुषिः स उदानः" । **इति तेषां पञ्चानां प्राणानां उपवर्णनं तद्दिक्संस्थादिनिर्दर्शन पूर्वकम्, एतेषामेव पञ्चब्रह्मपुरुषसञ्ज्ञाऽपिश्रूयते,** "तेवा एते पञ्चब्रह्मपुरुषाः स्वर्गस्यलोकस्यद्वारपाः" **इति । (छां० उ० ३, १—६)**

तदिदं पञ्चमुखस्य पशुपतेरपिसमानं स्वरूपम्, तेषां पञ्चानां मुखानां "सद्योजातः, वामदेवः, अघोरः, तत्पुरुषः ईशानः" इति सञ्ज्ञान्तराणि प्रसिद्धानि, तेषां दिक् संख्याक्रमोऽपि पृथगेव विद्यते। तत्र पश्चिमे मुखे सद्योजातः, उत्तरे वामदेवः, दक्षिणे अघोरः, पूर्वे तत्पुरुषः, ऊर्ध्वे ईशानः, इति तद्विशेषः, एतेषां मन्त्रा अपि पृथग् विद्यन्ते, "सद्योजातं प्रपद्यामि०, वामदेवायनमः० अघोरेभ्योऽघोरेभ्यः, तत्पुरुषायविदतहे, ईशानः सर्वविद्यानाम्" इति च पञ्च यजुर्मन्त्राः, प्रसिद्धाः। (ना० उ० १७, १-४)

तदेतादृशं पशुपतेः प्रत्यक्षं प्रतीकं नेपाले चिरात् प्रतिष्ठितं दृश्यते, तच्च हिमालये विद्यमानस्य ज्योतिर्लिङ्गस्य केदारनाथस्य शिरोरूपमिति प्रसिद्धम्, तादृशमेव प्रतीकं उदयपुरेऽपि एकंविद्यते, तथैव वाराणसी प्रभृतिषु क्षेत्रेषु प्रतिष्ठितमपिक्वचिदेवदृश्यते, पशुपतौ पूर्वादिषु चत्वारि मुखानि विद्यन्ते ऊर्ध्वं तु केवलं लिङ्गरूपमेव, तस्मात् तत् अस्मिन् यन्त्रे केवलं बिन्दुस्वरूपमिति सिध्यति।

केचित् तु अनेनैव पञ्चमुखतत्त्वेन पञ्चशीर्षायाः गायत्र्या अपि शक्ति देवतारूपत्वकल्पनया पञ्च मुखानि स्त्री रूपाणि रचयन्ति, तान्यपि एक दिङ्मुखसंस्थानि पञ्चवक्त्राणि-सर्वाण्यपि स्वामिमुखान्येव समुल्लिखन्ति, तानि तु एतद्यन्त्रशास्त्रदृशा असङ्गतान्येवेति समुन्नीयते, षट्कोणे दिक्संस्थाक्रमेणैवषट्कुक्षि रूपवर्णनात्, तिर्यगूर्ध्वाधरदिक्षट्कुक्षिम्" इति वस्तुतस्तु-तद्वदेव गायत्र्या पञ्चशीर्षाणामपि संस्थितिं रुद्रात्मनः पशुपतेः मुखानामिवैव चतुर्दिग्-ऊर्ध्व-मुखसंस्थानुरूपमेव रचयितुं युक्ततरमिति उन्नीयते, वैदिक-यन्त्रशास्त्रीयतत्त्वयोगपूर्णतायै इति सङ्क्षेपः।

॥ अस्मिन् चतुर्दल यन्त्र कल्पे वैशिष्ट्यम् ॥

"एकपाद्भूयो द्विपदो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात्।
चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः ॥"
इति पुरुषस्य, (ऋ० १०, ११७, ८)

"गौरीर्मिमाय सलिलानि तक्षती एकपदी द्विपदी सा चतुष्पदी"
इति वाचः, (ऋ० १, १६, ४१)

"गायत्र्यस्येकपदी द्विपदीत्रिपदीचतुष्पदी" इति च० (बृ०) गायत्र्याः।

"अपादग्रे समभवत् सो अग्रेस्वऽराभरत्।
चतुष्पाद् भूत्वाभोग्यः सर्व मादत्त भोजनम् ॥"
इति च थरस्य आत्मनः, (अ० सं०)

एवमादिवचनोपदिष्टं एकादि-चतुसङ्ख्यान्तं पदानुक्रमणं पङ्क्तिरूपेण, तच्च त्रिकोणानन्तरं चतुर्दलेनैव सम्पद्यते, तत्र यद्यपि बिन्दुनासह त्रिकोणे सा चतुःसङ्ख्यासिध्यति तथाऽपि पञ्चसङ्ख्याग्रहणे अन्यत् न किञ्चिदपि विद्यते हेतु भूतं चिह्नमस्मिन् यन्त्रे, तेन पञ्चमुख-पञ्चपात्-पञ्चचक्रादि तत्त्वबोधे अत्र चतुर्दलाभावे अपर्याप्तमेवस्यात्, इतिविशेषः।

एवमेव-षट्कोणादनन्तरं सप्तचक्रमपि बिन्दुनैव सम्पद्यते, तथा अष्टदलानन्तरं नवपदग्रहणमपि बिन्दुयोगेनैव सिध्यति, एवमेव उत्तरत्रापि एकादशादीनि विषमसङ्ख्यात्मकानि

सर्वाण्यपि यन्त्राणिचक्राणि च बिन्दुनैव कल्पयितुं युक्तमितिप्रतीयते, तस्माद् अस्मिन् यन्त्रशास्त्रे त्रिकोणमेकमेव विषमाङ्कचक्रं भवति, इत्यपि सिध्यति ।

"त्रिनाभि चक्रमजरमनर्वम्०"

(ऋ० १, १६४, २)

"त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः"

(ऋ० १, २२, १८) इत्यादि त्रिचक्रमराणि

"पञ्चारे चक्रे परिवर्तमाने"

(१३ )

"पञ्चपादं पितरं"

इति च (ऋ० १, १६४, १२)

"सप्तचक्रे षळर आहुरर्पितम्"

(ऋ० १, १६४, १३)

"सप्त दिशो नानासूर्याः"

इति च (ऋ० ९, ११४, ३)

कालचक्रे तु षडृतवः प्रसिद्धाः तच्च षट्चक्र-षट्कोणादिरूपमेव, तत्र "सप्तमोऽध्यर्ध-ऋतुः" इति (तै० ) वचनात् सप्तर्तुकल्पना सम्पद्यते, तच्चात्रबिन्दुनैव भवितुमर्हति ।

"अष्टापदी नवपदी बभूवुषी"

(ऋ० १, १६४, ४१)

"वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम्"

इति च (ऋ० ८, ७६, १२)

अनेन गायत्रीमन्त्रेण सह ऋग्वेदे तृचस्य पाठात् तद् ऋग्द्वयमपि अत्रैव व्याख्यातम्—तद्विशिष्टार्थपूरणाय, तत्र—

"देवं नरः सवितारं" इति

"नमस्यन्ति धियेषिताः"

( ऋ० ३, ६२, १२)

इति च तदुपासनादि बोधकंवचनंभवति इति विशेषः

---

## ।। षष्ठी कला ।।

### ।। पुराकल्पे स्त्रीणां गायत्रीमन्त्रोपदेशसत्त्वम् ।।

अस्मिन् लोके स्त्री-पुरुषौ तावत् समानाधौङ्गिनौ दम्पती भवतः, देवताविशेषे च शक्ति-शिवात्मकौ वाणी-ब्रह्माणौ वाक्-पुरुषौ, वाग्-आत्मानौ, वाग्-ब्रह्मणी, शची-इन्द्रौ

गौरी हरौ, लक्ष्मी-नारायणौ चेति प्रसिद्धौ दम्पतीसत्त्वपूर्णौ-क्षेत्र-बीजस्थानीयौ स्तः, तत्र स्त्री वामार्धरूपा वामनयना, सोमसत्त्वा रसप्रधाना, क्षेत्रात्मिका रसभूमिः प्रजा प्रसवादि धर्मयुक्ता गर्भधारण समर्थाचेति प्रत्यक्षसिद्धैव ।

पुरुषः दक्षिणाङ्गप्रधानः, तेजः सत्त्वस्वरूपः सूर्यात्मकः, दक्षनयनः, बीजात्मकः इति प्रसिद्धः, "इन्धोह वै नामैष योऽयं दक्षिणेऽक्षन्-पुरुषः, अथैतद् वामेऽक्षिणि पुरुषरूपमेषाऽस्य पत्नीविराट्" इति औपनिषदं वचनमेवात्र प्रमाणम्, (बृ० उ० ४, २, २) ।

एवं वामा स्त्री पुरुषोदक्षः, वामे सोमः दक्षे सूर्यः, इति सिध्यति, एवं सर्वत्रापि स्त्री-पुरुषयोः सामान्य सत्त्वेन निर्देशात् तयोः उभयोरपि द्विजत्वसिध्यर्थं गर्भाधानजातकर्मादि वैदिक संस्कारपूर्वकं साजात्ययोगेन पुनः वैदिक धर्मयज्ञादि ब्रह्मकर्मसु अधिकारसिध्यर्थं च उपनयनेन ब्राह्मीविवाहादिना च व्रतादि नियमेन धर्मप्रजासिद्धये च सर्वेऽपि वैदिक संस्काराः विधीयन्ते, येन प्रापञ्चिकं पारमार्थिकं च सम्पत्सुखादिकं दिव्यं फलमपि प्राप्तुं प्रभवेयुः सर्वाः प्रजाः इति सर्वसम्मतं वैदिकं लौकिकं च तत्त्वम् । "ब्रह्मवादिनी" प्रथमतः ब्रह्म-वादिनी लक्षणं प्रदर्शितं पराशरस्मृतौ माधवसंहितायाम्—"या उपनयनं कृत्वा वेदमधीत्य पश्चात् विवाहं करोति सा ब्रह्मवादिनी तथैव "सद्योवधूः" या प्रथमतः उपनयनं कृत्वा सद्यएव विवाहं विधाय ततः वेदमधीते सा सद्योवधूः ॥इति॥

अस्मिन् विषये आक्षेपः—तत्र केचिदेवं वदन्ति–अस्मिन् प्रपञ्चे सम्प्रति प्रचलितेन व्यवहारेण, तदनुसारेण शास्त्रादिविधिवचनकल्पनेन च स्त्रीणां उपनयन-वेदाध्ययनादिषु वैदिकेषु संस्कारेषु तथा देवयजनादिषु च नास्त्येवाधिकारः, "स्त्री शूद्र द्विजबन्धूनां त्रयी न श्रुति-गोचरा" इति स्त्रीणां वेदमंत्रादिश्रवणनिषेधात् । तस्मात् तासां पतिसेवा मात्रमेव प्रधानम्, "स्त्रीभिर्भर्तृवचः कार्यमेषधर्मः सनातनः" इति तद्विधानाच्च, ताथाऽस्तु नाम पतिसेवा विधान मात्रेण कथंवैदिक संस्कारादिविशेषाणां हानिः इति विचारास्पदमेवैतत् ।

तत्र प्रथमतः उपनयनसंस्कारेण उभयोरपि द्विजत्वे सिद्धे पश्चादेव विवाहः, मिथोयोगेन दम्पतीत्वं च सिध्यति, तत्पश्चादेव तस्याः स्त्रियः पतिसेवैव गतिरिति युक्तमेवास्तु इति । किं स्त्रीणामपि उपनयनसंस्कृतिर्विद्यते, तासामपि द्विजत्वसिद्धिरावस्यकीतिसंविद्यते ! अथ किम् !

"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां गायत्रीवचनं तथा ॥" इति

तद्विधान दर्शनात् ।

अत्र "वचनात् प्रवृत्तिः, वचनान्निवृत्तिः" इति न्याय्यम् । अस्मिन् वचने स्त्रीणामपि उपनयनं, गायत्रीमन्त्रोपदेशः, वेदाध्ययनं च पुरुषैः समान मेवास्ति विहितम् ।

तत्रापि "इष्यते" इति वर्तमान क्रियायोगात् तत्सामर्थ्याच्च तदिदं सार्वकालोचित-मेवेति प्रतीयते, तत्र वैदिक संस्कारकरणे गुणोदयः प्रत्यक्षसिद्धः शास्त्रेण अनुशिष्टश्च, तत्र अकस्मादेव कथं तत्संस्काराद्यकरणमपि तद्गुणाधाने कारणं भवितुमर्हतीति सङ्गच्छते ।

अत्र एवं शास्त्रविधाने सत्यपि नेच्छन्ति पण्डिताः तासां उपनयनादिवैदिक संस्कारं कर्तुम्, कारयितुं च नानमोदन्ते इति शोचनीयमेवैतत्, सोऽयं धर्मः सनातनः श्रौतएव आर्षेयश्च

शास्त्रविहितत्वात्, "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" इति शास्त्रप्रामाण्येन तदभ्युपगमात्, नापि तदेतत् इदानीमेवनूतनतया परिकल्पितम्, वस्तुतः शास्त्रदृष्ट्या युक्तं योग्यं आवश्यकं चैतत् स्त्रीणामपि उपनयनादिकं सद्विद्यादियोग्यता सिद्धि द्वारा सद्धर्माचरणादौ देवादि यज्ञे ब्राह्मीशरीरादि सम्पत्तये सुवीर्यवत्तरधर्मप्रजादिसिद्धयेचेति निर्विवादेन अनिवार्य-तया अभ्युपगन्तध्यमेव अथवा मौनेन तदनुमोदनीयम्, अन्ततः तूष्णीमेव स्थातव्यतया आपतेदिति ।

वस्तुतस्तु-अस्मिन् विषये कश्चिदन्य एवास्ति कल्पः समाधानकारकः ।

पुराकल्पो नाम प्राचीनः पुरातनः श्रौतः कल्पः "शिक्षाकल्पो व्याकरणम्" इति कल्पस्य वेदाङ्गरूपत्वेन निर्देशात् ।

श्रौतेकल्पे तु स्त्रीणामुपनयनादिकं विहितं युक्तमेवेतितदर्थः, श्रौते यज्ञादिकल्पे दम्पत्योः समानाधिकारेण इदानीमपि तदनुष्ठानदर्शनात्, तत्र सर्वेषामपि विदुषां अभ्यनुज्ञा अस्ति, तत्र शास्त्रीयसत्त्वविमर्शनात् सुनिर्णीतं स्त्रीणामपि वैदिकधर्मकर्मादिषु अधिकारसत्त्वम् इति ।

अथ पुनः पुराकल्पः सः कल्पान्तरविषयकः युगान्तरविशेषार्थकः इत्यभिमतेऽपि, तस्य सत्ययुगादिबोधकत्वेऽपि तदिदं समानमेव भवितुमर्हति" कथम् — तत् सङ्गच्छते,—यदि तदानीं तासामुपनयनादिकमासीदिति अभ्युपगम्यते तर्हि ततः पश्चात् कदा केन प्रमाणेन केन विशिष्ट-तरकारणेन अकस्मादेव वा केन मुनिना आचार्येण सः निषिद्धः, इति विचारास्पदमेव, स्मार्ते कल्पे प्रतिषिद्धः उत्तरत्र असामर्थ्यात् अतिप्रसक्ति प्राचुर्यात् अनर्थादि प्रसङ्ग सम्भवार्थाच्चे-ति चेत् नैतदपि प्रामाणिकं वचनम्, स्मृत्यादिग्रन्थेष्वपि प्रत्यक्षं वचनं न दृश्यते, उपनयनादि विधायके गृह्य सूत्रादिके ब्रह्मकर्मानुष्ठानादि विषयके च शास्त्रीयके ग्रन्थै तद्विषयनिषेधवचनं तु मृग्यमेव कलिनिषिद्धेऽपि स्त्रीणामुपनयनमेव-निषिद्धम् । एतावत् पर्यन्तं यत्र कुत्रापिनोपलब्धं इति प्रतिज्ञायते, अत्र केचि देवमूचुः—स्त्रीणां रजस्वलादि समये गर्भधारणादिविशिष्टविषये प्रसवादिके च अशुचिकर आपत्त्यादिप्रसङ्गेऽपितद्वैदिककर्मानुष्ठानस्य अशक्यत्वात् अयोग्यत्वात् अनौचित्याच्चकेनापि निषिद्धं भवेदिति, नैतत् प्रमाणसिद्धं युक्तिसहं च भवितुमर्हति, एव-मेतत् तु तदानीमपि समानमेवासीदिति मतिमतां अज्ञानामपि सम्मतं सर्वविदितमेव, न तु तदिदमिदानीमेव नूतनतया कल्पितं-प्रचालितं प्रचारार्थं नूतनैर्लौकिकैर्व्यावहारिकैरितिसिद्धमेव, अपि च यदा तु तासां तत् वैदिक संस्कारादिकमपि अस्मिन्नेव लोके अस्यामेव आर्येयजनतायां अप्रतिहतं नित्यं प्रचलितमासीत् इति अभ्युपगम्यते, तत्र इदानीमेव कथं केन आनीता नवीनतान्यूनताचेति न ज्ञायते ।

एवमेव अन्येषु गर्भाधान-जातकर्मादिषु अन्त्येष्टिपर्यन्तेषु षोडशसु संस्कारेषु मध्ये सर्वप्रधानं तदिदमुपनयनमेकमेव कथमकस्मान्निषेधमर्हति, किं तेन बाधकम्, किं पुनरपराद्धं तेन उपनयेन, प्रथमतः प्रधानाद् वैदिकसंस्काराद् विरहिताः ता एताः स्त्रियः पश्चात् उत्तरत्र गृहिणीधर्मे स्थिताः सत्यः कथं पुनः नित्यहोमादिषु धर्मकार्येषु यज्ञादिषु अधिकारार्थमर्हेयुः, इति चिन्त्यमेवैतत् ।

अपि च पुरुषां सर्वेषामपि प्रायेण स्वाभीष्टार्थाभिप्रायेण प्रापञ्चिकेषु सर्वेष्वपि कार्येषु गृहिणी अत्यन्तमावश्यकी अर्धाङ्गिनी प्रीतिपात्रयोगिनी गृहकृत्यादिनिर्वाहिनी यज्ञादि वैदिक-

धर्मकर्मानुष्ठाने सहकारिणी सहधर्मचारिणी इति उच्यते, तथैव सत्सन्तानोदये विशिष्टतरानेक रसमय विविधसुखोपभोगादि विषये सेयं स्त्री सर्वात्मना समाश्रयणीयैवेति प्रत्यक्षसिद्धमेवेति न पुनर्वक्तव्यमापतेदिति मन्ये ।

तत्र मूलतः असंस्कृतैव सतीसेयं नारीमणिः जायापदेस्थातुं पुरुषस्य सर्वमप्यभीष्टं निर्वर्तयितुं यथोक्तं ध्येयं साधयितुं च कथं प्रभवेदित्येव विचारास्पदमेव, "गृहिणी गृहमुच्यते" इति वचनं प्रसिद्धम्, "यान्त्येवं गृहिणीपदं युवतयो धन्योगृहस्थाश्रमः" इति कवीन्द्रोदितं सत्यमेव परं तत्त्वार्थकं वचनम्,

अपि च तदिदं लौकिकमपि शास्त्रीयमेवेति सर्वविद्वन्मतं निर्विवादसत्त्वान्वितम् इति न पृथग् वक्तव्यम्,

अत्र यस्याः सकाशात् शरीरात् सत्सन्तानोदयं कामयन्ते पुरुषाः, तस्याः असंस्कारः कथं सत्सन्तानकारणपरः स्यात् इत्यपिचिन्त्यमेव, तन्मनोरथ मात्रमेवेति भावः, अपि च शारीरके आयुरारोग्य बलवीर्यादिके विषये स्त्रीणां सत्संस्कृतिमभिमन्यमानाः तथा कामयमानाः तदनुरोधेन प्रयतमानाः तथा तच्चिकित्सादिमुखेन प्रवर्तमानाश्च सन्तः पुरुषाः कथं सूक्ष्ममान्तरतमं दिव्यं वैदिकं संस्कारं सुवीर्यत्वादिकारणं ब्राह्मीशरीरसम्पदादिसिद्धिमूलभूतमपि नाभिलषन्ति, नापि तत् कर्तुं कारयितुं च प्रवर्तन्ते इति विचित्रतर मेवैतत्,

## ॥ वेदे जायापदस्य गौरवम् ॥

अथ वेदोपनिषदादौ तु जाया पदस्य गौरवं श्रेष्ठत्वं वस्तुसिद्धं महत्त्वं, शास्त्रीयं विशिष्टं तत्त्वं च महता गम्भीरार्थेन सहस्रशः स्थानेषु समर्थितमनुश्रूयते, तथा च ऋङ्मन्त्रवर्णः पराशरार्षेयः,—

"जायेव यो नावरं विश्वस्मै"

इति, (ऋ० १, ६६, ५)

तस्यायमर्थः—यथा इयं जाया-स्त्री अस्मिन् प्रपञ्चे योनौ-योनिसम्बन्धिनि सन्तानोदयादिविषये विशिष्ट प्रेमरसोपभोगानन्दादिविषये च बाह्ये गृहविषयके च विश्वस्मै —सर्वस्मै प्रयोजनाय सर्वाभीष्टार्थसिद्धिफलोदयाय अरं—अलं—प्रर्याप्तं भवति प्रभवति, तद्वदेव अयं गृहपतिरूपेण प्रतिष्ठितः अग्निरपि सर्वस्मै फलाय कल्पते इति,

अत्र "प्रजातिरमृतमानन्द इत्युपस्थे"

(तै० भृ० उ० १०, ३)

"सर्वेषामानन्दानामुपस्थ एकायनम्"

(बृ० उ० ४, ५, १२)

इति च प्रसिद्धमौपनिषदं वचनम्, "उपस्थश्च आनन्दयितव्यं च" इति च,

(प्र० उ० ४, ८)

एवं पुरुषस्य स्त्रीद्वारैव बहुधाभावेन पुत्र-पौत्रादिरूपेण आविर्भावसत्त्वम्, तत्सन्ततेर्मुखेन तदविच्छेदेन तस्य अमृतत्वम्, तेनैव च एतद्विश्वचक्रस्यापि सन्ततगतित्वं च सिध्यतीति वैदिकं तत्त्वम्, तदिदं लौकिकं विश्वव्यवहारप्रसिद्धं प्रत्यक्षसिद्धं चेति निर्विवादम्,

"पुरुषेहवा अयमावितोगर्भोभवतिः यदेतद्रेतः; तद्यदास्त्रियां सिञ्चति अथैनञ्जनयति; साऽस्यैतमात्मनमत्रगतं भावयति। सा भावयित्रीभवयितव्या भवति, तंस्त्रीगर्भंबिभर्ति, स यत्कुमारं जन्मनोऽग्रेऽधिभात्रयति आत्मानमेवतद्भावयति, एषां लोकानां सन्तत्यै, एवं सन्तताहीमेलोकाः"

इति "स्पष्टोऽर्थः" (ऐ० उ० २, ४, १-३)

**अतएव तत्पुत्रप्रसवादनन्तरं तन्मातरं स्वजायां स्वसन्तानाभिवृद्धे रभिनन्दनार्थं तत्स्वाभीष्टार्थध्येयसिद्धेरानन्देनतत्प्रोत्साहनार्थं भर्तारः तां अभिमन्त्रयन्ते तन्मन्त्रवर्णानुवचनपूर्वकम्,**

"अथास्य मातरमभिमन्त्रयन्ते,
इलाहऽसिमैत्रावरुणीवीरेवीरमजीजनत्।
सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति"॥

(बृ० उ० ६, ४, २८)

**हे जाये! त्वं इला—पृथिवीरूपा असि, मैत्रावरुणी-मित्रावरुणात्मकदिव्यतेजो रसयुक्ता, हे वीरे! या इयं वीरं-पुत्रं अजीजनत्-प्रासूत, अतः सा त्वं वीरवतीभव, या इयं सम्प्रति महता श्रमेण तपसा अस्मान् इमान् पुरुषान् वीरवतः—वीर्ययुक्तान् प्रत्यक्षसिद्धान् अकरोत्, अनेन पुत्रप्रसवेन त्वं धन्या इति, तदेतदेव जायायाः प्रधानं लक्षणं भवति—यत् खलु पत्युः पुत्ररूपेण बहुधाभावेन जनयितृत्वमिति प्रसिद्धम्,**

"तज्जाया जायाभवति (यद्) तदस्यां जायते पुनः।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते"॥ **इति,**

(ऐ० ब्रा० ५० ७, )

**यस्मात् कारणात् पुरुषः पतिः अस्यांनार्यां रेतोरूपेण प्रविष्टः सन् पुनः स्वेनैव अन्तरात्मसत्त्वेन स शरीरेण सचेतनेन स्वयमेव जायते, तदेतदेवजायायाः जायात्वम्, तज्जनयितृत्वमितिभावः॥ इयमेव आभूतिः-पुत्रादिरूपेणः व्याप्तिः, इषाभूतिः-महदैश्वर्यरूपा सन्तानसम्पत्तिः, यत् खलु पुरुषेण आत्मनः सन्ततभावाय वीजं वीर्यरूपं तेजः नार्यां जायायां निधीयतेनिधिरूपेण संस्थाप्यते, अतएव** "आत्मावै पुत्रनामाऽसि" **इति प्रसिद्धं वचनं तदर्थं तत्त्वं च,**

**तदेतदेव स्पष्टार्थरूपेण प्रतिपादितम् औपनिषदं वचनम्,** "पुरुषेहवा अयमादितोगर्भोभवतियदेतद्रेतः तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति। तद्यदास्त्रियां सिञ्चति अथैनञ्जनयति, तदस्यप्रथमं जन्म" **इति॥**

(ऐ० उ० २, ४, १)

**अतएव विवाहे वधू-वरयोराशीर्वादमन्त्रः वधूमुखेन वीरपुत्र-प्रसवार्थं कल्पते"**

"वीर सूर्देव कामा स्यो नाशंनो भवाद्विपदेशं चतुष्पदे"

इति, (१०, ८५, ४४)

**तदेतदेव स्पष्टतरार्थेन मुक्तकण्ठेनाहयाज्ञवल्क्यः—तत्रायं जायतेस्वयम्" इति "जायाशब्दनिर्वचनार्थम्"**

तस्यायं समग्रः श्लोकः—

"यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
नैतन्ममतं यस्मात् तत्रायं जायतेस्वयम्" ।। इति ।। (या० स्मृ०)

वैदिकसंस्कारेण संस्कृतायां द्विजस्त्रियामेव द्विजातीय प्रजाप्रसवितृत्वसत्त्वं भवति, न तु असंस्कृतायाः सकाशात् तद्द्विजत्वसत्त्वयुक्तसतप्रजाप्रसूतिर्भवितुमर्हतीति, एतेनापि याज्ञवल्क्यस्येदमभिप्रेतमिति गम्यते, स्त्रीणां द्विजत्वसिध्यैव विवाहादिना द्विजातीय सन्ततिप्रसूतिरेव युज्यते इति ।।

तदेतदुपनिषद्वचनोदितेन तत्त्वार्थेनापि सङ्गच्छते,—तथाहि—"अथ ह याज्ञवल्क्यस्य द्वेभार्ये बभूवतुः मैत्रेयीच कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव" इति ।

तत्र धर्मशास्त्रोक्तं ब्रह्मवादिनीलक्षणं पूर्वं दर्शितमेव-उपनयनं कृत्वा वेद मधीत्य विवाहं कुर्वाणा ब्रह्मवादिनी इति, सेयं तस्याः अनुरूपा अनुगुण्यासञ्ज्ञा, ब्रह्मशब्दस्य वेदार्थकत्वात्, तस्याः अधीतवेदत्वाच्च ब्रह्मवादिनीति च युक्तमेव, ततोऽपीदं विष्टसत्त्वकं ब्रह्मवादिनीत्वं मैत्रेय्याः, तस्याः ब्रह्मात्मज्ञानेऽपि विविदिषादि प्रवृत्तिदर्शनात् । "सा हो वाच मैत्रेयी ये नाहं नामृतास्यां किमहं तेनकुर्याम्, इति, यदेव भगवान् वेद तदेव मे ब्रूहीति, तदनुवचनात्" (बृ० ४, ५, ४) ततश्च उत्तरत्र तस्यै आत्मदर्शनादि—तत्त्वोपदेशश्च अनुश्रूयते ।

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।
मैत्रेयि आत्मनि खल्वरे दृष्टे श्रुते मते सर्वमिदं विदितम् ।।"

इति च (बृ० उ० ४, ५, ६)

## ।। स्त्रीणां मातृत्वम् ।।

एवं स्त्रीणामेव तासां तदिदं मातृपदं निसर्गतः प्राप्तं सर्वेभ्यः श्रेष्ठतमं पदं भवति, तच्चस्वतः सिद्धमपि सत्पुत्रादि प्रसवेनैव सार्थकतां प्राप्नोति, तदेवता सा अस्मिन् प्रपञ्चे महद् गौरवास्पदं स्थानम् गुरुत्वे देवत्वे गृहिणीत्वे जायात्वे च प्रभवति । "मातृ देवो भव । पितृ देवो भव" (तै० ) इति श्रुतिशासनमुखेन तदुपदेशात् । एभ्यो माता गरीयसी" (या० स्मृ०) ।

माता गौरवेणाति रिच्यते (मनु०) इति च तदनु स्मरणम् । "जननी जन्म भूमिश्च स्वर्गादपि गरीयसी" इति स्पष्टोऽर्थः, न मातुः परदैवतम्" इति च मातुः परदेवतात्वं प्रसिद्धम्, "माता प्रत्यक्ष देवता" इति च तस्याः प्रत्यक्षदेवतात्वमपि, सर्वत्र समानमेव भवितु मर्हतीति-निर्विवादम् ।

## ।। पुराकल्प शब्दस्यवास्तविकं अर्थान्तरम् ।।

वस्तुतस्तु पुराकल्प शब्दस्य वास्तविकं अर्थान्तरमेव शास्त्रीयं वैदिकतत्त्वप्रधानं भवति, तदेवात्रयुक्त तरमिति कल्पते, अत्र उपनयनादि वैदिक संस्कारादि प्रकरणसामर्थ्यात् ।

तत्र कल्पशब्दः वेदाङ्गे प्रसिद्धः श्रूयते-उपनिषदि अपराविद्यायाम्—"तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः अथर्ववेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमिति" (मु० उ० १, १, ५) ।

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते" इति तस्य वेदाङ्गत्वम्, श्रौतादि सूत्राणामपि कल्पत्वेन प्रसिद्धिः विद्यते, "अथातः पशुकल्पः" (बौ० श्रौ० सू०) इत्यादि निर्देशात् । तथैव गृह्यसूत्रादीनामपि कल्पत्वमस्ति, "उक्तानि वैतानिकानि गृह्यानिवक्ष्यामः" इति (आ० गृ० सू० १, १) एन यो रुभयोऽपिकल्पयोः मूलभूतः ब्राह्मणकल्पः, मूलतः वेदे पठितानां ऋगादीनां मन्त्राणां यज्ञादिषु विवियोगार्थं प्रवृत्तः, तद्यज्ञीयसंस्थादीनां कल्पकः, सोऽपि प्राधान्येनश्रौतकल्प एव, यस्यैव समाश्रयेण सर्वेऽपि कल्पाः कल्पिताः, तेषामेतेषां सर्वेषामपि कल्पानां पुरातनः सश्रोतकल्प एवेति प्रतीयते, तस्मिन् पुरातने श्रौतकल्पे स्त्रीणां उपनयनादि वैदिक संस्कार विधानं इष्यते, तदिदानीमपि अप्रतिषिद्धं सत् अग्निहोत्रादिषु यज्ञीयेषु श्रौतकर्मादिषु च पूर्वाचार्याणामाचारपरागतं प्रचलितं दृश्यते, तत्र स्त्रीणां मुखेन वेद मन्त्रादिपठनं, होमादेरनुष्ठानं च प्रचलति, तदेतत् श्रौते वैदिके यज्ञादौ स्त्रीणां स्थानं प्रसिद्धमेव, पत्युरसन्निधौ प्रदेशान्तरगमनेऽपि पत्न्या एव नित्यहोमाद्यनुष्ठाने विधानं शास्त्रसिद्धमेव, "पत्नी-कुमारः कुमारी अन्तेवासी ऋत्विजः" इति, (आ० गृ० प० सू०) तत्तु यथापूर्वमेव इदानीमपि समानम् ।

श्रौते यज्ञीये दर्शपूर्णमासादौ इष्टिविशेषे तु व्रतादिहवनम् पत्न्या यजमानेन समानमेव, तदसन्निधावपि पत्न्यैवतद् व्रतादि हवनं एकाकिन्यैव—अनुष्ठीयते, तथा आज्यावेक्षणादावपि दृश्यते ।

व्रतहोमे—अग्ने व्रतपते व्रतं चरिष्यामि" इत्यादिभिः चतुर्भिः मन्त्रैः समिधाधानं विधीयते पत्न्याः अपि, अपि च आन्त्यमिदं प्रमाणं यत् यज्ञपत्नीस्वयमेव प्रजापति ।

सुप्रजसंस्त्वावयँ सुपत्नीरूपं सेदिमा अग्ने सपत्न दम्भन मदब्धासो अदाभ्याम् । इन्द्राणीवाविधवा भूयासम् । अदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्येनोपनिषदे सुप्रजास्त्वाय ॥"

इति (तै० सं०)

सोऽयं मन्त्रस्तु यज्ञपत्न्या एव एकाकिन्याः प्रजपार्थे विनियुक्तः

अत्र केचि देव माहुः—स्त्रीणां मन्त्रपठने होमादिकरणे च यज्ञादौ श्रौते स्मार्ते वा कर्मणि तावन्मात्रमेवाधिकारोऽस्तु नान्येषां मन्त्राणां पठने नार्यो नार्हन्ति इति, नैतदपि शास्त्रीयं समाधानवचनं भवितुमर्हति ।

कुतः एतत्—उच्यते-उपनयनं विना आदितः गायत्री मन्त्रोपदेशे मन्तरेण अन्येषामपि येषां केषां चिदपि वेद मन्त्राणां उच्चारणे नास्त्येव तासामधिकार इति वस्तुसिद्धमेव, यथा पुरुषाणाम्, तथैव अन्यदपिवदन्ति अन्येकेचित्—यज्ञादिषु पुरुषेण पत्न्यासहैववैदिककर्मानुष्ठाने स्त्रीणामास्तांतावत्, न तु तत् स्वतन्त्रतया तासां भवितु मर्हतीति, तत् तु सर्वथैव युक्ततरम् ।

यतः—न तु केवले वैदिके मन्त्रे यज्ञकर्मणि वा पत्न्यासह योगेनाधिकारः किं तु जायात्वे दम्पतीत्वे लौकिकेऽपि विषये धर्मप्रजादिसिद्धयेऽपि पत्न्यासहैव स्त्रीणां अधिकारः न तु एकाकिन्याः इति सर्वात्मना वस्तुसिद्धमेव सर्वत्रापि सुप्रसिद्धं सर्वेऽपिजानन्त्येव, तदिदं सर्वं उपनिषद्वचनेनापि समर्थितम्—"उदपात्रं पूरयित्वा तेनैनामभ्युक्षति," उत्तिष्ठातो विश्वावसोऽ-

न्यामिच्छप्रपूर्व्यां संजायां पत्या सहेति, "अथैनामभिपद्यते" अमोऽहमस्मि सात्व्ँसात्वमस्यमोऽहं सामाहमस्मिऋक्त्वं द्यौरहं पृथिवीत्वं तावेहिसंरभावहै सहरेतोदधावहै पुंसे पुत्रायवित्तये" इति। (बृ० उ० ६, ४, १९-२०)

तथाऽस्तु तर्हि श्रौतकल्पे सर्वं युक्ततरं युक्ति सहं चेति उच्यतां नाम, स्मार्तकल्पेतु निषिद्धमेव तत्, स्त्रीणामुपनयनम्, इति प्राप्तम्, तथाहि—

"गर्भाधानमृतौपुंसः सवनं स्यन्दनात् पुरा।
षष्ठोऽन्नप्राशनं मासि चूडा कार्यायथाकुलम्।
तूष्णीमेताः क्रियास्त्रीणां विवाहस्तु समन्त्रकः॥

इति (या० स्मृ० २)

अत्र गर्भाधानादीनां तूष्णीं कर्तुं विधानात्-विवाहस्य समन्त्रकस्य दर्शनाच्च पूर्वषाम-मन्त्रकत्वं उक्तं भवति इति सम्पद्यते, तत्र चौलानन्तरं विवाहस्य निर्देशात् मध्ये विद्यमानं उपनयनं तासां नास्तीति अभिप्रेतमित्यपिगम्यते, अथवा गर्भाधानादिवत् उपनयनमपि अमन्त्रकमेव अस्तु इति च ऊह्यते, अत एव "वैवाहिको विधिस्त्रीणामौपनायनिकः स्मृतः" इति (म० स्मृ० २) मनुवचनेन तासां विवाह एव तासामुपनयनस्थानीयो भवतीति समाधातु-मपिशक्यम्।

एवं नारीणांतदुपनयनं अमन्त्रकमेवास्तु, अर्थात् नास्तीतिवा निषेध मुखेन तदभिमन्य-मानः याज्ञवल्क्यः प्रथमतः स्वस्यैव जायायै मैत्रेय्यै उपनिषद्वचनमुखेन सर्ववेद तत्त्वार्थ मूलभूतं आत्मदर्शनं उपादिदेश, "आत्मा वा अरे द्रष्टव्यः० मैत्रेयि आत्मनि खल्वरे दृष्टे श्रुते मते सर्वमपि विदितमिति" इति (बृ० उ० ४, ४, ६) तदेतत् तु कथं सङ्गच्छते इति चिन्त्य-मेवेतिवक्तव्यम्।

तथास्तु नाम जायायै प्रेमवशात् तदुपदेशवचनम्—इति अयताम्, "सहोवाच याज्ञवल्क्यः प्रियावैखलुनो भवती सती प्रियमवृधद् हन्त तर्हि भवति एतद्व्याख्यास्यामि ते व्याचक्षाणस्यतु मेनिदिध्यासस्वेति" इति तस्यैव स्पष्टोक्तिः सङ्गच्छते।

तत्र भवती स्वयं ब्रह्मचारिणीतिसुप्रसिद्धा सती गार्गी तु श्रीराजर्षिजनकमहाराज सभायां बहूनां ब्रह्मविदां वेदवादिनां समक्षमेव याज्ञवल्क्येन सह प्रति स्पर्धितदेव विवादं कुर्वाणा उपनिषद् वचनमुखेन तत्परं तत्त्वं वस्तुस्वरूपं सुश्राव, तेनचतदक्षर ब्रह्मात्मतत्त्वविज्ञान मपि प्रति जग्राह इति अनुश्रूयते, तथाहि—"अथ ह वाचक्नवी उवाच ब्राह्मणाः भगवन्तः! हन्ताहमिमं द्वौ प्रश्नौ पृच्छामि तौचेन् मे वक्ष्यति नवैजातु युष्माकमिमं कश्चिद्ब्रह्मोद्यंजेतेति पृच्छ गार्गीति" (बृ० उ० ३, ८, १) तत्र याज्ञवल्क्यस्य ब्रह्मनिष्ठत्व परीक्षार्थं प्रश्नान् प्रष्टुं ब्रह्मणैरभ्यनुज्ञाता सती भवती गार्गी स्वयं पप्रच्छ, अत्र तत्रभवता याज्ञवल्क्येनैव वेद वचनानु-वादेऽप्यनधिकृतेति तिरस्कृतानारी सैव सम्प्रति तत्सम्मुखे प्रति पक्षिरूपेणवेदविषयके एव विवादार्थं स्वयमुपस्थिता गार्गीति विशिष्टं सन्निदर्शनं परं सर्वाश्चर्यास्पदंच भवतीति प्रतीयते।

तद्यथा—"साहोवाच-अहंवैत्वायाज्ञ! यथा कास्योवावैदेहोवा उग्रपुत्रः उज्यंधनुरधिज्यं कृत्वा द्वौ बाणवन्तो सपत्नातिव्याधिनौ हस्ते कृत्वा उपोत्तिष्ठेद् एव मेवाहंत्वाद्वांभ्यां प्रश्नाभ्या-मुपोदस्थाम् तौ मे ब्रूहीति, पृच्छ गार्गीति" इत्यादि। (बृ० उ० ३, ८, २—१२) "सहो

वाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति-अस्थूल-मनणु०—"एतस्य वा अक्षरस्य प्रशासने सूर्याचन्द्रमसौविधृतौतिष्ठतः० **इत्वादिकं बहुप्रपञ्चं संवृत्तं वाद-विवादान्तरं सुप्रसिद्धमेव, तत्रेदमन्तिमं गार्ग्याः निर्णीतमिदं वचनं भवति,**—"साहोवाच ब्राह्मणाः भगवन्तः तदेववहु मन्येध्वं यदस्मान् नमस्कारेण मुच्येध्वम्, न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति, नतोह-वाचक्नवी उपरराम ॥

**(बृ० उ० ३, ८, १२)**

**अत्रेदं महदाश्चर्यकरं महतां विदुषां सभायां ब्रह्मनिष्ठस्य परीक्षार्थं काचित् कुमारी-नारीमणिरेव समर्था बभूवेति ततोऽपि प्राचीनतमाः ऋगादिमन्त्रदर्शनेनवसिष्ठ-वामदेवादिवदेव ऋषित्वं प्राप्ताः वह्व्यः ऋषिकाः स्त्रियः अपि ऋग्वेदेप्रसिद्धाः, अनुश्रूयन्ते, ताः पुनरनुस्मर्यन्ते च सर्वानुक्रम सूत्रमुखेन,—**

"अहमष्टौ वागाम्भृण्यात्मानं तुष्टाव"

**(ऋ० १०, १२५, १-८)**

"उदसौषट्पौलोमीशच्यात्मानं तुष्टाव"

**(ऋ० १०, १४९, १-६)**

"श्रद्धयाश्रद्धाकामायिनी श्राद्धमानुष्टुभम्"

**(ऋ० १०, १५१, १-५)**

"आयं गौः सार्पराज्ञी आत्मदेवतम्"

**(ऋ० १०, १८९, १-३)**

**इत्याद्याः, ताश्च ब्रह्मवादिन्यः प्रसिद्धाः ॥**

"गोधाघोषा विश्ववाराऽपालोपनिषन् निषत् ।
ब्रह्मजायाजुहूनीमा अगस्त्यस्य स्वसाऽदितिः ।
इन्द्राणीचेन्द्रमाता च सरमा रोमशोर्वशी ।
लोपामुद्रा च नद्यश्च यमीनारी च शश्वती ।
श्रीर्लाक्षासार्पराज्ञीवाक् श्रद्धामेधा च दक्षिणा ।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः" ॥

**इति ॥ (ऋ० परिभाषा० सू०)**

**तथैव उपनिषदि अन्याः ब्रह्मवादिन्यो विद्यन्ते, प्रसिद्धा ब्रह्मतत्त्वोपदेशार्थं समर्थाः, तथाहि** "मतस्मिन्नेवाकाशे स्त्रियमाजगामबहुशोभमानामुमाँ हैमवतीं ताँ होवाच किमेतद् यक्षमिति । **(के० उ० ३, १२)** "साब्रह्मेतिहोवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति" **इति (के० उ० ४।१) इत्यादि सङ्क्षेपः ।**

**तत्रत्यानि तान्येतानि मन्त्रोपनिषदादीनि-दर्शनानि वसिष्ठ-वामदेवादीनां दर्शनेन समा-नान्येव भवन्तीत्यभिमन्यन्ते, तथा प्रयुञ्जते च याज्ञिकाः यज्ञीय कर्म विनियोगादौ तान् मन्त्रान् स्त्रीणां दर्शनोदितानपि समानगौरवादिभावेनेति प्रसिद्धम्, । अथ पुनः अस्मिन्नेव अवान्तरेण प्रकाराऽन्तरेण केषांचिदाक्षेपः** "अष्टवर्षं ब्राह्मणमुपनयीत" **इत्यत्र पुँल्लिङ्गशब्देन तदुपनयन विधानात् स्त्रीणां तत् प्रतिषिद्धमिति अर्थाद्गम्यते इति, तथाऽस्तु, तर्हि-पुराकल्पेतु तदा तादृशं**

निषिद्धाचरणं कथं प्रवृत्तमासीत् इति निर्वक्तव्यमापतति, तस्मात् एतादृशेषु विधानेषु पुँल्लिङ्गादिकं कारणं नैव भवितुमर्हति, तथा निषेधविषयेष्वपि तत्समानमेव, पुरुषशब्देन क्वचित् स्त्रीपुरुषयोः सामान्येन निर्देशस्य अन्याय्यत्वाभावात्। यथा च "जायमानो वै ब्राह्मणस्त्रिभिऋणवान् जायते" इति ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति च, श्रुतिप्रसिद्धम्, तत्र देवानां ऋणापाकरणार्थं विहितो यज्ञः, तथा पितुः ऋणापाकरणार्थं विहिता धर्मप्रजा सिद्धिश्च न केवलेन पुरुषेण सम्पादयितुं शक्यम् इति वस्तुसिद्धमेवेतिनिर्विवादम् तद्वदेव "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते" इति एवमादिषु पुँल्लिङ्गेनैवनिर्दिष्टोऽपि स्त्रीपुरुषयोरुभयोरपि सामान्येन सङ्ग्राहक इत्येववक्तुं युक्तं मन्ये। अन्यथा विशेषेण पुरुषस्यैव तद् युक्तं "जन्मना शूद्रत्वम्, संस्काराद् द्विजत्वं" चेति यदि अभ्युपगम्येत-तर्हि तदातु स्त्रीणां तत् नास्तीति वक्तव्यम्, तथा चेत्—स्वतः सिद्धं तासां द्विजत्वं जन्मतः एवेति सम्पद्यते, अथवा सा शूद्रिणीव स्थिता असंस्कृताच द्विजानां कथं विवाहयोग्या भवेदित्यपि चिन्त्यमेवेति पुनरापद्येत,

अथ स्त्रीणां मन्त्रोपदेशात् तन्मन्त्रशक्तिरेव विनश्यति, तथा तदुपदेष्टाऽपि पापमेव प्रत्यक्षं प्रविशति इति च निर्दिश्यते, यथा देवयान्यै मन्त्रोपदेशात् सञ्जीविनी मन्त्रस्य पुनर्जीवनीयशक्तेर्विनाशो बभूवेति उपदिष्यते पुरातनेतिहासमुखेन, तेन च तत्र सर्वतन्त्रस्वतन्त्रः सर्वेष्टसाधनसमर्थोऽपि शुक्राचार्यः हतवीर्यः सद्य एव सम्बभूवेत्यपि प्रतिश्रूयते।

ततोऽपि विशिष्टतरः महदनिष्टकरः सर्वानर्थपरः नरकपतनादिदुरिष्टदुरन्तफलप्रदः स्त्रीणां गायत्रीमन्त्रोपदेशः इति श्रूयते, तथाच नरसिंहनापिन्युपनिषदि स्त्रीणां वेदमन्त्रोपदेष्टा घोरतरे नरके पततीति उपदिष्यते, तत्तुश्रेष्ठं प्रमाणम् उपनिषदुक्तत्वात्, अपि च "स्त्रीशूद्र द्विज बन्धूनां त्रयी न श्रुतिगोचरा" इति यत्र मन्त्रान् श्रोतुमपितासामाधिकारो नास्ति तत्र कथं तत्पठनेऽधिकारः स्यात् एतत् सर्वमपिप्रत्युक्त मिवैवेति सिध्यति, कुतः—यदा तु स्त्रीणां तत् उपनयनादिकं प्रत्यक्षं प्रचलितमेवासीत् तदा एतेषां वचनानां का गतिः आसीत्, कथं तत्सङ्गतिः बभूव इति च, "पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते" इत्यनेनैव वचनेन गतार्थतेति भावः, अथवा अन्येषां काम्यानां पौराणिकानां तान्त्रिकाणां मन्त्राणामुपदेशो निषिद्ध इति प्रत्येतव्यम्, न तु द्विजत्वादिसिध्यर्थानां नित्यकर्मानुष्ठानाद्युपयुक्तानां मन्त्राणामुपदेशपरः स प्रतिवेधः इति ज्ञेयम्।

अपि च स्वस्वसन्तानस्य द्विजत्वं कामयमानाः पुरुषाः शूद्रवद् असंस्कृतायाः शूद्रसमानायाः तस्याः स्त्रियः सकाशात् कथं ब्राह्मणादि धर्मप्रजाभ्युदयं अधिगन्तुमर्हेयुरिति त एव प्रति प्रष्टव्याः यतः सजातीयाभ्यां दम्पतीभ्यामेव तत्सजातीयप्रजासम्भूतिसत्त्वनियमात्, तद्यया ब्राह्मण्यांजातो ब्राह्मणो भवति" इति मन्वादिधर्मशास्त्रविधानात् तद्गम्यते, अन्यथा विजातीयप्रजायां सङ्करजातित्वाभ्युपगमाच्च, निषाद-पारशवादिसञ्ज्ञया तेषां द्विजातिभ्यः चातुर्वर्ण्याच्च पृथक्त्वेन निर्देशात्।

तदेतद् याज्ञवल्क्यस्य वचनेनैव सिध्यति, तस्यैतत् नाभीष्टमिति, "यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः। नैतन्मम मतं यस्मात् तत्रायं जायते स्वयम्" इति स्पष्टार्थकं वचनम्।

अपि च जातकर्मादिसंस्कारविधायके आश्वलायनादिगृह्यसूत्रेषु "आवृतैव कुमार्याः" इति सूत्रं बहुवारं प्रत्येकस्मिन् सस्कारे प्रयुक्तं दृश्यते, तस्य व्याख्यानम्—तूष्णीं—अमन्त्रकं

तत्संस्कारादिकं कुमार्याः कर्तव्यं भवति इति कृतं विद्यते, तदेतदपि तूष्णीमेताः क्रियाः स्त्रीणाम्" इत्यनेन समानम् ।

तत्र कुमारीणां जातकर्मादिसंस्कारे एवम् अमन्त्रकत्व विधानात् उपनयनेऽपितत् समानमेव भवितुमर्हतीति केचिदाहुः, न च एतदपि कल्पयितुं शक्यम् यतः – तत्र जातकर्मादिचौलान्तानां संस्कारकर्मणाम् "आवृतैव कुमार्याः । इति प्रत्येकशः अनुवदन् उपनयने विवाहादौ च नानु ब्रवीति तद्वचनम्, तेनापि एतद्गम्यते—उपनयने अमन्त्रकत्वविधानं काश्वलायनस्य नाभिमत मेवेति,

अथ पुनः यदि उच्येत—पूर्वोक्तस्यैव आवृतैव कुमार्याः इति सूत्रस्य अनुवृत्या उपनयनस्यापि अमन्त्रकत्वविधिरागच्छतीति, तर्हि उत्तरत्रापि विवाहादिषु तदेवानुवृत्तं सत् अमन्त्रक एव सः विवाह विधिरपि स्यात्, तच्च याज्ञवल्क्यवचनेन विरुद्धं भवेत्, "विवाहस्तु समन्त्रकः" इति तस्य स्पष्टार्थकत्वात्, तथा सम्प्रति प्रचलिते विवाहे समन्त्रके तु तद्वचनं निरर्थकमेव भवेत् इति न पुनर्व्यक्तव्यम् ।

वस्तुतस्तु—तत्र विवाह समये सद्योवधूत्वसिध्यर्थं स्त्रीसंस्कारः इति कश्चित् संस्कारः अनुष्ठीयते, कर्मकाण्डीयैर्वैदिकैः पुरोहितैः, तत्रापि अतीतजातकर्मादि लोपप्रायचित्तपूर्वकं कृच्छ्रादिमुखेन एकतन्त्रेण तान् सर्वानपि संस्कारान् संसिद्धान् सम्भावयन्ति, तदानीमेव उपनयन संस्कारोऽपि अमन्त्रक एव निर्वर्त्यते, केचित्तु-मन्त्रपठनमात्रेण तदुपनयनं निर्वर्तयन्ति, तत्रापि क्वचित् बटूनामिवैव कच्छ-कटिसूत्र-कण्ठ सूत्रादिकमपि कुमारीणां सद्योवधूनां धारयन्ति, स्वस्व कुलाचार-देशाचारादि विशेषानुसारेण, तत्र–"जाति धर्मान् जनपदधर्मांश्चतान् विवाहे प्रतीयात्" इति आश्वलायनोक्तं गृह्यसूत्रं सङ्गच्छते, सच संस्कारः उपनयनस्थानीय एव भवितुमर्हति ।

"वैवाहिकोविधि स्त्रीणामौपनायनिकः स्मृतः" इति मनुवचनमपि तदेतदेव समर्थयतीति प्रतीयते ।

तत्र सः उपनयन संस्कारोऽपि विवाहे एवान्तर्भवतीति केचिद् वदन्ति, तेनैव उपनयनस्यापि समृद्धिं भावयन्ति, न तु उपनयनाभावं विहितं मन्यन्ते, तदेत देव किञ्चित् समाधान कारणम् । वस्तुतस्तु—तस्मिन् स्त्री संस्कारे उपनयनानुष्ठानमेव युक्ततरमिति प्रतिज्ञायते ।

यथा चौलसंस्कारे कुमाराणां केशकर्तनं क्वचित् मुण्डनमपि शास्त्रविहितम्, "चूडाकार्या यथाकुलम्" इति तदनुस्मरणम्, "यत्रबाणाः सम्पतन्ति कुमारा विशिखा इव" इति च तदनुश्रुतिः, तद्वदेव कुमारीणामपि तत्समानमेव शास्त्रे विहितमपि केचित् न कुर्वन्ति, कन्यानां तेन अश्लीलादि भावनया क्वचित् कुरूपादि दर्शनासम्मतया च, तथाऽपि तूष्णीं अमन्त्रकं मन्त्रपठनादिमात्रेण वा तत्सिद्धिं भावयन्ति, कर्मकाण्डीयानां विदुषां पुरोहितादीनां मार्गदर्शनानुसारेण तदनुष्ठानेन इति विशेषः ।

तस्मात् सर्वात्मना स्त्रीणां उपनयन संस्कारनिषेधः शास्त्रोपदिष्ट इति नैव सिध्यति, यथा कथञ्चित् तत्संस्कारसिद्धि भावनायोगात्, "अकरणादपि मन्दकरणं श्रेयः" इति न्यायात् तथाऽपि तस्मिन् स्त्री संस्कारे विवाहे वा तदुपनयनस्थानीये सद्योवधूभ्यः गायत्रीमन्त्रोपदेशोन क्रियते नापिवेदाध्ययनादिकं कारयन्ति ।

वस्तुतस्तु—"अष्टवर्षा भवेत् कन्या" इति वचनेन तस्याः अष्टवर्षायाः विवाहोऽपि उपनयनस्थानीय एव भवति, "अष्ट वर्षं ब्राह्मणमुपनयीत" इति अष्टमे वर्षे बटूनां तद्विधानात्, तेन तत्समानमेव स्त्रीणामपि भवितुमर्हति ।

तासामपि अष्टमे वर्षे उपनयनेन तथा उपनयन स्थानीयेन स्त्री संस्कारेण वा सद्योवधूत्व सिध्या तद्विवाहकरणं पूर्वाचारपरम्पराप्ताप्तम्, न तु पुनः अष्टमे वर्षे विवाहविधिः शास्त्रादेशात् प्राप्तः, किन्तु उपनयन स्थानीयत्वे नैव विवाहोऽपि प्राप्यते, तथाऽनुष्ठीयते च सद्योवधूत्वसिद्धि योगेनेति तत् समुन्नीयते ।

अपि च उपनयने बटूनां यत् खलु मौञ्जीबन्धनं विहितम् दीक्षाव्रतवन्धादि स्थानीयं कटिसूत्रादिकं च तदपि स्त्रीणां अपि विद्यते इति अनुमीयते, तासां उत्तरत्र दर्शादीष्टि समये योक्तृबन्धनेन तत् समानमिति च गम्यते ।

तथा यज्ञोपतीतमपि तासां मङ्गलसूत्रात् पृथग् भूतेन तदानीमेव सन्धृतेन कण्ठसूत्रेण प्रतीयते, तस्मिन् विषये ततोऽपिमहत् प्रमाणान्तरं भवति, तथाहि अपुत्रिकायाः विधवायाः हस्तेन पत्युः श्राद्धादिकरणे तस्याः अपि एकं वस्त्रनिर्मितं पाथेयं उत्तरीयवद् धारयन्ति, तच्च तिलतर्पणे पिण्डप्रदानादि समये च सव्यापसव्यादि क्रियायां विनियुज्यते, पुरुषाणां यज्ञोपवीतमिवैवेति कर्मकाण्डिनां पुरोहितानां विदितमेवैतत् तथा तत्तदनुष्ठाने इदानीमपि प्रत्यक्षं प्रचलति इति च, तत् पाथेयवस्त्रं तु वस्तुतः यज्ञोपवीतस्थानीयमेवभवितुमर्हति, केवलस्य-वस्त्रस्य तु कण्ठे सन्धृतस्य सव्यापसव्यकरणे विनियोगासम्भवात्, अनौचित्याच्च, ततोऽपि अन्यस्तिकिञ्चित्—तादृशं पाथेयवस्त्रं कण्ठे तद् वस्त्रं संस्थाप्य तस्य सव्यापसव्यकरणार्थं विनियोगोऽपि क्वचिद् दृश्यते, महाराष्ट्रादि प्रदेशान्तरेषु, तदेतदपि तासां यज्ञोपवीत सत्त्वस्यैव बोधकं लिङ्गं भवति ।

तासां पत्युः मरणानन्तरं केशवपनादिनां कण्ठ सूत्रस्य तथा मङ्गलसूत्रस्यापि परित्यागेन कङ्कणादि विसर्जनेन माङ्गल्यस्य च कुङ्कुमादेः परिमार्जनेन सन्यासिवदेव संवृत्तानां तासां पुनः पाथेववस्त्रबन्धनेन श्राद्धानुष्ठापनेन च गम्यते पूर्वाश्रमे अर्थात् गार्हस्थ्ये तासां यज्ञोपवीतादिकं धारयितुं आसीत् सत्त्वमिति ।

अपि च आत्यन्तिकमेकं प्रमाणान्तरमप्यस्ति तासां वैदिकसंस्कारसत्त्वे समानम्, यत् स्त्रीणामपि अन्त्येष्टि विधानम्, तदपि वैदिक मन्त्रमुखेनैव, तच्च विधवाया अपि समानतन्त्रेणैव भवति, सम्प्रत्यपि तत् प्रचलति, इति प्रत्यक्षसिद्धमेवैतत्, "असौस्वर्गायलोकाय स्वाहा" इत्यादिभि मन्त्रैः ।

तस्याः शरीरस्य हवनेन यज्ञ भावनाऽपि शास्त्रविहितैव, नात्र पुरुषाणां अन्त्येष्ट्या समानैव भवितुमर्हति, तत्र तस्मिन् अन्त्येष्टियज्ञे यस्याः शरीरस्य हवने निर्जीवशवस्य दहने ये वेदमन्त्राः प्रयुज्यन्ते यज्ञत्वसिध्यर्थम्, तेषामेव वेदमन्त्राणां श्रवणे उच्चारणे जीवन्त्यास्तस्याः नास्ति अधिकारः इति शोचनीयमेवैतत् इत्यपिचिरं चिन्तनीयतया नित्यमापतितमेव, तदेतत् सर्वमपि स्वीयं दौर्भाग्यं स्वकीयानां दौर्बल्यं दौर्मनस्यं च याथार्थ्येन समर्थयितुमपि मम किञ्चत् लज्जास्पदमेव, किञ्चिद् भीतिप्रदं च, यतः एतदनुश्रुत्य लोकाः समुद्विजेरन् इति, केचित्खिद्येयुः केचित् कुप्येयुरितिच बहुविधेन भावेन, वेदतदपि आस्तां तावत् एवं सत्यपि विदितैरपि याथार्थ्ये

न तस्मिन् विषयेविदुषां लोकैषिणामपि तत्रभूयोऽपिवृथैवाभिमानो जागर्ति, तेन इदानीमपि इतः परमपि तासामुपनयनादिकं नाङ्गीकुर्वन्ति, नापिकर्तुंकारयितुं च प्रवर्तन्ते, नापि तासां वैदिक विद्यायां प्रवृत्ति समुन्नतिं च कामयन्ते, नानुमन्वते, पुरुषैरेवतत्पुत्रैः स्वस्वमातॄणां स्त्रीणां पुत्राणां स्वसॄणां च शूद्रपङ्क्तौ समावेशः क्रियते, एवावत् पर्यन्तं ता एताः शूद्रवदेव भाविताः यासां द्वारैव पुनः असंस्कृतानां शूद्रिणीनामिव संवृतानां अज्ञानां अबलानां दुर्बलेभ्योदेहेभ्यः दुर्दैवापहृतेभ्यो हृदयेभ्यश्च विद्यादिविरहरुक्षेभ्यः सुवीर्याणां विदुषां स्वतन्त्रहृदयानां च पुत्र-पौत्रादीनां उदयं तथा तेषामुत्तरत्र बहुधाऽभ्युदयं कथमिव कामयन्ते जनाः, कथं वा तत् पुनः प्राप्तुं शक्नुयुरिति चिन्त्यमेवैतत् मनोरथमात्रमिति। अपि च अस्माकं भारतीयानां सा आर्षेयी-वैदिकी संस्कृतिः बीजक्षेत्रादि परम्परा धारया काचिद्दिव्या भव्यामहती इति च महतागौरवेण मन्यमानाः सभायां व्याख्यामः तद्गाम्भीर्यं महत्त्वं च वर्णयामः वचनमात्रेण, तदवीजानु रूपं फलमुत्पद्यमानमपि क्षेत्रानुगुण्यमूलमेव भवितुमर्हतीति सर्वेषामपि प्रत्यक्ष सिद्धमेव,

तस्मादेव कृषीवलाः बीजावापार्थं प्रथमतः क्षेत्रमेव संशोधयन्ति, संस्कुर्वन्ति च गोमूत्र-गोमयादिना पवित्रेण द्रव्यविशेषेण प्रक्रियादिना च, तस्मिन् संस्कृते पवित्रे क्षेत्रे समुप्तंबीजं महते भूयसे फलोदयाय कल्पत इति मन्यन्ते, तथा पुनरनुभवन्ति च तत्फलं पूर्णम्, तद्वदेव धर्म-प्रजोदयार्थं तेषां ब्राह्मीशरीरसम्पत्यर्थं च गर्भत एव वैदिकाः लौकिकाश्च संस्काराः शास्त्र-विहिताः प्रसिद्धाः,

"गार्भैर्होमैर्जातकर्म चौलमौञ्जीनिबन्धनैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥"

इति॥ (मनु० स्मृ० २, )

तदेवं श्लोकादिश्रवणमात्रेण सन्तुष्टा विद्वांसोऽपि न प्रवर्तन्ते कार्यमुखेन तदनुष्ठातुम्, नाप्यविलषन्तीति च विषादास्पदमेव, तत्र कस्मात्कारणात् एकस्मात् संस्कारात् प्रधानात् उपनयनादेव सत्क्षेत्रभूताः सर्वा अपि स्त्रियो वञ्चिताः असत्कृताः असद्भाविताश्च, अतएव तासां एतासां असंस्कृतानां अवैदिकसत्त्वयुक्तानां स्त्रीणां शरीरेभ्यः समुद्भूताः सर्वेऽपि वयं तत्तदनुरूपाः तदनुगुणा एव भवामः, तदेतत् सत्यमेवोक्तम्—

"जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते" इति,

ततश्च उत्तरत्र जातकर्म संस्कारैः उपनयनादिभिश्च पुनः-द्विजत्वसिध्या दिव्यभावोदयं मन्यन्ते "तदेतत् सार्वजनीनमिति प्रतीयते सामान्यतोनिर्दिष्टत्वात्, तेन स्त्रीणामपि तत् समान-मेवेति गम्यते, केचित्तु-एतदाक्षेप विषयस्यनिरवकाशत्व साधनार्थं "जन्मना जायते शूद्रः" इति वचनमेव धर्मशास्त्रे न विद्यते इति वदन्ति, तथाऽस्तु का हानिः, न तावताकाचितापत्तिः, तद्वचनाभावेऽपि तद्विषयस्य तु अस्तित्वं यथार्थत्व च कथं केन वा वारयितुं शक्यम्, तस्यवस्तु-सिद्धत्वात्, तत्तुजातमात्रस्य सर्वस्यापि समानमेव असंस्कृतत्व स्वरूपम्, अद्विजत्वम्, वैदिक-संस्कारकरणे द्विजत्वसिध्यसम्भवात् तासां द्विजेन सह विवाहयोग्यताऽपि न सम्पद्यते, इति वस्तुसिद्धमेवैतत्, अपि च यत्र कन्यानां वैदिकसंस्काररहितानां द्विजत्वाभावात् तत्संस्कार विना तासां विवाहानर्हता शास्त्रदृशा विहिता, तथा उत्तरत्रापि तासां वैदिकयज्ञादि धर्मे धर्म-प्रजादिसिद्धये अयोग्यताऽपि स्वतः सिद्धैव, अतः ब्राह्मीविवाहादिनातद्योग्यता सम्पादनीयेति सिध्यति, येन सा तत्सन्तानानां ब्राह्मीशरीरोदये कारणीभूता, क्षेत्र संस्कृतिरूपा, तद्वीजादि-

पवित्रीकरणसमर्था, सुवीर्यत्वादि सत्त्वसम्पादनार्था च भवेदिति, तदेतदुक्तम्—"ब्राह्मीयं क्रियते तनुः" इति,

तस्मात् तदेतत्सर्वदोषादिनिवृत्तिद्वारा द्विजत्वादियोग सत्त्वसिध्यर्थं मातृवर्गाणामपि उपनयादि संस्कारपूर्वकं वैदिकविद्यायाः अवलम्बनं यज्ञादिसत्क्रियाश्रयणं सद्धर्माचरणमेव सर्वथा-शरणमिति निर्णीयते ।

अत्र दिव्यसत्त्वपूर्णा परमपवित्रा सर्वतन्त्रस्वतन्त्रा गायत्रीमन्त्रात्मिकैव सर्ववैदिक संस्कृति मूलमात्रा सर्वार्थसिद्धये प्रभवतीतिवेदोपनिषदादि सर्वशास्त्रसिद्धान्तः ।

तत्रापि सद्योवधूत्व सम्पत्तये उपनयन संस्कारपूर्वकं विवाहादनन्तरं वेद विद्यादिज्ञान सङ्ग्रहणार्थं प्रयतितव्यम्, अथवा ब्रह्मवादिनीत्वयोगेन उपनयनादनन्तरं वेदविद्यादि समाप्त्या विवाहेन गार्हस्थ्याश्रयणेन सर्वं अभीष्टार्थं साधयेदिति विवेकः ।

तस्मादिह भारतीय संस्कृतौ सर्वस्मात् प्रधाना गायत्रीमन्त्रमुखेन वैदिकी संस्कृतिः उपनयनादिरूपैव मूलभूतेति सम्पद्यते ।

तस्मिन्नेव विनष्टे प्रधानसंस्कारे सा दिव्या सूक्ष्मतमा वैदिकी आर्षेयी संस्कृतिः कथञ्चि-दपि नैव स्थातुं शक्नोति, इति प्रतिज्ञायते, "छिन्ने मूले नैव पत्रं न शाखाः" इति वदेवेति गम्यते ।

तस्मात् सोऽयं गायत्री मन्त्र एवास्माकं सर्वेषामपि कल्याणाय समुद्धरणाय श्रेयः समृद्धिफलाय निःश्रेयसाय च हेतुभूतः मूलाधरभूत इति च सर्वं सम्पद्यतेतराम् ।

।। इत्येषा षष्ठीकला सम्पूर्णा ।।



॥ श्री दैवरात-ऋषिकुल-योगाश्रमः गोकर्ण ॥

## वेदार्थ-कल्पलता

### प्रथमा प्रार्थना

"सर्वेषां श्रुतमस्तु तत्र भवताम्" ! नम्रं समभ्यर्थनं ।
प्राज्ञानां परितोषदं श्रुतिमतां भूयः प्रसादार्जनम् ॥
वेदार्थैकसमर्थनं समदृशां तत् स्वानुभावार्थदं ।
सद्विद्याभ्यसनाश्रयार्थगुणदं विद्यार्थिनामर्थदम् ॥ १ ॥

काव्यं संस्कृतभाषया विरचितं छन्दःसुबन्धाञ्चितं ।
सद्वेदोपनिषद्रहस्यनिचृतं तत्त्वार्थचिन्तान्वितम् ॥
दिव्यं वेदचतुष्टयस्तनमुखाद् वाक्कामधेनूधसः ।
दुग्धं कल्पलतासुधारसमयं सद्भावतः सेव्यताम् ॥ २ ॥

काव्येऽस्मिन् न तु विद्यते रसिकता नैवेतिहासादिकं ।
नो साहित्यकलाकलापललितं नो शब्दचित्रादिकम् ॥
नो शृङ्गाररसादिसत्त्वकलितं नाल्हादकं रोचकं ।
नाप्यादर्शविशिष्टलोकविषयं नैतन्मनोरञ्जकम् ॥ ३ ॥

नास्मिन् वादविवादवस्तुविषयैर्नोखण्डनं मण्डनं ।
नो शास्त्रार्थविशिष्टवाक्चतुरता नो शाब्दबोधादिकम् ॥
नो चर्चादिविरोधहृद्विकलितं नोद्वेग-विद्वेषदं ।
नैतच्चित्रविचित्रभावललितं तत्त्वार्थकं केवलम् ॥ ४ ॥

तत्त्वार्थादिविमर्शने सुविशदं योगादिविद्योदये ।
स्वाभ्यासादिकमार्गदर्शनपदं वेदप्रमाणाश्रये ॥
प्रत्नार्षेयपदार्थसत्त्ववचने स्पष्टार्थबोधोचिता ।
प्रायः स्यात् पुनरुक्तिरत्र बहुधा सद्भावतो गृह्यताम् ॥ ५ ॥

लोकेऽस्मिन् पुनरप्रसिद्धविषयो वेदप्रमाणोद्धृतः ।
प्रायो नूत्न इवार्थतत्त्वनिचयो भासेत सामान्यतः ॥
प्राचीनं परमर्षिसम्मतमिदं सद्वेदगर्भार्थकं ।
भूयस्तत्त्वदृशा विशुद्धमनसा सम्बुध्यतां सन्दृशा ॥ ६ ॥

नास्त्येवात्र मतान्तरेण कलहो द्वेषादिकोलाहलः ।
नो व्यक्तेर्न च साम्प्रदायिकमतेर्नैवान्यनिन्दास्तुतिः ॥
न्याय्यात् केवलवाक्छलादिविरहान्नोपक्षपाताश्रयाद् ।
वेदार्थस्य समर्थनं सममतेर्वस्तुस्थितेराश्रयात् ॥ ७ ॥

स्वाध्यायाध्ययनादिदीर्घतपसा धीयोगतः सन्दृशा ।
गायत्र्याः सवितुः सतो भगवतः सेन्द्रप्रसादाशिषा ॥
वाग् वेदार्थदकामधेनुरुदिता सद्भावतस्तर्पिता ।
सेव्या कल्पलता सुधास्वरसदा स्याद् दैवरातार्पिता ॥ ८ ॥

सद्गुरुप्रसादपूर्णपद्मपुष्पमालिका ।
सर्ववित्सुधाप्रपूर्णसंविदात्ममौलिका ॥
दैवतेन्द्रसार्वभौमवेदचन्द्रिकालिका ।
दैवरातहृत्प्रफुल्लवाक्प्रसूनमल्लिका ॥ ९ ॥

---

॥ श्री ब्रह्मणस्पतये नमः ॥

## ॥ श्रद्धाञ्जलिः ॥

### ॥ ॐ भद्रं नो अपि वातय मनः ॥

"गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन् ऊतिभिः सीद सादनम् ॥
"श्री ब्रह्मणस्पतिचिदात्मकलाविभूते हे ब्रह्मचोदनि विदात्मकविश्वमूर्ते ।
वागात्मसत्त्वसमभूतिसुपूर्णशक्ते वाग्ब्रह्मणे भवतु वाक्पतये नमस्ते ॥ ९ ॥

वाग्देवते सकलवाचकशक्तिमूर्ते वाच्यार्थवस्तुविततोर्जितविश्वकीर्ते ।
सञ्ज्ञानपूर्णपुरुषे विरते समस्ते सञ्ज्ञात्मशक्तिगुणसत्प्रकृते नमस्ते ॥१०॥

वेदात्मिके परमपूरुषवाक्प्रपूर्णे वेद्यात्मना सभरसात्मकलाभ्युदीर्णे ।
मातः प्रसीद परमं भगवत्प्रसादं सद्यः प्रसाधय निजं मम सम्प्रसादम् ॥११॥

वाचे त्वमेव परिबोधय मे स्वरूपं गीतं त्वया परमपूरुषहृद्ब्रसाप्तम् ।
पीतं रसायनमपि प्रतिगाय हृद्यं तत्त्वं वदाशु सकलात्महितं सुवेद्यम् ॥१२॥

संवित्स्वरूपिणि परमेश्वरि वाक्समर्थे या वै महर्षिहृदये यदलं चकर्थ ।
सा त्वं ममापि हृदये स्फुरदात्मसत्त्वं सत्येन वस्तु परमं तदलङ्कुरु स्वम् ।।१३।।

सब्रह्मसत्त्वकलया परया सुपूर्णा संविन्मयी परमसत्त्वगुणाभ्युदीर्णा ।
छन्दस्वती सरस-सस्वरमन्त्रवर्णा छन्दोमुखाज्जगति वर्षतु वाग् विकीर्णा ।।१४।।

सेवापरायणतया परदेवतायास्तत्त्वप्रकाशनकृते विधृतप्रयत्नः ।
अज्ञोऽहमल्प-जड-मन्दमतेरशक्त्यां शक्तो विनैव भगवत्कृपया कथं स्याम् ।।१५।।

शब्दस्वरूगुणबोधकशास्त्रमाद्यं शब्दार्थतत्त्वगमकं नय-मान-वेद्यम् ।
नाहं सुवेद्मि भगवन् सुविधां सुविद्यां नम्रोऽस्म्यनन्यशरणो भगवत्कृपेच्छुः ।।१६।।

ज्योतिःपरेण तपसा परवेदतत्त्वं सम्बोधयेतिवचसाऽप्यनुवेदयेति ।
प्राणेन युक्तमनसा वचनेन कृत्या प्रज्ञानपूर्णपुरुषं शरणं प्रपद्ये ।।१७।।

तत्त्वं स्वयं भगवतैव यथा प्रदृष्टं वाचा स्ववेदपरयाऽत्र यथोपदिष्टम् ।
तत्त्वेन भाषितुमयं च यथानियुक्तः त्वत्प्रेरणादनुवदामि तथाऽनुषक्तः ।।१८।।

पूर्णात्मबोधमहिमन् भगवन् परात्मन् ज्ञानाञ्जनाप्तकरुणार्द्रशलाकयाऽऽत्मन् ।
उन्मीलयाशु मम चक्षुरिदं प्रसादाद् उन्मादनादिरहितं कुरु दिव्ययोगात् ।।१९।।

सेवाविनिर्वहणकर्मणि नित्ययुक्तः धन्यो भवेयमचिरेण कृतात्मकृत्यः ।
श्रद्धापयाशुकरणे कृतकृत्यातायै शक्तिं प्रदेहि भगवन् भुवि सत्यतायै ।।२०।।

शान्त्या हृदा परमसत्त्वरसेन पूर्णा शक्त्या विदा सकलमूर्धनि राजमाना ।
नीत्या स्ववेदरसमात्मनि संविदाना कान्त्या मुदा लसतु कल्पलताऽभ्युदीर्णा ।।२१।।

श्रद्धाञ्जलेर्गणपतिः स्वरसात् प्रसन्नः श्रद्धापयेदभयदानवरप्रसादात् ।
वेदार्थतत्त्वविशदीकरणाय सोऽनु-गृण्हातु वेदनिरतं हृदि"दैवरातम्" ।।२२।।

"ब्रह्मणस्पतिप्रसादवेदमन्त्रमूलिका ब्रह्मतत्त्ववित्प्रधानमात्रकाऽऽत्ममौलिका ।
दैवतात्मसत्त्वपूर्णवेदचन्द्रिकालिका "दैवरातवाक्सुधा"विराजतां सुमल्लिका ।।

।। ईं ॐ श्रीः ।।

"ईंॐश्रीः"परमं त्रितारवचनं पूर्णं त्रितत्त्वाननं ।
श्रेयःशक्तिपदं प्रशान्तिसदनं निःश्रेयसैकायनम् ।।
दिव्ये मूर्धनि"दैवरातविधृतं"विश्वाधिविद्यास्पदं ।
"वेदात्मध्वजरूपकं"विजयते दिव्यं त्रिशक्तिप्रवम् ।।२३।।

"ॐ" (१)

"ओङ्कारो"ऽखिलवेदबीजकपरं ब्रह्मैतदेकाक्षरं ।
सन्मात्रात्रयसत्त्वयौगिकपरं ब्रह्मात्मनो वाचकम् ॥
छन्दोवाङ्मुखतः प्रणौति मनसा ब्रह्मैव सत्याक्षरं ।
व्यक्तोऽयं प्रणवः प्रसीदति यजुश्छन्दः सुमन्त्राक्षरम् ॥२४॥

"तारः प्रणवः"

तारोऽयं प्रणवः श्रुतस्त्रिजगतां सन्त्राणनात् तारणात् ।
ताराय प्रभवे नमो भगवते भद्राय भर्गात्मने ॥
तारा सा प्रणवात्मिका भगवती सर्वस्वसन्तारिणी ।
तारायै परबीजमन्त्रतनवे वाग्देवतायै नमः ॥२५॥

"ई" (२)

"ईङ्कारः परमात्मचित्स्वरपरः सत्सामरस्याक्षरः ।
सेन्द्रात्मानुनिनादतोऽनुकरणात् पूर्णात्महृत्सुस्वरः ॥
मात्राभिस्तिसृभिः समाभिरुदगात् पूर्णेन्दुबिन्दूत्तराद् ।
"ईङ्काराय" परात्मने रसकृते "स्वाहा"नमस्तेऽर्पितम् ॥२६॥

"ईम्" इत्येवमनूदितं जगदिदं प्रत्यक्षसिद्धं समं ।
पूर्णं तत् परमाधिदैवतपरं नित्यं परोक्षात्मकम् ॥
अध्यात्मं स्वचितोऽपरोक्षमुचितं सञ्चेतनैकात्मकं ।
सामस्त्यात् प्रतिबोधकं सममियात् तत्रैक "मीङ्कारकम्" ॥२७॥

गुप्तोऽयं प्रणवः स वेदहृदयाच्छन्नोरहस्यार्थकः ।
गुह्यं नाम सुभद्रदं भगवतो वाग्ब्रह्मणः सत्पतेः ॥
छन्दोदर्शनतः प्रदर्शितमिदं गुह्यार्थसन्दर्शकं ।
विश्वस्य प्रतिबोधकं श्रुतिविदां "ज्योतिःपरं दर्शयत्" ॥२८॥

"श्रीः" (३)

"श्रीः"सम्पत् परमाऽऽश्रुता भगवतः शक्तिः समस्ताश्रया ।
सा शक्तिप्रणवाक्षराऽऽत्मरसदा सर्वैः समाश्रीयते ॥
तन्त्रे "श्रीम्"इति बीजमन्त्रकमिदं प्रत्येति देवीं श्रियं ।
श्रीविद्याऽऽश्रयते त्रितारमुखगा प्रत्याययत्याश्रितान् ॥२९॥

"श्रीश्चते लक्ष्मीश्च पत्न्यौ"

द्वे शक्ती पुरुषे चिदात्मनि रते ये"श्रीश्च लक्ष्मीश्च" ते ।
सिद्धे ब्रह्मणि दक्ष-वामनयने तस्यार्धयोः पार्श्वयोः ॥
मध्यस्थे प्रणवात्मके स्वपुरुषे ज्ञानप्रधानार्थके ।
मेध्येच्छा-कृतिशक्तिके सुलसिते पूर्णे समस्तात्मके ॥३०॥

इच्छाशक्तिममूं च वामनयने लीनां "विराण्नामिकां ।
लक्ष्मीं चन्द्रकलात्मिकां प्रतिविदुस्तां "पद्मिनीमोमिति" ।।
दक्षे चाक्षिणि दक्षिणाकृतिपरां सूर्यां श्रुतां तां श्रियं ।
ते स्थानादिकभेदतोऽपि भवतो व्यत्यासतो नामतः ।।३१।।

ऋङमन्त्रेषु तदोमिति प्रतिनुतं सद्वस्तुगुप्तार्थकं ।
साम्नोद्गीथगुणात् तदोमितिपदं शेषार्थका श्रीर्यजुः ।।
एवं तत् प्रणवाक्षरत्रयमिदं तत्त्वैस्त्रयीसत्त्वकं ।
विश्वस्मिन्निह सर्वदा विजयतां"वेदात्मविद्याध्वजे" ।।३२।।

"ओमितिस्वराक्षरात्मकं परात्मवाचकं ।
श्रीरितिश्रियां पदं सतां समाश्रयात्मकम् ।।
ईमितिस्वसामरस्य योगबीजमन्त्रकं ।
शं तनोतु"दैवरातहृद्यवेदबीजकम् ।।३३।।

---

ई ॐ श्रीः

ॐ भूर्भुवः स्वः

तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि
धियो यो नः प्रचोदयात्

देवरातः गोकर्ण

## वेदार्थकल्पलता

### वाक्सुधा

### प्रथमा कला (१)

#### ब्रह्मगायत्री

"गायत्री"परमात्मात्मवेदवदना ब्रह्मात्मिका वाक् परा ।
मन्त्रस्"तत्सवितुर्वरेण्यम्"इतिऋग्ब्रह्मोपदेशाक्षरा ॥
यज्ञार्थाच्च यजुश्चतुष्टयमुखाद्"ओं भूर्भुवः स्वः"पराः ।
साक्षाद्ब्रह्मपराः परात्ममहिमा पूर्णाः पराथोत्तराः ॥१॥

गायत्री परसत्यमन्त्रवदना चिज्ज्यौतिषेन्द्रानना ।
गायन्ती परवस्तुसत्यवचना साऽन्वेति सत्यात्मना ॥
ज्ञानेच्छाकृतिसत्त्वपूर्णनयना साऽग्नीन्दुसूर्येक्षणा ।
पूर्णब्रह्मपरायणा विजयते वाग्ब्रह्मणा साक्षिणा ॥ २ ॥

ॐ

"ओङ्कारो"ऽखिलवेदमूलकमजं बीजं तदेकाक्षरं ।
व्योमन्यन्तरितादखण्डनिनदादाविर्बभूवोत्तरम् ॥
तन्नादानुकृतेः परात्मरसतश्छन्दः स्वरेणाप्लुतं ।
मन्त्राख्यं प्रणवाक्षरात्मकमिदं सद्ब्रह्मणो वाचकम् ॥ ३ ॥

मात्राभिस्तिसृभिः समस्तमुदगापूर्णैकवर्णात्मकं ।
पूर्णं बिन्दुपरं तुरीयमपदं विद्यादमात्रात्मकम् ॥
तद्वेदत्रयसारभूतरसदं विश्वाधिविद्यास्पदं ।
सद्वेद्यार्थकदिव्यवाग्रसपदं तत्त्वं तदध्यक्षरम् ॥ ४ ॥

अध्यात्मं प्रथमेऽत्र जागृतिपदे वैश्वानरः स्थूलभुक् ।
स्वप्ने तैजस ऐन्द्रसत्त्वमहसा सन्मध्यमः सूक्ष्मभुक् ॥
प्राज्ञस्तत्र सुषुप्तिकेऽन्तरतमः सौर्यः स आनन्दभुक् ।
पूर्णात्मा स तुरीयपादिति समः सर्वात्मना विश्वभुक् ॥ ५ ॥

ओमित्येव हि विश्वरूपकपरं ब्रह्मैव साक्षात् परं ।
सर्वज्ञानगुणप्रकाशनपरं विद्यादनुज्ञाक्षरम् ॥
उद्गीथस्वरसादिसप्तकरणैः सत्सामरस्यान्वयाद् ।
उद्गीतं परशान्ति-शक्तिरसदं स्वानन्दसत्त्वोदयात् ॥६॥

प्रत्यञ्चि प्रणवाक्षरस्वरणतस्तत्संविदालम्बनाद् ।
गायन्तं परमं परात्मपुरुषं सद्ब्रह्मसँल्लक्ष्यतः ॥
अध्यात्मं समभावनाधिकरणं पूर्णानुभावोदये ।
स्वात्मानं स्वरसादनुस्मरणतो ध्यायेत्परं ज्यौतिषम् ॥७॥

प्रत्यक्षं प्रणवाक्षरं धनुरिदं लक्ष्यं परं ब्रह्म सत् ।
सम्प्राप्यं परमाक्षरात्मकचितापूर्णं परोक्षं हि तत् ॥
विध्येदान्तरमप्रमादहृदयो धीयोगतोधारणात् ।
तस्मिन् त्संविलयं विदा सममियात् तादात्म्यतस्तन्मयः ॥८॥

॥ प्रणवस्य—ऋषि-दैवत-छन्दाँसि ॥

पूर्णं ब्रह्मऋषिः श्रुतोऽस्य परमो ब्रह्मैव तद्देवता ।
गायत्री परमेकवर्णतनुभृच्छन्दस्तु देवी यजुः ॥
सायुज्यो विनियोग आत्मनि रतेर्योगेन सद्ब्रह्मणा ।
सोद्गीथात् सदुपासनादिविधितो ध्यानार्थमेवात्मनः ॥९॥

॥ तद्विनियोगविशेषाः ॥

यज्ञादौ प्रजपेऽप्युपासनविधौ ज्ञानादियोगे विदां ।
योगादौ क्वचिदिष्टसाधनकृते तद्वेदमन्त्रादितः ॥
मात्राभिस्तिसृभिः समं चतसृभिः श्रौते क्वचित्तत्वतः ।
शास्त्रेष्टं प्रणवाक्षरानुजपनं नित्यं यतीनां ततः ॥१०॥

॥ भूर्भुवः स्वः तिस्रो महाव्याहृतयः ॥

तिस्रो व्याहृतयोऽपि वाक्प्रकृतयस्ता "भू र्भुवः स्वः" श्रुताः ।
यज्ञादौ विनियोजनाय विहिताः सिद्धाः यजुर्मन्त्रकाः ॥
प्रायश्चित्तिकृतेः कृते बहुमता व्यस्ताः समस्ताश्च ताः ।
संयोज्याः पृथगेव शास्त्रविधिना युक्ताश्च मन्त्रान्तरैः ॥११॥

॥ तासां ऋषि-दैवत-छन्दाँसि ॥

तासामत्र ऋषिः प्रजापतिरसौ स्यात् पारमेष्ठीश्रुतेः ।
मन्त्रार्थाच्च स एव दैवतमपि छन्दो मतं बार्हतम् ॥
व्यस्तानां पृथगग्निवायुरवयस्तेऽग्नीन्द्रसूर्यात्मकाः ।
गायत्र्युष्णिगनुष्टुभश्च विदितं छन्दस्त्रयं तत्क्रमात् ॥१२॥

॥ व्याहृतितत्त्वम् ॥

"भू"र्भूमिर्हि "भुवो"ऽन्तरिक्षमुदितं "स्वर्" द्यौस्तृतीयोत्तमा ।
भूयस्तद् भुवनत्रयं प्रकृतिकं भूतत्रयाधारकम् ॥
भाव्यं तत् प्रतिभूतमात्रकमयं भूतत्रयं तात्त्विकं ।
भक्त्याऽऽधेयतया च भौतिकतया ज्ञेयं तदेकार्थकम् ॥१३॥

स्वस्तेजोवियदुत्तमा समुदगाद् आपोऽन्तरिक्षं भुवः ।
भूरेषाऽन्नयुताऽवमाऽत्रपृथिवी भूतत्रयं भौवनम् ॥
भूताधारपदं परं त्रिभुवनं ज्योतिस्त्रयैकायनं ।
तत्राधेयतया सहैव सगुणं भूतं त्रिलोकायनम् ॥१४॥

तत्त्वादप्यधिदैवतात् त्रिभुवनं ज्योतिस्त्रयाधिष्ठितं ।
भूमावग्निरथान्तरिक्षसदने वायुश्च सूर्यो दिवि ॥
वैशेष्यादिह मध्यमे तु भुवने ज्योतिः परं वैद्युतं ।
रुद्रस्तत्र मरुत्पिता च मरुतां युक्तः स खेन्द्रोऽधिपः ॥१५॥

देवास्ते वसुरुद्रसूर्यपुरुषा लोकत्रयाधीश्वराः ।
यद्वेदत्रयमाधिविद्यमुदितं मन्त्रात्मिका सा त्रयी ॥
भूरग्नेश्च ऋचः समाः समुदिताः वायोर्भुवः स्याद् यजुः ।
स्वः सूर्याद् दिवि साम, ते स्वरयुताः सर्वेऽपि मन्त्रात्मकाः ॥१६॥

अध्यात्मं भुवनत्रयं प्रतिहितं साक्षाच्छरीरत्रयं।
चिद्योगात् करणत्रयं समुदगात् तत् संविदिच्छाक्रियम् ॥
आग्नेयीयमृगेव वाक् समुचिता सौम्यं मनः स्याद्यजुः।
प्राणः साम, रसस्वरादिगुणभाग् ऐन्द्रः स आपोमयः ॥१७॥

एता व्यहृतयस्त्रिवेदमुखगा गायत्रिमन्त्रादितः।
सद्भावात् प्रथमोपदेशकरणे पूर्वर्षिभिः संश्रिताः ॥
प्राणायामकृते जपादिकृतये होमे च यज्ञादिके।
प्रायो व्याहृतिभिः सहैव विहितो गायत्रिमन्त्राश्रयः ॥१८॥

## गायत्र्या विश्वामित्रऋषिः

विश्वामित्रऋषिर्महान् समुदितः सन् गाधिसूनुर्भवान्।
विश्वेषामपि मित्रतां पुनरगाद् राजन्य ऐन्द्रः पुमान् ॥
गायत्रीमृचमाददर्श तपसा सत्संविदा सन्दृशा।
ब्रह्मर्षिः स बभूव दिव्यमहसा गायत्रिमन्त्राशिषा ॥१९॥

प्रादुर्भूतनिजस्वरूपहृदयस्तत्त्वं ददर्शान्तरे।
तन्मन्त्रोदितमात्मनोऽनुभवतो मन्त्रे"ऽग्निरस्मीति"वै ॥
चिद्योगादयमग्निरस्मि तपसा सञ्जातवेदाः स्वयं।
प्रज्ञानादपि तेजसा पुनरगां सद्ब्रह्मविद्वर्चसम् ॥२०॥

## दिव्यः परात्मा विश्वामित्रः

मित्रोऽसौ दिवि तेजसा परितपन् विश्वस्य मित्रं स्वयं।
तस्मादेव स विश्वमित्रमुदगात् प्राणात्मकश्चिन्मयः ॥
ज्योतिष्मानिह विश्वचक्षुरपि सन् मित्रस्वभावाद् भवान्।
विश्वं पश्यति साम्यभावनदृशा सन् विश्वमित्रो महान् ॥२१॥

मन्त्राणामपि दर्शनाद् ऋषिरसौ तद्ब्रह्मवेदात्मनां।
विश्वामित्र इति प्रसिद्धिमुदगाद् ब्रह्मात्मनेन्द्रोऽपि सन् ॥
पूषाख्यः परमः प्रजापतिरसावेकर्षिरज्ञानहृत्।
प्रज्ञानामृतवर्षणाच्छ्रुतिमुखाद् विश्वैककल्याणकृत् ॥२२॥

## सविता देवता

एकः सन् भुवनत्रयेऽपि परितो व्याप्तोऽधितिष्ठत्यसौ।
योऽन्तःस्थावरजङ्गमेषु च चितः सर्वान्तरात्माऽप्ययम् ॥
छन्दःसंहितसत्यमन्त्रतनुभृच्चिज्ज्योतिरात्मोदिता।
गायत्र्याः सवितैव दिव्यमहसा मन्त्रार्थभाग् देवता ॥२३॥

यस्त्रेधाऽऽत्मविभूतिषु प्रतिततः सन् भूत-देवात्मसु ।
व्यस्तोऽप्यत्र समस्त आत्मचितितः सत्सामरस्योदितः ।।
त्रेधाऽऽत्मप्रकृतीष्टशक्तिकचितेर्वाग्देवतैकात्मनो ।
गायत्र्याः परदेवतैव सविता मन्त्रार्थरूपोदिता ।।२४।।

## ।। गायत्रीछन्दः ।।

"छन्दो"मन्त्रनिबन्धनैककरणं छन्दस्वती वाक् परा ।
गायत्रं प्रथमं त्रितत्त्वचरणं वेदत्रयात्मेक्षणम् ।।
गायत्रेण हि मन्त्रसत्त्वमहसा सच्छन्दसा संहिता ।
गायत्री त्रिपदा त्रिशक्तिसहसा ऋग्रूपिकाऽष्टाक्षरा ।।२५।।

छन्दो ब्रह्मरसस्वराक्षरमयं छन्दोमयः पूरुषः ।
छन्दस्वानिह वेद एव भगवान् सन् सत्यमन्त्रात्मकः ।।
सा वाग् ब्रह्म ऋगात्मिका रसमयी माताऽखिलच्छन्दसां ।
गायत्रीह सरस्वती भगवती छन्दोरसात्माऽक्षरा ।।२६।।

यावद् ब्रह्म परं स्थितं समगुणैः पूर्णं तथा निर्गुणं ।
संसिद्धं व्यतिरेकतोऽन्वयमुखात् सर्वस्वभावात् स्वयम् ।।
छन्दःसंहितसत्यमन्त्रवचना पूर्णा समा ब्रह्मणा ।
छन्दःसत्त्वपरात्मना समरसाद् वाक् तावती दक्षिणा ।।२७।।

तस्मादेव परात्मनोऽखिलविदो ब्रह्मात्मनः संविदे ।
तत्त्वोपास्तिकृते प्रकृष्टतपसे सद्ब्रह्मकर्मार्जने ।।
त्रेधा तत्त्वमुखेन सिद्धमहसा गायत्रिवाग् ब्रह्मणा ।
छन्दोमन्त्रमुखेन वेदविहिता ब्रह्मोपदेशेक्षणा ।।२८।।

आपोज्योतिरथो रसोऽमृतमिति ब्रह्मेति च व्याहृतेः ।
ओङ्कारात् पुटितं भुवेदुभयतो गायत्रिशीर्षं यजुः ।।
गायत्र्याः प्रजपान्ततोऽनुवचनं तच्छीर्षमन्त्रस्य वै ।
प्राणायामकृतेरनन्तरमपि स्यात् कुम्भकाद् रेचके ।।२९।।

## गायत्रीशब्दार्थस्वरूपम्

गायत्रीयमनन्तशक्तिकलया ब्रह्मात्मना राजते ।
गायन्तं निजमन्त्रवाग्रसमुखं सत्त्वेन सन्त्रायते ।।
प्राणं प्राणभृतं निजं तनुभृतं जीवं स्वभावात् स्वयं ।
ज्ञानाद् जीवयति प्रसादमहसा सन्तारयेत् सान्वयम् ।।३०।।

गायत्र्याः परमार्थतः स सविता गायत्रिमन्त्रं निजं ।
गायत्यन्तरितं परात्मरसदं साम्नाऽऽत्मना(ऽ)सुस्वरम् ।।
गायन्तं परमं निजं हि पुरुषं स्वच्छन्दसा गोपितं ।
गायत्री स्वयमात्मशान्तिरसदं गोपायति स्वार्पितम् ।।३१।।

गायत्री परमं पदं स्वरसतो गायत्यजस्रं स्वयं ।
गायत्रेण निजेन चित्समरसाच्छन्नं परं छन्दसा ।।
गेयं ब्रह्म समादिशत्यनुपदं धीयोगतो गायनाद् ।
गोप्यं बोधितमात्मनि श्रुतिमतां गम्यं विदा त्रायते ।।३२।।

।। इति प्रथमा कला ।।

सम्पूर्णा

---




द्वितिया कला ( २ )

॥ गायत्रीमन्त्रः ॥

"तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि"
धियो यो नः प्रचोदयात्" ॥
( ऋ० सं० मं० ३, सू० ६२, ऋक् )

पदपाठः

"तत् । सवितुः । वरेण्यं । भर्गः । देवस्य । धीमहि ॥
धियः । यः । नः । प्रऽचोदयात्" ॥

॥ अन्वयः ॥

"यः नः धियः प्रचोवयात्, (तस्य) देवस्य सवितुः तत् वरेण्यं भर्गः धीमहि" ॥

## ॥ मन्त्रार्थकल्पलता ॥

### ॥ अन्वयानुसारेण प्रत्येकशः शब्दार्थः ॥

#### "यः" ( १ )

"यः" साक्षादिह भौतिके सुविततः सन् विश्वरूपात्मकः
पारोक्ष्यात् परमः प्रचेतनपरो "य"श्चाधिदैवेऽन्ततः ॥
अध्यात्मं च सचेतनोऽन्तरुदगाद् "य"श्चापरोक्षादयं
त्रेधाऽऽस्माऽपि समास्थितः समरसादेकात्मसत्त्वान्वयात् ॥१॥

#### "नः" (२) ( अस्माकं-अस्मान्-अस्मभ्यम् )

"यो"ऽस्माकं हि धियः समीरयति नो येषां बहिश्चान्तरे
यो"ऽस्मान्"अन्तरुदीरयत्यनुपदं योऽ"स्मभ्यम्"इष्टः परः ॥
सर्वे तेऽत्र सचेतनास्तनुभृतस्तस्यैव योगाद् वयं
"जीवाज्योतिरशीमहि" प्रतिधिया यो"नः"परात्मा स्वयम् ॥२॥

#### "नः" (अस्मान्-अस्मभ्यम्)

यान्"अस्मान्"प्रतिता धियो निजचिता प्रत्यङ्मुखाः प्रेरयेत्
भूयस्ताश्च धियः प्रतिप्रतिमुखान्"अस्मान्"पराग् दृष्टितः ॥
यो"ऽस्मभ्यं" च कृते निजाः समधियः कुर्यात् स्वसत्त्वान्वयात्
तं ध्यायेमहि धीभिरेव सुहृदं ज्ञानादनुग्राहकम् ॥३॥

#### "धियः" (३)

"धीयन्ते"ऽत्र चिदात्मनाऽन्तरखिलैर्याश्चेतना वृत्तयः
सत्संविद्ग्रहणाय बाह्यविषयैस्त्यागाय योगाय वै ॥
ज्ञानेच्छाकृतिशक्तिचित्प्रकृतयः स्वान्त"धियः"चेतनं
स्वात्मानं"दधते" समस्तरसदं सत्यं निजं साक्षिणम् ॥४॥

#### ॥ धियः इन्द्रात्मलिङ्गात्मिकाः ॥

इन्द्रस्यात्मन एव ता हृदि "धियो"लिङ्गात्मिका बोधकाः
इन्द्रेऽन्तःकरणात्मिकाः प्रतिहिताः सर्वार्थसंसाधकाः ॥
बाह्यान्तर्यसमस्तवस्तुविषये साक्षात् प्रमाणात्मिकाः
प्राज्ञात्मन्युपसंश्रिताः समधियो ज्ञानादिसंग्राहकाः ॥५॥

#### ॥ प्रचोदयात् ॥ (४)

अस्माकं हि धियः "प्रचोदयति"यो बाह्ये सदर्थे सदा
भूयोऽस्मादसतो "निवर्तयति"वै प्रत्यङ्मुखाः प्रेरयन् ॥
प्रत्यञ्चात्मनि वा परे स्वपुरुषे चित्त्या प्रतिष्ठापयेत्
संविद्-भावन-कर्मसु प्रतिपदं तस्यैव चित्प्रेरणम् ॥६॥

॥ देवस्य ॥ (५)

"देवो"द्योतयतीह नित्यमखिलं स्वज्योतिषा द्योतते
सर्वेषां हृदयेऽन्तरे दिवि बहिर्व्याप्तः स दिव्यात्मना ॥
अज्ञानं च तमो निवारयति यः सञ्ज्योतिरात्मा स्वयं
नीरूपश्च सरूप ऊर्जिततमः पूर्णः परोक्षः पुमान् ॥७॥

॥ सवितुः ॥ (६)

यो वै विश्वमिदं चिता"प्रसुषुवे"विश्वादिसृष्टेः पुरा
चिज्ज्योतिः किरणैः सदात्मकरणैर्नित्यं "प्रसूते"ऽखिलम् ॥
धीयोगादिह सोऽभ्युदेति "सविता"योऽन्तर्धियां प्रेरकः
ध्येयः स्थावरजङ्गमात्मपरकः सन्दर्शनीयो दृशा ॥८॥

॥ तत् ॥ (७)

"तद्" वै ब्रह्म परं सुपूर्णगुणकं नित्यं परोक्षार्थकं
विश्वस्माज्जगतोऽप्यतीतममृतं यत् किञ्चिदेवास्ति सत् ॥
वाचाऽनिर्वचनीयमप्यतितरां सत्यं हि धीभ्योऽन्तरं
नीरूपं च गुणत्रयात् परतरं पूर्णं विरामात्मकम् ॥९॥

॥ वरेण्यम् ॥ (८)

ज्योतिस्तत् "सुवरेण्य"मात्मनि विदा बाह्यं परं चान्तरम्
ज्येष्ठं सद्"वरणीय"मत्र भुवने श्रेष्ठं वरिष्ठं वरम् ॥
ज्ञानेच्छाकृतिचेतनाधिकरणं धीनामनुग्राहकं
सर्वेषामपि त"च्छरण्य"मुदगात् सर्वत्र सन्तारकम् ॥१०॥

॥ भर्गः ॥ (९)

"भर्गो" ज्योतिरदः प्रचेतनपरं नीरूपकं रूपकं
पाकार्थेन सुसूक्ष्मकं परतमं कालाग्निरुद्रात्मकम् ॥
ऐन्द्रं वैद्युतमप्यचिन्त्यमुदगादध्यात्मकं चेतनं
धीनामात्मनि सत्त्वशुद्धिकरणं पापात्मनां भर्जनम् ॥११॥

मोहाज्ञानतमोभयादिदुरितप्रच्छन्नदोषापहं
सन्तापादिनिवारकं जडधियां तत् कालवत् पाचकम् ॥
हिंसाऽसत्यदुरुक्तदुर्मतिततेर्दुष्टात्मनां भर्जकं
दृष्टादृष्टदुरिष्टदुष्कृतिहरं "भर्गो"ऽखिलावर्जकम् ॥१२॥

सर्वेषां हृदि पाकसत्त्वरुचितं वैश्वानरीयात्मकं
धीनामान्तरसत्प्रकाशकचितेः प्रज्ञानचिद्दीपकम् ॥
सत्यासत्यविमर्शनैकतपसा पक्वैः समैर्धीन्द्रियैः
नित्यं स्वात्मनि शुद्धसत्त्वमहसो"भर्गो"भवेद् दर्शकम् ॥१३॥

## ॥ धीमहि ॥ (१०) (ध्यायामः-ध्यायेमहि)

ज्योतिर्"धीमहि"तद्वरेण्यममृतं"ध्यायेमहि"स्वान्वयं
धीभिस्तेन समीरिताभिरचलं सञ्चिन्तयामो वयम् ॥
तत्रैकाग्रतया धिया प्रणिहिताः सम्भावयन्तोऽन्तरे
तेजोधारणया समाहितदृशा"ध्यायाम"आत्मान्तरम् ॥१४॥

## ॥ निधीमहि ॥

ज्योतिः सर्वसुखास्पदं स्वरसदं ध्येयं धिया संविदा
ध्यानेनात्मनि "सन्निधीमहि"हृदा सन्धारयामः सदा ॥
तस्मिञ्ज्योतिषि गोपनाय निधिवत् संस्थापयामो धियः
स्वात्मानं सह धीभिरेव परमे शान्त्यार्पययामो मुदा ॥१५॥

## ॥ सामान्यतः समग्रमन्त्रार्थः ॥

योऽस्माकं हृदयेऽन्तरात्मनि चिता सर्वा धियः प्रेरयेत्
व्योम्न्यन्तर्निजतेजसैव सविता नित्यं प्रसूतेऽखिलम् ॥
देवो द्योतयति स्वयं परितपन्प्रद्योतते‌ऽन्तर्बहिः
तस्येदं वरणीयमाश्रमपदं ज्योतिःपरं धीमहि ॥१६॥

## ॥ आधिभौतिकं तत्त्वम् ॥

सूर्योऽसौ दिवि भौतिकोऽखिलजगच्चक्षुर्बहिर्द्योतते
दिव्यो नित्यमचेतनोऽग्निरिव सन् यश्चक्षुषा दृश्यते ॥
उद्यन् त्सोऽनुविशंश्च नस्तनुभृतां स्वे चक्षुषी ज्योतिषा
हृद्योगात् प्रतिबोधयत्यनुपदं सर्वेषु सुप्ता धियः ॥१७॥

भूयस्ताश्च धियः सबाह्यविषयेष्वाकर्षयन्नञ्जसा
भूयस्या स्वदिशा प्रवर्तयति यस्ताः प्राग्दृशा तेजसा ॥
सद्धर्मे निजसत्यवस्तुनि परे ध्येयैकलक्ष्यान्वयात्
स्वं रूपं प्रति दर्शयत्यनुगुणं ज्ञेयं परं ज्ञापयन् ॥१८॥

देवोऽसौ सविता जगत्प्रसविता धीनां चिताप्रेरकः
नेता द्योतयिता नृणां प्रणयिता प्रद्योतते स्वार्चिषा ॥
यद्रूपं वरणीयमिष्टफलदं यद्वद्वधूनां वरः
तत् साक्षादनुदृश्य चेतनधिया ध्यायेमहि स्वान्तरे ॥१९॥

प्रत्यक्षं दिवि दर्शकस्य सवितुस्तेजःस्वरूपं वरं
प्रत्यक् सन्धृतया धियाऽन्तरितया पश्यन् दृशैकाग्रया ॥
गायत्र्याः परमन्त्रमात्मनि जपन् तस्यार्थरूपं परं
धीयोगावनुचिन्तयन् त्समदृशा तज्ज्योतिरेवाप्नियात् ॥२०॥

॥ अधिदैवतम् ॥

यश्चामुष्य तु भौतिकस्य सवितुः प्रत्यङ्परात्मोत्तमः
द्रष्टा केवलचेतनो रसतमस्तच्छद्मभाक् सत्तमः ॥
तत्त्वेनाप्यधिदैवतेन सविता स्वज्योतिषा चेतते
सोऽन्तर्यामिचिताऽखिलप्रसविता पारोक्ष्यतो राजते ॥२१॥

योऽमुष्मिन् सवितर्यपि प्रति ततः पूर्णः सुसन्दृक्तमः
यस्यासौ सविताऽपि दृस्यकिरणं ज्योतिःशरीरं श्रुतम् ॥
यश्चान्तर्यमयत्यमुं पुनरसौ नोचेदयं स्वान्तरं
सोऽन्तर्यामिचिदात्मकोऽत्र सविता देवः स देवोत्तमः ॥२२॥

मित्रोऽसौ दिवि तेजसा परितपन् सर्वं प्रजानन् त्स्वयं
सर्वज्ञः सकलानिमान् प्रजनयन् प्रज्ञापयन् त्स्वान्वयम् ॥
अस्माकं च धियः स्वकीयविषये चित्सन्दृशे प्रेरयन्
सोऽस्मान् यातयति प्रशासनमुखाच् चिज्ज्योतिषा सन्नयन् ॥२३॥

जीवास्ते सुधियस्तदन्वयमुखाद् विश्वे नराः सद्ग्रहात्
स्वेष्टं प्राप्तुमिहैव साधनमुखाद् सर्वेश्वरानुग्रहात् ॥
सङ्गन्तुं सह धीभिरात्मनि विदा सूर्येण दिव्यात्मना
संविद्-भावन-कर्मभिः प्रणिहिता नित्यं यतन्ते भुवि ॥२४॥

इत्थं सत्यपि वेदशासनमुखात्तत्त्वैकदृष्ट्यन्वयाद्
धीयोगे न च यज्ञसाधनमुखाद् ध्येयैकभावाश्रयात् ॥
नित्याभ्यासपरायणाः समधियः सद्यत्नशीलोर्जिताः
जीवा ज्योतिरुपाप्नुवन्ति तपसा संवित्प्रसादात्समे ॥२५॥

इन्द्रात्मा सपरोक्ष एव परमश्चैतन्यसत्तान्वयाद्
अस्माकं हि धियः समीरयति यः पूर्णः परः पूरुषः ॥
अस्मान् त्स्वात्मचिता प्रबोधयति यः प्रज्ञानचित्सन्दृशा
योऽस्मभ्यं तनुते धिय स्वविषये श्रद्धात्मभावान्विताः ॥२६॥

तस्यात्मीयचिदीरिताभिरचलं तिष्ठन् त्स्वधीभिः समं
सम्पश्यन् सवितारमान्तरहृदा प्रत्यक्षतः सन्दृशा ॥
ध्यायँस्तत् परमं विदाऽऽत्मनि धियां योगेन सन्धीयतां
ज्योतिस्तत् प्रतिधीमहीति मनसा तस्मिन् समाधीयताम् ॥२७॥

॥अध्यात्मम्॥

योऽस्माकं हृदये शरीरनिलये सन् प्रत्यगात्मा स्वयं
यो धीभिश्च सचेतनो विरमते सर्वात्मसत्त्वान्वयम् ॥

सर्वार्थव्यवहारसाधनकृते स्वीयाः पुनर्भावयन्
ज्ञानेच्छाकृतिचेतनो निजधियो नित्यं दधात्यात्मनि ॥२८॥

सर्वाण्येव हि धीन्द्रियाण्यनुनयन् वृत्त्याऽवलब्य्यैव यः
सर्वार्थान् प्रति सङ्गृहिष्यति धिया ज्ञानादिरूपोदितान् ॥
तादर्थ्येन च चोदयत्यनुलवं सर्वा धियो भावयन्
सामर्थ्यात् परमार्थतोऽनुभवति स्वीयं सुसत्त्वं स्वयम् ॥२९॥

स्वस्यैवानुभवार्थमात्मनि धिया पूर्णात्मभावान्वयाज्-
ज्ञानोपासनकर्मयोगपरया सन्निष्ठयाऽन्तर्दृशा ॥
ध्येयं साधयितुं परात्मरसदं तत् पारमार्थास्पदं
तद्ध्यानाय धियः प्रचोदयति यः सोऽयं चिदात्मा स्वयम् ॥३०॥

यस्मादात्मनि संहिता निजधियो योऽन्तः प्रसूतेऽनिशं
तस्मात् सोऽयमहम्मतेः प्रसविता सञ्चेतनात्मा स्वयम् ॥
देवोऽयं निजधीन्द्रियैश्चितिमयैः सम्पादितं सर्वशः
सर्वं ज्ञानमयं प्रकाशयति यः सर्वार्थसम्बोधकः ॥३१॥

प्रत्यञ्चीह चिदात्मनोऽस्य सवितुर्देवस्य दिव्यात्मनः
दिव्यं ज्योतिरदः परं समुदितं साक्षात् प्रपश्यन् दृशा ॥
ध्यायन् निश्चलभावतः स्वरसतो धीयोगसत्त्वान्वयाद्
ध्येयं तत् परमं पदं निजमियाच्चैतन्यमेवान्तरम् ॥३२॥

॥ इति द्वितीया कला ॥
सम्पूर्णा

## तृतीया कला ( ३ )

॥ गायत्र्याः तात्त्विकं स्वरूपम् ॥

तस्या उपस्थानम्—"गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पदी, अपदसि नहि-पद्यसे। नमस्ते तुरीयाय दर्शताय पदाय परोरजसे, असावदो माप्रपद्, अहमदः प्रापम् ॥ ॥ इति ॥ (बृ० उ० ५, १४, ७) यजुर्मन्त्रः ॥

॥ प्रथमं अपातृतत्त्वम् ॥

"गायत्री"परतत्त्वतः स्वयमपात् साऽऽसीदमात्रात्मिका
सङ्ख्या-मान-गुण-क्रियादिरहिता पूर्णा परार्धात्मिका ॥
विश्वाधारपदाऽपदात्मपरमव्योमात्मतन्मात्रया
प्रज्ञानात्मकसत्तया विरमते ब्रह्मात्मचिन्मात्रया ॥१॥

माता वाक् स्वयमेव मानरहिता साक्षात्प्रमाणात्मिका
नोच्चार्या परमौनसत्त्वरसना पूर्णा तुरीयात्मिका ॥
विश्वेषामपि वेदमन्त्रवचसां सच्छन्दसां मातृका
तद्बीजाक्षरमूलमन्त्रतनुभृद् ब्रह्मार्धमात्रात्मिका ॥२॥

॥ एकपदी ॥

गायत्रीयमपात् परात्मपुरुषे पूर्णात्मसत्त्वात्मिका
सा चिन्मात्रपरं पदं सुनिदधे तेनैकपात् सम्बभौ ॥
प्रत्याप्तेयमजस्य वै भगवतस्तस्यैकपादः सतः
पूर्णात्मा पुरुषस्य सा भगवती शक्तिः परा वाक् स्वतः ॥३॥

॥ द्विपदी ॥

सैकात्मा द्विपदी बभूव बहुधा भूयः प्रभावोदये
द्वेधात्मा चिदचित्परा च सदसद्रूपा सबाह्यान्तरा ॥
पूर्णे ब्रह्मणि वाच्य-वाचकचिता स्त्रीपुँस्त्वसत्त्वान्विता
तादात्म्यात् परसामरस्यकलया वाग्-ब्रह्मसत्त्वाञ्चिता ॥४॥

प्राक् सृष्टेः परमात्मनःप्रतपसः सत्त्वैकसञ्चेतनात्
प्रादुर्भूतमृतं च सत्यममृतात् प्रज्ञानसत्त्वाञ्चनात् ॥
गायत्री द्विपदी स्वयं समुदगाद् योगान्मनो-वाक्चितोः
ज्ञानाद् भावन-चित्क्रियानुगमनाद् वाग् भूयसी सम्बभौ ॥५॥

केचित् तत्र तदन्यथा प्रतिविदुः सत्यानृताभ्यां समं
सद्योगाच्चिदचित्कयोः सदसतोस्तद्ब्रह्म-वाचोः श्रुतम् ॥
भूयस्तत् खलु वाच्य-वाचकचितोस्तादात्म्यहृत्संहितं
क्लृप्तं कल्पितमत्र तद् द्विपदतः सर्वस्वसञ्चालनात् ॥६॥

॥ त्रिपदी ॥

ज्ञानेच्छाकृतिभिस्त्रिपात् समुदगाद् गायत्रिमन्त्रात्मिका
वाचो व्याहृतिभिः समं त्रिभुवनं पादत्रयं भौतिकम् ॥
तज्ज्योतिस्त्रयमाधिदैवतमयं शक्तित्रयाप्तं भवेद्
अध्यात्मं करणत्रयं त्रिवृदितं तत्त्वत्रयेणान्वियात् ॥७॥

॥ चतुष्पदी गायत्री वाक् ॥

गौरीमाध्यमिकीह वागधिगता ब्रह्मेन्द्रसत्त्वान्वयाद्-
एक-द्वि-त्रि-चतुष्पदैः समुदगात् सङ्ख्याप्तपङ्क्तिक्रमात् ॥
गायत्र्याः परमार्थकं हि परमं पूर्णं तुरीयं पदं
तद्योगेन चतुष्पदी भगवती गायत्रिनाम्नी बभौ ॥८॥

॥ गायत्र्याः तुरीयं पदम् ॥

दिव्यं दर्शतमेव तत् पदमतः सन्दर्शनीयं विदा
सर्वेभ्यो भुवनेभ्य आतिपरतो यो वै तपत्युत्तमः ॥
तस्मादेव परोरजाः स उदितः पूर्णस्तुरीयात्मकः
तत्तुर्याय हि दर्शताय महते तस्मै नमस्तेऽर्चिषे ॥९॥

प्रज्ञेयं दिवि दर्शनीयमुदितं यद्वै परोक्षार्थकम्
तादात्म्येन हि तस्य दर्शनमलं स्यादेव याथार्थकम् ॥
"तन्मां प्रापद्"इति प्रपन्नहृदयात्"तत् प्रापम् आत्मन्यहं
तत्साक्षात्कृतिसत्त्वरूपकमिदं सद्दर्शनं विद्यताम् ॥१०॥

॥ छन्दोदर्शने तुरीयपाद् गायत्री ॥

"तत्ते सवितुस्तुरीयं पदं पश्यामि दर्शतम् ॥
ज्योतिर्विश्वस्य दर्शयत् ॥३॥

॥ पदपाठः ॥

"[illegible] । ते । सवितः । तुरीयं । पदं । पश्यामि । दर्शतम् ॥
ज्योतिः । विश्वस्य । दर्शयत् ॥३॥

(छन्दोदर्शनम्० अनु० १, सू० १, ऋक्० ३)

छन्दोदर्शनमन्त्रके तु तदिदं भूयोऽनुभावार्थकं
धीयोगात् परमं तुरीयपदभृत् सद्वस्तुसन्दर्शनम् ॥
द्रष्टृत्वान्निजसाक्षिणस्त्ववगतिर्नैवेह दृश्यत्त्वतः
विश्वस्याप्यवभासकं श्रुतिविदां"ज्योतिःपरं दर्शयत्" ॥११॥

द्रष्टृणामपि दर्शकं सुविदुषां प्रत्यक् सुसन्दृक् परं
दृश्यानां प्रति साक्षिकं परतमं पूर्णं तुरीयं पदम् ॥
"तद् विष्णोः परमं पदं" सदपदं विश्वस्य सन्दर्शकं
गायत्र्याः सवितुश्च तत् सममितं"ज्योतिःपरं दर्शयत् ॥१२॥

गायत्री सविता परः स पुरुषो' यश्चान्तरात्मा च नः
पूर्णं ब्रह्म हि निर्गुणं च सगुणं योगाच्चतुष्पात् समम् ॥
गायत्र्यैव समानया परमया तत् संविदोपास्यतां
तादात्म्येन समास्यतां समतया शान्त्याऽऽत्मना प्राप्यताम् ॥१३॥

गायत्रीयममात्रका परमपाद् वाग् अर्धमात्रात्मिका
साऽनुस्वाररसेन्दुबिन्दुसदना पूर्णा तुरियात्मिका ॥
नोच्चार्या परसंविदा समधिया सन्दर्शनीयाऽञ्चिता
नो दृश्याऽखिलदर्शका परचिता पूर्णात्मसन्दृक् चिता ॥१४॥

॥ धीयोगाभ्यासप्रक्रिया ॥

"धीयोगाभ्यसनं"भवेत् कृतिमुखात् तत्प्रक्रियाऽऽध्यात्मिकी
ध्येयैकाग्रपदानलक्ष्यमुखतस्तादात्म्यनिष्ठात्मिकी ॥
ध्यानाद् धारणया समाधिमुखतो वित्कर्म-भावात्मिकी
धीनामात्मनि संयमेन विरतेरध्यात्मविद्यात्मिकी ॥१५॥

अध्यात्मं सकलानुभावपरमा वाग्-वस्तुसंवित्तमा
स्वाध्यायाद्यनुशीलनादिनियमा सद्भावना सत्तमा ॥
अभ्यासाद्यनुसारिणी स्वनिगमा विद्याऽनवद्योत्तमा
स्वध्येयाभ्युदयैकसाधकतमा हृद्याऽनुवेद्याऽन्तिमा ॥१६॥

स्वान्तर्जागृतिसत्त्वमेव परमं सज्ञान-भाव-क्रियं
स्वान्ते सन्ततमप्रमादकरणं साभ्याससत्प्रक्रियम् ॥
वेदा देवगणाश्चिदात्मनिरतं तं जागृवाँसं जनं
वेद्य-ध्येयसमृद्धिसाधनकृते सर्वेऽनुयन्ति स्वयम् ॥१७॥

जागर्तीह निजान्तरेऽखिलनृणां वैश्वानरोऽग्निः सदा
प्राणः स्वात्मचिदन्वयानुकरणः प्राज्ञोऽन्तरः संविदा ॥
ब्रह्माण्डे बहिरप्यसौ च सविता धीनां प्रति प्रेरकः
सर्वात्मा हृदि चेतनो निजचिता सञ्जागृवान् मूर्धगः ॥१८॥

लोके जागृतिकामनापरवशः सत्साधनैकातुरः
स्वेष्टं साधयितुं प्रकृष्टमहसं सञ्जागृवांसं परम् ॥
प्रत्यक्षं प्रतिवेदितुं हि ततमं प्रत्येति विद्वत्तमं
प्राप्नोति प्रकृतेः परं प्रगतितो ध्येयं पदं सत्तमम् ॥१९॥

प्रत्यञ्च्यन्तरहञ्चिता स्फुरति या वाक् संविदा सस्वना
प्रत्यक्षाऽप्यपरोक्षसत्त्वकलया सा संविदानाऽऽत्मना ॥
सप्तम्यो निजधीभ्य आन्तरतमा स्याद् अष्टमीन्द्राननना
सर्वाः प्रेरयतीह ता निजधियः प्रत्येति सच्चेतना ॥२०॥

प्रत्यञ्चिप्रकृतेश्चिदात्मनि रतास्ताः संविदिच्छाक्रियाः
सर्वेषामपरोक्षगाः स्वरसदास्तद्वाङ्मनःप्राणगाः ॥
श्रोत्रं नेत्रमितिद्वयं सहहितं तन्नामरूपान्वितं
तत्पञ्चेन्द्रियसंयमात् सममियाद् धीयोगसत्त्वान्वयम् ॥२१॥

प्राणोऽयं बहिरन्तरप्यनुपदं नित्यं चरत्यात्मनः
प्राणापानगतेः स्वभावगुणतः सञ्जागृवाँश्चित्स्वनः ॥
शान्त्यान्तःसुनिरीक्ष्यतां समदृशा धीभिः समाभिःसमं
चिद्योगेन नियम्यतां प्रगतिदं सत्त्वं विदाऽन्वीयताम् ॥२२॥

मूलादात्मचिता हृदि स्फुरति वाग् याऽजस्रया धारया
याऽहञ्चित्स्वरसान्विताऽपि च पराग् वृत्त्या धियाऽपारया ॥
वाचैव प्रतियोजयन् इह तया गायत्रिमन्त्राक्षरं
छन्दःसंहितमुच्चरेत् सुमनसा प्राणान्वयात् सुस्वरम् ॥२३॥

मन्त्रार्थं प्रतिभावयेज्जपविधौ स्वान्तःसुधीसंयमे
शब्दानामपि चान्वयाद् रसनिधौ सद्भावनासङ्गमे ॥
तद्भावेन समग्रमन्त्रविदितं दिव्यं सदर्थात्मकं
ध्यायेत् तत् सवितुः स्वरूपकपरं ज्योतिःपरात्मार्थकम् ॥२४॥

स्वान्तःस्वोच्चरितं स्मृतं च मनसा भूयो धिया भावितं
स्वान्तःश्रोत्रमुखेन सुस्वरमयं शृण्वन् त्स्वमन्त्राक्षरम् ॥
बाह्यं स्वान्तरमेव वाऽप्यनिमिषन् पश्यन् बहिश्चक्षुषा
दिव्यज्यौतिषलभ्यतोऽन्तरदृशा रूपं परं चिन्तयेत् ॥२५॥

॥ विद्वद्यज्ञः ॥

विद्वद्यज्ञमयोऽयमान्तरतमैर्ऋत्विक्परैर्धीन्द्रियैः
हृद्यः स्वात्मसमन्वयेव परमः स्यान्मन्त्रयोगोदयः ॥
सद्योगादुदितः प्रमादरहितः स्वान्तः प्रबोधोच्चयात्
सद्यः स्वात्मनि सम्प्रसादकलया संवित्प्रकाशोदयः ॥२६॥

वाग्घोताऽत्र ऋचाऽऽह्वयन् दिविषदो जुह्वद् वषट्कारवान्
त्सोऽध्वर्युर्यजुषा यजन् समदृशा सौर्येण चिच्चक्षुषा ॥
उद्गाता स्वरसामगायनपरः प्राणः स ऐन्द्रोऽन्तरः
ब्रह्मा यज्ञनिरीक्षकः सुमनसा श्रोत्रात्मकोऽग्नीच्छुतः ॥२७॥

एतेषामिह ऋत्विजां सममतेः स्वान्तर्यधीयोगतः
दिव्यो यज्ञरथश्चरत्यनुगतेर्वाङ्मानसैकाश्रयात् ॥
संविद्-भावन-कर्मयोगमुखतः सर्वार्थसिद्धिप्रदा
गायत्री परमन्त्रयोगरसदा स्यात् प्रक्रियैषा सदा ॥२८॥

वाचोच्चारमुखात् स्वरश्रवणतः स्पष्टाक्षरं वाचिकं
जिह्वौष्ठोच्चलनात् स्वराश्रवणभाक् सूक्ष्मादुपांशु स्वरम् ॥
तन्मन्त्राक्षरसंस्वरस्मरणतो मौनेन सन्मानसं
मन्त्राणां जपनं हि शास्त्रविहितं त्रेधा प्रयोगात्मकम् ॥२९॥

तन्मन्त्राक्षरवस्तुबोधपरकं ज्ञानं तदाध्यात्मकं
तेजोध्यानमुपासनार्थपरकं सद्भावनाकारकम् ॥
मन्त्राणां जपनं तु वाचिककृतेः कर्मप्रधानार्थकं
ज्ञानोपासनकर्मणामितिकृतेर्योगो भवेन्मन्त्रतः ॥३०॥

प्रत्यक्षोर्जितवेदशासनमुखाद् गायत्रिमन्त्राश्रयान्-
निष्कामाचरितेन सन्नियमतः स्यात् कर्मयोगोदयः ॥
नित्योपासनयाऽऽत्मशान्तिरुदियात् प्रज्ञाप्रतिष्ठादिना
भूयाद् ब्रह्मणि नित्यकर्मसकलं तद् विश्वशान्तेः कृते ॥३१॥

निष्कामात् कृतमप्यलं प्रकृतितो व्यर्थं न तत् स्यान्मृषा
निष्प्रत्यूहतया फलं प्रति भवेत् सत्यं यथार्थाशिषा ॥
विश्वस्यैव सुशान्तिसत्त्वकरणे युक्तं समर्थं समं
यावज्जीवमिदं विदां सुयजनं नित्यानिवार्यं सताम् ॥३२॥

॥ इति तृतीया कला ॥

सम्पूर्णा

## ॥ चतुर्थी कला ॥ ( ४ )

### ॥ मन्त्रार्थज्ञानसाहित्यम् ॥

वागर्थप्रतिपत्तिसन्नियमतो मन्त्रार्थसत्संविदा
कुर्याद् वैदिककर्मजातमखिलं यज्ञादिसिध्यै सदा ॥
श्रद्धाभावनसंविदादिविरहात् सर्वं कृतं निष्फलं
ज्ञानाद् भावनया सहैव चरितं भूयो भवेत् सत्फलम् ॥१॥

स्वाध्यायः स्वगुरोर्मुखाच्छ्रवणतश्छन्दोमयः सस्वरः
सोऽध्येयोऽत्र ऋगादिवेद उदितः साङ्गश्च सार्थो द्विजैः ॥
यो वेदं तमधीत्य नित्यतपसा शास्त्रोदितैः सद्व्रतैः
तस्यार्थं न तु वेत्ति शास्त्रमुखतो व्यर्थः स भारं वहेत् ॥२॥

वेदः सोऽत्र फलप्रदोऽपि न भवेत् स्वार्थादिशून्यो वृथा
सर्वार्थेष्वपि सोऽर्हति प्रतिफले वेदार्थवित् सर्वथा ॥
यज्ञे वैदिककर्मणि श्रुतिमुखाज्जापे च होमादिके
मन्त्रार्थादिकसंविदेव विहितं सर्वं सुवीर्यं भवेत् ॥३॥

साहित्यं भवतीह सर्वविषये शब्दार्थयोः प्रत्यये
तत्राप्येकतरं विहीनमुभयोर्व्यर्थत्वमापादयेत् ॥
अर्थज्ञानगुणादिभिर्विरहिताच्छब्दात् ततः केवलात्
किं कर्तुं भुवि सोऽर्हतीह पशुवज्ज्ञानेन हीनो नरः ॥४॥

तस्मात् पूर्णगुणोदये श्रुतिमतां श्रेयांस्तदर्थाश्रयः
शास्त्रादेव तयोः समेन भविता योगेन सत्प्रत्ययः ॥
गायत्र्यादिकवेदमन्त्रवचने यज्ञे जपे यौगिके
ध्येयार्थस्य च संविदोऽनुसरणं श्रेयस्करं नान्यथा ॥५॥

### ॥ क्रियाधीनं फलम् ॥

लोकेऽस्मिन् त्सकलं स्वभावगुणतः कृत्यैकसाध्यं फलं
प्रायः स्यादिह तत्प्रयोगविधितः पश्चात् फलप्रापकम् ॥
ज्ञानादेर्विरहादपि प्रति फलेत् सर्वं क्रियाशक्तितः
ज्ञानात् स्यादधिकं विशिष्टफलदं प्रत्यक्षदृष्टोक्तितः ॥६॥

अज्ञानादुपभुक्तमुक्तमगदं स्वार्थे विषं वा फलेद्
अज्ञं चान्धमनिष्टमप्यविमतं सस्पृष्टमग्निर्दहेत् ॥
अज्ञेनापि निपातितोऽग्निरवशं स्वाप्तं तृणं निर्दहेत्
प्रत्यक्षं तदिदं समस्तविबुधां विज्ञानसिद्धं भवेत् ॥७॥

सिद्धार्थं तपसैव मन्त्रवचनं संसाधितं चर्षिभिः
सामर्थ्यादिह सत्यमन्त्रमुखतः स्वेष्टं फलं साधयेत् ॥
सामर्थ्यं भवतीह मन्त्रवचने प्राचामृषीणां सतां
शक्त्याऽऽकर्षयति स्वमर्थमखिलं सोऽन्वेति वाचं प्रति ॥८॥

शब्दे नामनि शक्तिरस्ति महती काचिद्विशिष्टा स्थितिः
दृष्टादृष्टफलप्रदाननियता दिव्या विचित्रा गतिः ॥
शब्दोऽयं हि निजावलम्बिनमिमं जिज्ञासुमाप्तं जनं
तं स्वार्थं प्रति सन्नयत्यनुपदं नामात्मकः सार्थकः ॥९॥

निरूपेऽप्यविभाविते भगवति ज्ञानान्धभावान्वयाद्
वाचैवोच्चरितं स्मृतं च मनसा तन्नाम, मन्त्रादिकम् ॥
अज्ञानादपि तत् कृतं स्वफलतः सन्तापदोषादिकं
पापं निर्दहतीति शास्त्रवचनाद् अज्ञैरपि प्राप्यते ॥१०॥

अर्थज्ञानगुणादिभिर्विरहितान् त्सोऽमन्यमानान् निजान्
त्रातुं तानभिमानसंयुतबलैर्मन्त्रात्मकैर्ब्रह्मभिः ॥
इन्द्रो दस्युगणं जघान महसा दिव्यैर्बलैरात्मनः
तस्मादात्मबलं तदेव परमं यद् वेदमन्त्रोर्जितम् ॥११॥

तद्वेदोदितसाधनादिमुखतः सुज्ञान-भावोदये
मन्त्राणामवलम्बनं च जपनं तद्दैवतोपासनम् ॥
धीनां सत्त्वविशुद्धिसंस्कृतिकृते वेदादिसच्छासनान्-
निष्कामादिह नित्यकर्मकरणं ह्यज्ञानतोऽपीष्यते ॥१२॥

सन्ध्यादेः समुपास्तिसाधनमुखाद् यज्ञादिसिध्यर्थकान्-
निष्कामार्जितकर्मयौगिकमुखात् तद्ब्रह्मकर्माश्रयात् ॥
सच्छ्रद्धाभ्युदये प्रसादफलतः सत्यादिधर्मान्वयात्
सत्ये वस्तुनि निष्ठयाऽऽत्मनिरतेरध्यात्मविद्योदयः ॥१३॥

गायत्रीमुखतः समस्तनियमैर्यज्ञादिसत्कर्मणां
नित्याभ्यासमुखात् समाहितधिया तद्ब्रह्मकर्मार्जने ॥
निष्कामोर्जितकर्मयोगमुखतो नैष्कर्म्ययोगोदये
सन्ध्यादेः समुपक्रमः प्रतिभवेद् दीक्षाव्रतैर्बन्धनात् ॥१४॥

येषां वै भुवि कर्मणामकरणे स्यात् प्रत्यवायो महान्
तद्वत् तत्करणे फलं न तु भवेत् तन्नित्यकर्म स्वयम् ॥
तत्कर्तव्यधियैव शासनविधेर्निष्कामतश्चीयतां
सन्ध्योपासनवत् समं प्रतिदिनं धीयोगतोऽभ्यस्यताम् ॥१५॥

## ।। ब्रह्मसूत्रम्—यज्ञोपवीतम् ।।

गायत्र्या विधृतं निजोपनयने यद् "ब्रह्मसूत्रं" परं
तन्मन्त्रादभिमन्त्रितं श्रुतिमतं तद्ब्रह्म सत्त्वात्मकम् ।।
तद्दीक्षाव्रतधारणानुसरणैर्धीयोगयज्ञैर्हृदा
साक्षात्कारकृते परात्मनिरतेर्ब्रह्मात्मनः संविदा ।।१६।।

सूत्रं तद् दिवि वायुवत् सुविततं सद्वस्तुवन्निर्गुणं
सामूलाग्रसमध्यकं सममितेरच्छिन्नधारात्मकम् ।।
तत्त्वैस्तत् त्रिगुणीकृतेस्त्रिवृदितं चित्सत्त्वमेकात्मकं
संवृत्तं त्रिकमेकमेव हि पुनर्विश्वात्मकं ब्रह्मवत् ।।१७।।

भूयस्तत् त्रिवृतं पदैः प्रकृतिकैः सत् पौरुषेयं महद्
भाव्यं तन्नवतन्तुकं त्रिगुणतः शक्तित्रयाप्तं बृहत् ।।
प्रायोगाद् विधितः प्रदक्षिणमुखाद् वेदत्रयेणावृतं
ब्रह्मग्रन्थिमुखेन सन्नियमनाद् बद्धं सदेकात्मना ।।१८।।

एवं तच्च नवाङ्कसत्त्वपरमं वाग्-ब्रह्मपादैर्मितं
ब्रह्मग्रन्थिकमेव तत्र दशमं तत् पूर्णबिन्दूर्जितम् ।।
गायत्र्याः परवाच एव कलया ब्रह्मात्मनः सत्त्वतः
प्रत्यक्षं परमं प्रतीकमुदगात् तद् ब्रह्मसूत्रं स्वतः ।।१९।।

## ।। यज्ञोपवीतं ।।

आदौ सिद्धमनादिसत्त्वकमिदं "यज्ञोपवीतं" श्रुतं
चिद्योगाद् सहजं प्रजापतिसमं पूर्णं पवित्रं श्रितम् ।।
आयुष्यं बलदं तदग्र्यमखिलात् सद्ब्रह्मवर्चस्यदं
यज्ञायैव धृतं हि वेदविधितो गायत्रिमन्त्रार्थकम् ।।२०।।

संविद्-भाव-कृतीष्टयोगमुखतो धीयोगसत्त्वान्वयाद्
गायत्र्याः परवेदमन्त्रमुखतः सद्ब्रह्मकर्माश्रयात् ।।
यज्ञार्थं विधृतं च धारितमिदं धार्यं सदा श्रद्धया
यज्ञं साधयतीष्टदं प्रतिफलेद् योगेन सन्निष्ठया ।।२१।।

## ।। आक्षेपः ।।

वेदे"तत्सवितुर्वरेण्यम्"इति यो गायत्रिमन्त्रः श्रुतो
वेदाद्यध्ययनाय चोपनयने ब्रह्मोपदेशे श्रितः ।।
नित्यं तत्सदुपासनादिकृतये ज्ञानाच्च भावात् कृतेः
सद्विद्याद्यनुभावचित्समुदये ब्रह्मात्मसाक्षात्कृतेः ।।२२।।

वेदेऽन्ये बहुधा भवन्ति बह्वो गायत्रिमन्त्राः परे
वेद्यार्थादिसमृद्धिसत्त्वगुरवः सर्वार्थसंवित्पराः ॥
तेष्वस्यैव किमर्थमाश्रितमहो? ब्रह्मोपदेशार्थकं
प्रत्नार्षेयपरम्परागतमिदं कस्मादकस्मात् कथम् ॥२३॥

एतन्मन्त्रविधानमार्षवचने तत्कल्पके ब्राह्मणे
वेदे मन्त्रगणे विधानकरणे कुत्रापि नो दृश्यते ॥
तस्माद् वै विचिकित्सितं महदिदं श्रेयः सुसत्त्वाश्रयं
विद्वद्भिः सुविमर्शनीयमचिराद् आर्षप्रमाणाश्रयात् ॥२४॥

॥ गायत्रीमन्त्रे तत्त्वार्थवैशिष्ट्यम् ॥

मन्त्रेऽस्मिँ"स्तद्"इति प्रमुख्यवचनं पूर्णं परोक्षार्थकं
प्राथम्याद् अधिदैवतार्थपरकं ब्रह्मात्मसन्दर्शकम् ॥
यद्"देवः सवितेति" सत्पदयुगं प्रत्यक्षतो भौतिकं
धीनां प्रेरणतोऽपरोक्षवचनं चैतन्यमाध्यात्मकम् ॥२५॥

सामर्थ्येन समस्तवेदरसदं तत्त्वत्रयैकास्पदं
ज्ञानोपासनकर्मणां समरसाद् योगादिसत्त्वप्रदम् ॥
धीयोगः सकलार्थसाधकतमः सत्सामरस्यान्वयात्
संविद्-भाव-कृतिप्रधानकरणं श्रेयःसनिःश्रेयसम् ॥२६॥

॥ धीयोगः ॥

लोकेऽस्मिन् त्सुविपश्चितामपि सतां"यस्मादृते"सर्वथा
"यज्ञो नैव सुसिध्यतीह"परमः साक्षात्फलप्रापकः ॥
ध्येयात्मा सदसस्पतिः स भगवान् वाग्ब्रह्मणः सन् पतिर्
"धीनां योग"मुपेत्य चात्मनि चिता शान्त्याऽभ्युदेति स्वयम् ॥२७॥

प्रत्यक्षाच्च परोक्षतः समतया यश्चापरोक्षात् परो
यज्ञः सिध्यति तत्त्वतस्त्रितयतो धीयोगमात्रात् समः ॥
सोऽयं सम्प्रतितिष्ठति प्रतिपदे गायत्रिमन्त्रेऽर्थतस्
तद्योगादयमेव मन्त्र उचितो ब्रह्मोपदेशेऽर्थितः ॥२८॥

॥ सन्न्यासे यतीनां गायत्रिमन्त्रे प्रवेशः ॥

गायत्रीमुखतो यतः प्रथमतो ब्रह्मोपदेशः कृतः
सन्न्यासे सकलाश्रमान्तिमपदे भूयोः यतेरन्ततः ॥
साक्षात्कारकृते प्रवेश उदितो गायत्रिमन्त्रेऽर्थतः
तन्मन्त्रार्थपराक्षरात्मनि परे ब्रह्मात्मसत्याक्षरे ॥२९॥

## ।। गायत्रीमन्त्रे महावाक्यार्थसत्त्वम् ।।

वेदान्तोपनिषत्सु संविदुदये यत् तत्त्वमस्यादिभिर्
वाक्यैस्तत्त्वमिहोपदिष्टमखिलैरध्यात्मविद्यात्मकम् ।।
प्रज्ञानं 'तद्' अनाद्यनन्तममृतं ब्रह्मापरोक्षं परं
विज्ञानं च वरेण्यमात्मरसदं स्वानन्दचिद्ब्रह्म सत् ।।३०।।

देवः सन् परमो जगत्प्रसविता सम्प्रेरकश्चिन्मयः
जन्मादेः करणं समस्तजगतां पूर्णं विरामास्पदम् ।।
सोऽहन्धीप्रतिभावितो निजविदा भर्गात्मकं ज्यौतिषं
ब्रह्मेति स्वनुभावतः समधिया ध्येयं तदेकान्वयात् ।।३१।।

धीनां प्रेरकमान्तरं रसतमं धीभ्यः परं चेतनं
प्रत्यक् सत्त्वमहन्धियः परतमं स्वात्मैकसत्प्रत्ययात् ।।
साक्षाद् विश्वविभूतियोगविततं तत् प्रत्यगात्मान्तरं
धीयोगेऽन्तरितं समस्तरसदं प्रज्ञाप्रतिष्ठादिकम् ।।३२।।

इति चतुर्थीकला सम्पूर्ण

---

## ॥ पञ्चमी कला ॥ ( ५ )

### ॥ गायत्री मीमांसा ॥

"गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग् वै गायत्री, वाग् वा इदं सर्वं भूतं गायति त्रायते च ॥१॥ ०—( छां–उ० ३।१२।१–६ )

"सैषा च चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम्—

"तावानस्य महिमा ततो ज्यायाँश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥"

( सामवेदः )

### ॥ पदपाठः ॥

"तावान् । अस्य । महिमा । ततः । ज्यायान् । च । पूरुषः ।
पादः । स्य । सर्वा । भूतानि । त्रिऽपात् । अस्य । अमृतं । दिवि ॥"

### ॥ ब्रह्म मीमांसा ॥

"ज्योतिश्चरणाभिधानात् । छन्दोऽभिधानान्नेतिचेन्न तथा
चेतोऽर्पणनिगदात् तथा हि दर्शयति । भूतादिपादव्यपदेशोपपत्ते-
श्चैवम् । उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥

( ब्र० सू० १।१ )

ऐन्द्री वाक् परशक्तिरात्मनि रता गायत्रिसच्छन्दसा
सेन्द्रात्मा प्रतिवर्षकोऽखिलगुणैः पूर्णश्चतुष्पात् पुमान् ॥
पादस्तस्य तुरीय एक उदगात् सन् विश्वभूतात्मकको
दिव्यं गुह्यतमं त्रिपात् सदमृतं वाग्–ब्रह्मणस्तत् समम् ॥ १ ॥

चिज्ज्योतिः परसत्त्वतः समुदितं लोकेषु लोकोत्तमं
सर्वान्तः पुरुषेऽपि चेतनपरं सन्नामरूपोत्तमम् ॥
व्याप्तं तद् बहिरन्तरात्ममहसा श्राव्यं च दृश्यं विदा
तद् दृष्टं श्रुतमित्युपास्यममृतं वाग्–ब्रह्मसत्त्वं सदा ॥ २ ॥

"ज्योतिस्तच्चरणाभिधानगुणतः" ब्रह्मैव तत्त्वार्थतः
गायत्रीमुखतश्चतुष्पदमुखाच्छन्दोभिधानार्थकात् ॥
गेयं तत् स्वरसामरस्यवचसा तस्मिन् त्स्वचेतोऽर्पणाद्
गम्यं वेदमुखेन सद्रसमयं पूर्णानुभावोदयात् ॥ ३ ॥

"गायत्री" परमा पुमर्थचरणा ब्रह्मात्मवेदानना
गेया षड्विधया षडङ्गपरया योगाच्चतुष्पात् समा ॥
भूतं वाक् पृथिवी तनुश्च हृदयं प्राणाश्च तत्त्वत्रयाद्
दिव्यैस्तैस्त्रिभिरान्तरैरपि पदैर्व्यस्तैः समस्तेन च ॥ ४ ॥

पञ्चब्रह्मपरात्मपूरुषमुखा प्राणात्मिका चिन्मयी
प्राक्-प्रत्यक्-प्रतिदक्षिणोत्तरमुखा सोर्ध्वा च पञ्चानना ॥
भूतैः पञ्चभिरन्विता गुणमयैः शब्दादितन्मात्रकैः
प्रत्यञ्च्यात्मनि धीन्द्रियैः श्रुतिमुखैर्देवैर्दिगाद्यास्थितैः ॥ ५ ॥

गायत्री–पुरुषौ सुदिव्यमहसौ तादात्म्ययोगोदितौ
वाग्–अर्थात्मकभूतसत्त्वसुरसौ तौ नामरूपात्मकौ ॥
अध्यात्मं सकलान्तरौ सुमनसौ वाग्–आत्मसत्त्वार्थकौ
सामर्थ्येन समानमेतदखिलं वाग्–ब्रह्मतत्त्वार्थकम् ॥ ६ ॥

योगाद् वाचक-वाच्यवस्तुपरकौ तौ नित्यसिद्धौ समौ
सक्तौ स्त्री-पुरुषाविव प्रभवतस्तौ दम्पती सत्त्वकौ ॥
तौ माता-पितरौ समस्तजगतां तौ मान-मेयात्मकौ
दृग्-द्रष्टृप्रतिरूपकौ समदृशौ ब्रह्मैकतत्त्वात्मकौ ॥ ७ ॥

स्त्रीणां यो वरणीय आत्मरसदः सेव्यो वरः पूरुषः
जीवानां प्रवरस्तथैव परमः सत्यः समस्ताश्रयः ॥
ज्ञानादेर्वरदः सुहृत् स सविता कल्याणकृत् स्वार्चिषा
गायत्र्यैव सहान्वयेन हितकृद् ध्येयः स चिज्ज्यौतिषः ॥ ८ ॥

धीयोगेन सुसन्दृशं परतमं पूर्णात्मनिष्ठासमं
द्रष्टृत्वेन समन्वियाद् रसतमं तज्ज्यौतिरेवोत्तमम् ॥
पूर्णत्वे त्रिपुटीलयान्निजरतेर्ब्रह्मात्मसाक्षात्कृतेः
प्रत्यक्षात् परमार्थतः प्रतिभवेत् पूर्णात्मतत्वोदयः ॥ ९ ॥

एवं यद् यदभीष्टमस्ति जगति प्राप्तुं प्रपञ्चार्थकं
तद्वत् सिध्यति पारमार्थिकमपि प्रत्यक्षधीयोगतः ॥
अज्ञानं च भयादिकं दुरुदितं हन्तुं समस्तापदं
तत्पूर्णामृतदिव्यमात्रकमिदं "गायत्रिमन्त्रात्मकम् ॥१०॥

॥ गायत्रीयन्त्रम् ॥

गायत्र्याः परतत्त्वतः प्रतिचितं चक्रं तु यन्त्रात्मकं
प्रत्यक्षं परमं प्रतीकमुदगात् तद्विश्वचक्रात्मकम् ॥
तत्त्वैस्तैः सममूहितैश्च सकलैस्तत् कालचक्रात्मकं
विश्वाधारतया प्रतिष्ठितमिदं ब्रह्मात्मचक्रार्थकम् ॥११॥

चक्रं तत् परमात्मवस्तुमुखतस्तत्पूर्णबिन्दोर्मुखाच्
छक्राद् विश्वविभूतिपूर्णपुरुषात् सर्वस्वसत्त्वान्वयात् ॥
गायत्र्याः सवितुश्च तत्त्वकलया ब्रह्मात्मचित्सत्तया
गम्यं तत् प्रतिबोधसत्त्वकमिदं वाग्-ब्रह्मचक्रात्मकम् ॥१२॥

बिन्दुः स्यात् सदमात्रकं तदपदं पूर्णं तुरीयं पदं
तस्माद् यत् प्रथमं त्रिचक्रमुदगात् सा वै त्रिपाद् वाक् परा ॥
चक्रं तद् विषमाङ्ककं त्रिभुवने तच्चैकमेवास्थितं
पञ्चाङ्कं प्रति सप्तकं च नवकं सद्बिन्दुनैवोह्यताम् ॥१३॥

सद्रेखोल्लसितं त्रिकोणमपि तद् बिन्दौ समन्तर्हितं
तद्वत् स्यादिह बिन्दुगर्भितमपि प्रत्यक्षसत्त्वाहितम् ॥
तत्त्वैस्तैस्त्रिवृतं पुनस्त्रिगुणकैस्तैर्भूत-देवात्मभिः
सिध्येत् तन्नवचक्रमात्मनि मितं सद्ब्रह्मसूत्रात्मकम् ॥१४॥

भूताध्यात्मकवस्तुतत्त्वयुगलाद् युक्तात् त्रिकोणद्वयात्
षट्कोणं तदिदं भवेत् सुमिलितात् प्राक्–प्रत्यगग्रोन्मुखात् ॥
तैरङ्गैश्च गुणैर्विभूतिभिरिदं षड्भिश्च दिग्भिः समं
तत्त्वाङ्कैः सहितं त्रयीमयपदं सद्ब्रह्म–भर्गात्मकम् ॥१५॥

तद्बिन्दोर्मुखतो मितं सदभितः स्यात् षट्त्रिकोणात्मकं
गायत्र्येव हि षड्विधा प्रतिहिता तत्सर्वभूतादिभिः ॥
षट्कुक्षिः प्रतिभाविता भगवती षाड्गण्ययोगोर्जिता
व्योमात्मा परषड्दिगात्मकतनूः सा तिर्यगूर्ध्वाधरा ॥१६॥

॥ सप्तपदी दशपदी च बिन्दुना ॥

सिद्धा सप्तपदी च मध्यमपदात् पूर्णेन सद्बिन्दुना
सिद्धेऽस्मिन् नवचक्रके तु दशमः स्यात् पूर्णबिन्दुः स्वयम् ॥
ब्रह्मग्रन्थिसरूपकः सममितः सङ्ख्यान्तसत्त्वार्थकः
शून्यः सन् हि निरंशकोऽपरिमितः सोऽनन्तसङ्ख्यार्थकः ॥१७॥

तत्रैताः परमास्त्रिशक्तिचरमाः सिद्धास्त्रिकोणात्मिकास्
तत्त्वै राजस-सत्त्व-तामसगुणैः प्राच्यः प्रकृत्यात्मिकाः ॥
वर्णैर्लोहित-शुक्ल-कृष्णरुचिरैः पूर्णं त्रिकोणत्रयं
तज्ज्योती-रस-भूपुरं पदमलङ्कुर्यात् सुरूपालयम् ॥१८॥

रेखाङ्काक्षरवर्णरूपरुचिरं चक्रं चिता यन्त्रितं
विश्वं तत् क्रमते स्वसत्त्वकलया तत् क्रामयत्यात्मना ॥
तस्माद् यन्त्रमितिप्रसिद्धमजरं विश्वैकसद्यन्त्रणान्
नित्यं सञ्चरति प्रचालयति तद् वाग्-ब्रह्मचक्रात्मकम् ॥१९॥

तत्त्वादित्रययोगतः समुदितं यद् ब्रह्मसूत्रेऽर्पितं
तत् सर्वं परमार्थतः सममियाद् गायत्रिमन्त्रेऽर्थितम् ॥
यन्त्रं स्यात् तदिदं समस्तगुणतो ब्रह्मात्मसत्त्वार्थकं
वाचा ब्रह्मसमानयाऽऽत्मकलया गायत्रिमन्त्रार्थतः ॥२०॥

॥ पञ्चशीर्षा ॥

गायत्रीनिजपूर्णबिन्दुनिलया व्योमप्रमुख्या सती
हृद्योगेन च दिक्चतुष्टयमुखैः सा पञ्चशीर्षा बभौ ॥
तद्वद् दिक्चतुरस्रवेदवदनान्यूर्ध्वं मुखं पञ्चमं
तत् पञ्चास्यसुरूपकं पशुपतेः 'स्याद्' वैदिकं रुद्रियम् ॥२१॥

॥ अष्टदलं चक्रम् । भूपुरचक्रं च ॥

पश्चादष्टदलं दिगष्टकगतं वृत्तत्रयाप्तं बहिः
बिन्दुः स्यान्नवमस्ततो नवपदी गायत्रिवाग्बिन्दुना ॥
भूयो भूपुरचक्रकं त्रिवृदितं द्वारैश्चतुर्भिर्युतं
रेखाभिस्तिसृभिस्त्रिवर्णकलया सद्रूपतोऽलङ्कृतम् ॥२२॥

॥ चतुर्विंशतिदलचक्रम् ॥

केचित्वष्टदलं च तत्त्रिगुणतः साङ्ख्येष्टतत्त्वात्मकं
केनापि त्रिपदात्मकेन च चतुर्विंशत्युपात्तैर्दलैः ॥
गायत्र्याः सकलाक्षराणि च पुनः पूर्वादितो दिक्क्रमात्
सँल्लिख्यानि तदष्टकेसरपदे चक्रे समन्ताहितम् ॥२३॥

॥ यन्त्रे गायत्रीमन्त्राक्षरविन्यासः ॥

बिन्दौ स्यात् प्रणवस्त्रिकोणसदने ता भूर्भुवः स्वः पुनः
गायत्री त्रिपदा पराक्षरमयी न्यस्याऽत्र रेखात्रये ॥
षट्कोणेष्वपि तत् षडङ्गमुखतः क्लृप्ताश्च षड्भागशः
साष्टारेऽष्टविभागतोऽथ परितः स्यान्मातृकावेष्टनम् ॥२४॥

॥ कालचक्रात्मकं यन्त्रम् ॥

बिन्दुः सन् प्रथमः प्रजापतिरसौ संवत्सरात्मार्थकः
चक्रं चाद्यमृतुत्रयं द्वितयकं मासैश्चतुर्भिः समम् ॥
षट्कोणं च गुणाङ्कचक्रमृतुभिः कालोर्मिभिः शक्तिभिः
साष्टारं परमादितेयरुचितं दिग्दैवतैर्भूपुरम् ॥२५॥

---

* यन्त्रस्य तान्त्रिकार्थसङ्केतितत्वात् तदिदं प्रतीकरूपेण समर्थितम् । प्रत्यक्षं यन्त्रं च एतत्कलान्ते दत्तम् ।

मन्त्रश्छान्दसवाक्परः श्रुतिमतां ज्ञानार्थको धीमतां
यन्त्रं तत् परसत्प्रतीकमपरं भावप्रधानार्थकम् ॥
तन्त्रं सद्विधितः प्रयोगमुखतः स्यात् कर्मयोगार्थकं
गायत्र्या सममन्वियात् त्रिकरणैर्योगैकतन्त्रार्थकम् ॥२६॥

"देवस्य सवितुर्वयम्" इति विश्वामित्रः सविता गायत्री ॥
( ऋ० मं० ३, ६२, ११ )

"देवस्य सवितुर्वयं वाजयन्तः पुरन्ध्या ।
भगस्य रातिमीमहे ॥

॥ पदपाठः ॥

"देवस्य । सवितुः । वयं । वाजऽयन्तः । पुरम्ऽध्या ॥
भगस्य । रातिं । ईमहे ॥

॥ कल्पलता ॥

देवस्येह परस्य तस्य सवितुः शक्त्या पुरन्ध्या धिया
विश्वेषामपि भूत-जीव-जगतां सञ्जीवनाधारया ॥
जीवन्तो भुवि भास्वतो भगवतः सञ्चेतनाधारया
प्रेप्सामः सकलार्थदस्य भवतो दानं निजाधारया ॥२७॥

ऐश्वर्यं हि भगस्य तस्य सवितुः षाड्गुण्यपूर्णं महत्
प्राप्तिस्तस्य चिदात्मनः सुतपसा धीयोगतोऽनुग्रहात् ॥
ज्ञानाद् भावनया कृतेश्च महसा गायत्रिमन्त्राश्रयाच्
छक्तिः शान्तिरथो विरक्ति-विरती भक्तिश्च मुक्तिः श्रियः ॥२८॥

"देवं नरः सवितारम्" इति विश्वामित्रः सविता गायत्री ॥
( ऋ० मं० ३, ६२, १२)

"देवं नरः सवितारं विप्रा यज्ञैः सुवृक्तिभिः ।
नमस्यन्ति धियेषिताः ॥

॥ पदपाठः ॥

"देवं । नरः । सवितारं । विप्राः । यज्ञैः । सुवृक्तिऽभिः ।
नमस्यन्ति । धिया । इषिताः ॥

॥ कल्पलता ॥

देवं तं सवितारमात्मरसदं विप्रा नरो ज्ञानिनो
धीयोगात् परयज्ञसाधनमुखात् सर्वेन्द्रियावर्जकात् ॥

सूर्येणेरितया धिया प्रणिहिताः सच्छान्तिसत्त्वाप्तये
हृद्योगात् समुपासते प्रतिदिनं भूयो नमस्यन्ति ते ॥२९॥

यज्ञैर्योगपरैश्च सन्नियमकैस्तद्धीन्द्रियावर्जकैः
संविद्-भावन-कर्मसत्त्वसहितैः श्रद्धामयैर्धीन्द्रियैः ॥
सन्ध्यासु प्रतिनिष्ठया सुतपसा संवित्क्रियोपासनैः
सन्ध्यावन्दनमाचरेत् प्रतिदिनं गायत्रिमन्त्राश्रयात् ॥३०॥

गायत्र्याः सदुपास्तिसाधनकृते सद्देशकालादिकं
श्रेयः सिद्धिसमृद्धिसम्पदुदये भूयो भवेद्धेतुकम् ॥
एकान्ते च तपोवनेऽद्रिशिखरे तत्कन्दरोपान्तरे
गोष्ठेऽग्न्यादिकसन्निधौ च सरिदां तीरे तथा सङ्गमे ॥३१॥

दिव्योषःकिरणैः प्रशान्तिकरणैर्ब्राह्मीमुहूर्तोदये
मध्याह्ने निजमूर्धगे सवितरि प्रत्यञ्चि च सन्ध्योदये ॥
प्राणायाममुखात् समन्त्रकमुखान्मध्येऽर्धरात्रे पुनः
गायत्र्याः प्रजपेन सिध्यति समं सूर्येन्दुयोगग्रहे ॥३२॥

इति पञ्चमी कला
समाप्ता

## ॥ षष्ठी कला ॥ ( ६ )

### ॥ पुराकल्पे स्त्रीणां गायत्रीमन्त्रोपदेशसत्त्वम् ॥

लोके स्त्री-पुरुषौ समार्धवपुषौ हृद्योगतो दम्पती
नाके शक्ति-शिवौ च मातृ-पितरौ तौ क्षेत्रबीजात्मकौ ॥
स्त्री वामा रससोमसत्त्वनयना क्षेत्रात्मिका रस्यभूः
दक्षस्तैजसदिव्यसूर्यनयनो बीजात्मकः पूरुषः ॥ १ ॥

सूर्याचन्द्रमसाविव प्रभवतस्तेजोरसैकात्मकौ
बीजक्षेत्रमयौ स्वसन्ततिमुखाद् विश्वैकसञ्चालकौ ॥
सृष्टेराप्रलयं समानकलया स्यातां मिथः सङ्गतौ
शक्तौ स्त्रीपुरुषौ समस्तविषये प्रापञ्चिकेऽर्थेऽन्वितौ ॥ २ ॥

वेदाद् दिव्यसुसंस्कृतेः प्रगतितो दिव्यद्विजत्वाप्तये
साजात्येन च वेदधर्ममुखतो ब्राह्मीविवाहादिभिः ॥
योगाद् यज्ञकृतेः कृते व्रतमुखाद् (ब्राह्मी) धर्मप्रजासिद्धये
प्राधान्यादुपनायनं तदुभयोः स्याद् वैदिकी संस्कृतिः ॥ ३ ॥

### ॥ ब्रह्मवादिनी ॥

गायत्र्याः परवेदमन्त्रमुखतो ब्रह्मोपदेशात् स्त्रियः
स्वाध्यायाध्ययनाद् धियां सुनियमात् सद्ब्रह्मचर्यव्रतात् ॥
ज्ञानान्मानवती हृदा च वयसा प्रौढा सुविद्यादिना
पश्चादेव विवाहतश्च गृहिणी स्याद् ब्रह्मवादिन्यसौ ॥ ४ ॥

### ॥ सद्यो वधूः ॥

पूर्वं शास्त्रविधेः कृतोपनयना ब्रह्मोपदेशादिना
वेदादेर्व्रतधारणात् सुनियता सद्यो वधूः सा भवेत् ॥
उद्वाहात् सहचारिणी स्वपतिना यज्ञादिधर्माश्रयात्
पश्चाद् वेदमुखेन चाभ्यसनतस्तिष्ठेद् गृहस्थाश्रमे ॥ ५ ॥

### ॥ आक्षेपः ॥

नारीणामुपनायसंस्कृतिरियं नास्त्येव सर्वात्मना
नो वेदाद्यधिकारसत्त्वमुचितं नो देवयज्ञादिकम् ॥
पत्युः सद्वचनात् तथाऽनुसरणात् सेवैव सर्वार्थदा
प्रत्यक्षं भुवि तत् प्रपञ्चविषये शास्त्रीयसत्साधनम् ॥ ६ ॥

॥ समाधानम् ॥

सेवायाः सुविधानतः प्रथमतः संस्कारहानिः कथं
संस्कारादिह वैदिकोपनयनात् सिद्धे द्विजत्वे ततः ॥
उद्वाहेन तयोर्मिथः सहृदयाज् जायापतित्वे स्थिते
पश्चादेव विधेर्भवेन्नियमतः पत्युश्च सेवा गतिः ॥ ७ ॥

॥ पुराकल्पे तु नारीणामुपनयनम् ॥

नारीणामपि चेष्यते भुवि पुराकल्पे श्रुतेः संस्कृतिर्
मौञ्जीबन्धनतस्तथोपनयनं सद्धर्मसंसाधनम् ॥
गायत्र्याः परवेदमन्त्रमुखतो ब्रह्मोपदेशः परः
स्याद् वेदाध्ययनादिकं श्रुतिमुखात् सर्वं समानं स्त्रियः ॥ ८ ॥

तत्रापीप्सितवर्तमानकृतितो योगेन सत्प्रत्ययात्
सत्त्वात् सन्ततमिष्यते द्विजकुले तत् सार्वकालोचितम् ॥
संस्काराकरणं गुणादिकरणं स्यादित्यपि भ्रान्तिजं
यत् पुंसामपि तत् समानमुचितं सद्वेदसत्त्वादिकम् ॥ ९ ॥

एवं सत्यपि नेष्यते सुमतिभिः श्रद्धालुभिर्वैदिकैर्
विद्वद्भिश्च सनातनैः श्रुतिपरैः सद्धर्मकर्मार्थिभिः ॥
धर्मोऽयं हि सनातनः श्रुतिपरो युक्तोऽत्र सर्वाश्रये
सद्धर्माचरणे च देवयजने धर्मप्रजासिद्धये ॥१०॥

॥ प्रकारान्तरेण समाधानान्तरम् ॥

यद्येवं कृतितः पुरा प्रचलितादासीदिति प्रोच्यते
तत् केन प्रतिषिद्धमाचरणतः कस्मादकस्मात् कथम् ॥
स्मृत्यादौ च कलौ निषिद्धविषये कुत्रापि नो दृश्यते
शास्त्रेषु प्रतिमृग्यमेव वचनं नाद्यापि तल्लभ्यते ॥११॥

॥ अवान्तराक्षेपसमर्थनम् ॥

तत् केचित् पुनराहुरान्तरदृशा साक्षान्मतिप्रत्ययात्
स्त्रीणां तत्र रजस्वलादिसमये गर्भे प्रसूत्यादिके ॥
आशौचात् प्रतिबन्धनादनुचितात् कर्तुं ह्यशक्यात्पुरा
केनापि प्रतिषिद्धमेतदखिलं तद् वेदधर्मादिकम् ॥१२॥

नैतद् युक्तिसहं प्रयुक्तवचनं न स्यात् प्रमाणास्पदं
नित्यं तत्तु समानमेव सकलं कल्पान्तरेऽपि स्थितम् ॥
संस्कारेषु तदेकमेव हि कथं स्यात् सर्वथा बाधकं
संस्काराद् रहिता तु धर्मकरणे सा स्त्री कथं युज्यते ॥१३॥

पुंसां स्त्री सुखदा समस्तविषये योगे च भोगे प्रिया
पाकादौ निजगेहकृत्यकरणे सेवासु सन्तानके ॥
सद्धर्मे परसत्त्वशुद्धिमुखतो देवाधियज्ञादिके
सर्वेष्टेयमसंस्कृताऽपि च कथं नारी समर्था भवेत् ॥१४॥

## ॥ पुराकल्पस्य वास्तविकं अर्थान्तरम् ॥

सच्छास्त्रादिह वस्तुतस्तु स पुराकल्पः स्मृतेः श्रावितः
तस्याः पूर्वतनः पुरातनतमः श्रौतः सकल्पो भवेत् ॥
श्रौते यज्ञमुखे सदा श्रुतिविदां स्त्रीणां च यज्ञार्हता
तासां वैदिकसंस्कृतेः प्रगतितो वैशिष्ट्यसत्त्वोर्जिता ॥१५॥

स्त्रीणां पत्युरसन्निधावपि समं स्यान्नित्यहोमादिकं
दर्शादीष्टिमुखे तु देवयजनं तद्वेदमन्त्रादिभिः ॥
श्रौतेऽग्नौ विहितं व्रतादिहवनं मन्त्रैर्हविःसाधनं
श्रौते कर्मणि सम्प्रवृत्तिरुचिता सम्प्रत्यपि स्यात् समा ॥१६॥

आज्यावेक्षणयोक्तृबन्धनविधौ भूयस्त्वसम्पत्तये
तन्मन्त्रैरनुमन्त्रणं श्रुतिविधेरद्याप्यनुष्ठीयते ॥
सिद्धाः "सुप्रजसो वयं" गृहपतेः पत्न्योऽध्वरे सादराद्
"अग्निं त्वामुपसेदिमेति" वचनं श्रौतं यजुर्मन्त्रकम् ॥१७॥

नारीणामुपनायनं श्रुतिमुखान्नास्तीति वै स्वस्मृतेर्
नित्यं सम्प्रति बोधयन् निजमुखात् तद् याज्ञवल्क्यो मुनिः ॥
मैत्रेय्यै परसंविदोपनिषदा "द्रष्टव्य आत्मेति" वै
मैत्रीभावत आदिदेश परमं तत्त्वं भवान् वेदवित् ॥१८॥

राज्ञः श्रीजनकस्य सत्रयजने विद्वत्सभासम्मुखे
भूयो ब्रह्मविदः परीक्षणकृते वृत्ते विवादोन्मुखे ॥
गार्ग्यै तत् परमं निजोपनिषदां तत्तोपदेशात् स्वयं
ब्रह्मैवाक्षरवस्तुसत्यममृतं सम्बोधयामास सः ॥१९॥

प्राचीनास्तु ऋषिस्त्रियः श्रुतिविदस्ता ब्रह्मवादे रता
मन्त्राणामपि दर्शनेन ऋषिका गोधा च घोषादयः ॥
तासां वैदिकमन्त्र-सूक्तनिचयास्तत्त्वादिबोधोच्चया
ऋग्वेदे बहुधा श्रुता बहुमता मन्वादिदृष्टैः समाः ॥२०॥

## ॥ पुनराक्षेपः ॥

तस्मिन् ब्राह्मणमष्टवर्षमिति वै पुँल्लिङ्गनिर्देशतः
स्त्रीणां नास्त्यधिकार इत्यपि पुनः केचिद्वदन्ति श्रुतेः ॥

इत्थं चेत् कथमिष्यते खलु पुराकल्पे तु तस्य स्थितेर्
नो लिङ्गादिकमत्र कारणपदं वर्णप्रधानार्थकम् ॥२१॥

तद्वद् वै नरके भवेन्निपतनं मन्त्रोपदेष्टुः स्त्रियां
नश्येन्मन्त्रगदिव्यशक्तिरिति तत् स्याद् देवयान्यामिव ॥
स्त्रीणां वै श्रुतिगोचरैव न भवेत् सा च त्रयीत्यादिकं
व्याख्यातं सकलं पुरैव हि पुराकल्पे तु तत्सत्त्वतः ॥२२॥

स्त्रीसंस्कारविधेस्तदोपनयनं तूष्णीममन्त्रात्मकं
प्रायश्चित्तिविधानपूर्वकमदः सद्भावतः कार्यते ॥
दीक्षार्थेन हि कण्ठसूत्रमपि तद् यज्ञाय सन्धार्यते
सोद्वाहाय यथा कथञ्चिदपि वा सत्संस्कृता भाव्यते ॥२३॥

यज्ञादौ प्रतियोक्तृबन्धनमदो मौञ्जीपरं गम्यते
श्रौतत्वाय समन्त्रकं सुविहितं तद्योग्यतासिद्धये ॥
पत्युः श्राद्धकृते धृतं विधवया पाथेयवस्त्रात्मकं
स्यात् सव्यादपसव्यतश्चकरणाद् यज्ञोपवीतार्थकम् ॥२४॥

अन्त्येष्टिः क्रियते स्त्रियामपि विधेस्तैर्वेदमन्त्रैर्यदा
श्रौतेऽग्नौ विहितं शरीरहवनं पुंसामिव स्यात् समम् ॥
यस्यास्तच्छवदाहसंस्कृतिकृते मन्त्रः श्रितो वैदिको
जीवन्त्यास्तु न चाधिकार इति हा ? तच्छोचनीयं सताम् ॥२५॥

एवं सत्यपि तत्र वेदविदुषां भयोऽभिमानो वृथा
न स्त्रीणामुपनायनाद्यनुमतिर्नो वेदविद्योन्नतिः ॥
हा ! हन्त ! प्रतिपातिताश्च पुरुषैस्तन्मातरस्ताः स्त्रिय
भूयो वैदिकसंस्कृतेरपहृतेस्ताः शूद्रवद् भाविताः ॥२६॥

याश्छन्दोभिरसंस्कृतोपनयनाः शूद्रत्वमापादिताः
तासामेव शरीरतः पुनरिमे पुत्राः प्रजाताः समे ॥
शूद्रा एव भवन्ति सर्वगुणतस्तेक्षेत्रसत्त्वान्विताः
सर्वं क्षेत्रगुणान्वितं समुदियाद् बीजानुरूपं फलम् ॥२७॥

गार्भैर्होममुखैः सुसंस्कृतिपरैस्तैर्जातकर्मादिभिश्
चूडाकर्ममुखात् तथोपनयनाद् यज्ञैर्महायज्ञतः ॥
ब्राह्मीयं क्रियते तनुः सुकृतिभिर्वेदादिभिः संस्कृतेर्
एकस्मात् प्रमुखाद् इहोपनयनात् सर्वाः स्त्रियो वञ्चिताः ॥२८॥

तस्मादेव हि सम्प्रति प्रजनिताः सञ्जायमानाः समे
जायन्ते भुवि शूद्रवत् प्रकृतयः संस्कारतो वर्जिताः ॥

संस्कारेण हि वेदमन्त्रमुखतो भूयो द्विजत्वोदयाद्
ब्रह्म-क्षत्र-विशो भवन्ति सकला धर्मप्रजासिद्धये ।।२९।।

या कन्या उपनायनेन रहिता नैव द्विजाः स्युः पुनर्
नोद्वाहाय मता विनोपनयनं यज्ञार्हतां यान्ति ताः ।।
ता यज्ञादिककर्मणेऽनधिकृता जायापदे पूरुषैः
शस्यन्ते समसत्त्वतः सुमिलिता ब्राह्मोविवाहादिभिः ।।३०।।

एतद्दोषनिवारणे श्रुतिमुखात् स्वीयप्रजोद्धारणे
स्त्रीणामप्युपनायनं हि शरणं तद्वेदविद्यार्जनम् ।।
मातुः क्षेत्रविशुद्धसत्त्वमहसा सत्सन्ततेर्योगतः
स्यात् सर्वाभ्युदयैकयोगकरणं सा वैदिकी संस्कृतिः ।।३१।।

तस्माच्छास्त्रदृशा विमर्शनदृशा सद्यो वधूयोगतः
स्यादुद्वाहविधौ सहोपनयनं सत्संस्कृतेः कारणम् ।।
तस्यैवाकरणं गुणाभ्युदयदं न स्यात् स्त्रियां सर्वथा
गायत्र्येव हि सर्वसिद्धिकरणे शक्ताऽखिलोद्धारणे ।।३२।।

इति षष्ठी कला
सम्पूर्णा

## ॥ सप्तमी कला सरस्वती ( ७ )

"पावका नः सरस्वती" इति तृचस्य मधुच्छन्दा वैश्वामित्र ऋषिः सरस्वती देवता गायत्री छन्दः ।

॥ मधुच्छन्दा ऋषिः ॥

छन्दो यस्य भवेत् प्रियं मधुमयं गायत्रमिष्टार्थकं
छान्दस्यं मधु सुस्वरं समरसं सत्सामगानार्थकम् ॥
छन्दोदर्शनतः स ऋङ्मुखपरः सन्निन्द्र एव स्वयं
छन्दोवर्षणतः समूर्जति मधुश्छन्दा ऋषिः स्यादयम् ॥ १ ॥

तस्मादिन्द्रमुखेन तत् प्रथमतो विश्वाधिविद्यामुखात्
तस्याग्नेर्मुखतः प्रपन्नमहसा गायत्रसच्छन्दसा ॥
ऋग्वेदस्य समग्रवेदरसतः सामस्वरैकान्वयात्
प्रारम्भः परजातवेदसि हिताद् विश्वादिमित्रात्मनः ॥ २ ॥

माधुश्छन्दसदर्शने तृचमिदं वाग्देवतातत्त्वकं
सद्ब्रह्मात्मकमन्त्रदर्शनमदः प्रत्यक् तपः सत्त्वकम् ॥
हृद्योगेन हि वाग्रसेन मधुना स्वच्छन्दसोऽन्तर्दृशा
साक्षादेव महान् ऋषिः समभवद् वाग्ब्रह्मणः सन्दृशा ॥ ३ ॥

॥ प्रथमा ऋक् ॥

"पावका नः सरस्वती वाजेभिर्वाजिनीवती ॥
यज्ञं वष्टु धियावसुः ॥

( ऋ० सं० मं० १, सू० ३, ऋक्० १० )

॥ पदपाठः ॥

"पावका । नः । सरस्वती । वाजेभिः । वाजिनीऽवती ॥
यज्ञं । वष्टु । धियाऽवसुः ॥

### ॥ कल्पलता ॥

॥ सरस्वती ॥

॥ सामान्यतः सरस्वती शब्दार्थः ॥

स्वारस्याद् रसयत्यलं स्वनिरतान् ब्रह्मात्मसत्त्वान्वयं
सामर्थ्येन समर्थयत्यनुपदं ब्रह्मादि सर्वं स्वयम् ॥

सिद्धा वागिह सस्वरा समरसा सद्ब्रह्मणा स्वात्मना
संवित्तेऽत्र सरस्वती निजचिता संवेदयत्यात्मना ॥ ४ ॥

## ॥ अधिभूतम् ॥

### ॥ दिव्यरसात्मिका सरस्वती ॥

ऊर्ध्वं व्योमनि दिव्यसद्रसमयी ज्योतिः सुविद्युन्मयी
विद्युज्ज्यौतिषमेघसद्रसमयी पर्जन्यधारामयी ॥
जीवानामिह सर्वसिद्धिसदने ज्ञाने च सञ्जीवने
सर्वाधारतमा समाश्रयपदा वाक् सर्वसम्भावने ॥ ५ ॥

### ॥ सरस्वान् सूर्यः-तत्सती सरस्वती ॥

तेजस्वान् दिवि तेजसा परितपन् सूर्यः सरस्वान् रसैर्
दिव्यास्ताः सरसा अपः स्वकिरणैर्नित्यं दधात्यम्बरे ॥
भूयो वृष्टिमुखेन ताः सुवितरन् त्सन्तर्पयन् प्राणिनः
शक्तिस्तस्य सरस्वती विजयते तेजोरसैकात्मिका ॥ ६ ॥

### ॥ दिव्यशब्दात्मिका सरस्वती ॥

तद्वद् व्योमनि शब्दशक्तिरुदगात् सा व्योमतन्मात्रया
तद्योगेन सरस्वती स्वरवती शब्दायते विद्युता ॥
इन्द्रस्ताश्च सरस्वतीः पुनरपः संवर्षयन् गर्जयन्
गर्जन्तीन्द्रसमीरिता सुरसरित् सा वर्षतीन्द्रात्मना ॥ ७ ॥

### ॥ सरिद्रूपा सरस्वती ॥

श्रीगङ्गायमुनाख्ययोः सुसरिदोः सश्वेत-कृष्णात्मनोः
सत्सन्धौ तु सरस्वती प्रवहति स्याद् गुप्तगामिन्यसौ ॥
तद्योगोर्मिचिदात्मसस्वररसे वाक्-प्राण-चित्तोद्रसे
मज्जँस्तत्र विलीयते भुवि नरो दिव्यामृतत्वे रसे ॥ ८ ॥

एकैवात्र सरस्वती रसवती शुद्धात्मना सोद्यती
संवित्सन्ततधारय्याऽऽत्मरसतः सञ्चेतते संयती ॥
चित्सत्त्वेन गिरिभ्य आन्तरतमा स्यादासमुद्राद् यती
नित्यं चेतयतीह सर्वजनतां विश्वं जगद् वैद्युती ॥ ९ ॥

## ॥ अधिदैवतम् ॥

दिव्यात्मैव सरस्वती तनुभृतां वाग्देवतात्माऽक्षरा
सेव्या सर्वसुखाप्तये त्रिजगतां मात्रात्मिका चित्स्वरा ॥
आव्या तत्परवस्तुसंविदुदये सा दिव्यशक्तिप्रदा
श्रेयः साधनदिव्यसम्पदुदये निःश्रेयसैकार्थदा ॥१०॥

दिव्यज्ञानरसस्वरैकवदना वाग् विश्वविद्योत्तमा
नित्यं संवितरत्यजस्रवचना स्वं ज्ञानसत्त्वं समा ॥
ज्ञानं जीवनमप्यलं स्वररसैः सा चेतयन्ती विदा
छन्दः संहितमन्त्रवेदवदना सम्राजते सर्वदा ॥११॥

॥ अध्यात्मम् ॥

आत्मन्यन्तरनन्तरा सुरसना स्वान्तःस्वरैः सद्रसैर्
मूलाधारपदे स्थिता हृदि रता मूर्ध्नीह वक्त्रेऽञ्चिता ॥
वाग् देवी तु चतुष्पदी त्रिकरणैः सा चेतनेनान्विता
संवित्कामकृतीष्टचित्सुवदना शक्तिः सरस्वत्यसौ ॥१२॥

देहे मूर्धनि सोमसद्रसयुता सिद्धा मनः सत्त्वका
स्वात्मन्यन्तरनाहता सुनिनदा हृन्मात्रचित्यात्मिका ॥
सर्वेषां रसनाग्रसस्वररसा सा वाङ्मनःप्राणगा
सद्वक्त्रेषु सरस्वती प्रतिलसेन्मूर्ध्नोऽवतीर्णाऽऽत्मना ॥१३॥

॥ पावका ॥

दिव्यात्मा दिवि पावका परचितेरादित्यचिद्वैद्युती
भूमौ पावकवद् भुवः पवनवत् सा पावयित्र्यूर्जिता ॥
पापक्षालनतश्च तद्दहनतः पापात्मनां पावनी
बाह्याभ्यन्तरसर्वदोषहननाद् वाग् विश्वसञ्जीवनी ॥१४॥

अज्ञानादिकदोषजातमखिलं सा निर्दहन्ती स्वयं
प्रज्ञानाद्युपदेशतस्तनुभृतां वाक्चेततेऽर्थान्वियम् ॥
मोहभ्रान्तितमोभयादि समलं सा वारयन्ती धियां
स्वज्योतिः किरणेन वाग्रसचिता संशोधयन्ती सताम् ॥१५॥

॥ सरस्वती ॥

वागेवात्र सरस्वती रसवती सा भूतमात्रावती
भूतात्मा च पयस्वती हिमवती विद्युत्सुतेजस्वती ॥
सृत्या सैव सरिद्वती प्रवहति प्राणात्ममात्रावती
सर्वेषां रसनाग्रगा सुवचसा योगेन साऽऽत्मन्वती ॥१६॥

॥ ज्ञानरूपा सरस्वती ॥

बाह्यान्तर्यसमस्तवस्तुसदना सर्वार्थसंसाधना
प्रेमानन्दमधुप्रशान्तिवदना दुःखादिसम्बाधना ॥
गत्यर्थेन च संविदर्थवचना प्रज्ञानभावायना
सर्वज्ञैव सरस्वती रसगुणा वाक् चेतनैकायना ॥१७॥

॥ वाजेभिर्वाजिनीवती ॥

वाजोऽन्नं भुवि जीवनादिकरणं तेनैव वाग् वाजिनी
वृष्टया तज्जलतेजसोः सुकरणात् प्राणात्मसञ्जीवनी ॥
चिज्ज्योतीरसशक्तिरादिकरणा वागेव सा तद्वती
सर्वान् नः प्रतिजीवयेत् स्वरसतः सर्वार्थसंविद्वती ॥१८॥

वाजो वाजति वायुवत् प्रवहति व्याप्नोति तद् विश्वतो
विश्वं वाजयति प्रचेतनकृतेः संविक्रियाशक्तितः ॥
चिज्ज्योतीरसपूर्णसूर्यकिरणैर्दिव्यैः स्वसत्त्वैः समैर्
वाजी सोऽत्र हि वाजिनी चितिमयी वाग् वाजिनीवत्यसौ ॥१९॥

॥ धियावसुः ॥

वाग्वैवं सैव धिया वसुः समुदिता धीभिः सहान्तःस्थितेर्
धीरूपाऽपि च सर्वधीन्द्रियपरा सा संवसन्ती चितेः ॥
संविद्रूपतयैव सर्वकरणैः सर्वक्रियाशक्तिका
चिद्योगेन सदैव सञ्चरति सा सर्वेन्द्रियैः सक्रियैः ॥२०॥

॥ यज्ञं वष्टु ॥

यज्ञात्मन्युपसंहिता यजनकृद् यज्ञाविधीप्रेरणाद्
यज्ञैर्यज्ञकृते च तत्प्रतिफलं भूयो ददात्यादरात् ॥
यज्ञं वाग् वहतु प्रभोर्निजपतेः सद्यः प्रसादाय नो
नित्यं कामयतां प्रकाशयतु सा तद्वद्धियोगात्पुनः ॥२१॥

॥ द्वितीया ऋक् ॥

"चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ॥
यज्ञं दधे सरस्वती ॥

॥ पदपाठः ॥

"चोदयित्री । सूनृतानां । चेतन्ती । सुऽमतीनाम् ॥
यज्ञं । दधे । सरस्वती ॥

॥ कल्पलता ॥

॥ चोदयित्री सूनृतानाम् ॥

वाग्वै वाचकशब्दशक्तिकरणात् सा ब्रह्मसञ्चोदनी
सर्वार्थादिसमर्थनैककरणाद् बुध्यादिसञ्चोदनी ॥
सत्यासत्यविमर्शनैककरणात् सत्यैकसंशोधिनी
सत्यानां परसत्यवस्तुवचसां वाचां स्वयं बोधिनी ॥२२॥

॥ चेतन्ती सुमतीनाम् ॥

सत्यात्मैव सरस्वती निजधियां सञ्चोदयन्तीक्षणात्
तासामन्तरनन्तसत्त्ववचना सञ्चेतते साक्षिणी ॥
ज्ञानेच्छाकृतिचित्तिशक्तिवदना सञ्चेष्टमानेक्षणा
सर्वं चेतयतीह सर्वकरणैः प्रत्येति सन्धारणात् ॥२३॥

॥ यज्ञं दधे सरस्वती ॥

विश्वं सन्दधती स्वशक्तिमुखतः सा विश्वसञ्चालिका
विश्वेषां सुहिते प्रबोधमुखतः सा विश्ववित् पालिका ॥
ज्ञानेनैव समिज्यते प्रतिपदैर्वाग् यज्ञसम्पादिका
यज्ञायैव समिध्यते सुमतिभिर्यज्ञात्मसम्प्रापिका ॥२४॥

सर्वोऽप्यत्र स यज्ञ एव हि महान् सद्धर्मतत्त्वान्वयात्
संसिद्धः सम ईश-जीव-जगतां सेवाविसत्त्वाश्रयात् ॥
वागेवात्र तु धर्म-यज्ञमखिलं निर्वर्तयत्यात्मना
सन्धत्तेऽखिलविश्वधारणबलं योगेन यज्ञात्मना ॥२५॥

॥ तृतीया ऋक् ॥

"महो अर्णः सरस्वती प्रचेतयति केतुना ॥
धियो विश्वा विराजति ॥१२॥

॥ पदपाठः ॥

"महः । अर्णः । सरस्वती । प्रचेतयति । केतुना
धियः । विश्वाः । वि । राजति ॥

॥ कल्पलता ॥ ( "महोअर्णः सरस्वती" ) ॥

तेजस्तत्र महामहोरसनिधिः पूर्णः प्रकाशोदधिः
प्रत्यक्षः परमार्थरत्नजलधिर्वेदादिविद्यानिधिः ॥
सर्वार्थैकसमर्थवाग्रसनिधिः स्वानन्दरस्योदधिः
पूर्णात्मैव सरस्वती निरवधिर्ब्रह्मात्मसंविन्निधिः ॥२६॥

विस्तीर्णो महसा स्वरेण रसतो व्योम्नि प्रपूर्णोऽर्णवः
चित्पूर्णः परमात्मनि स्वपुरुषे पूर्णात्मवागर्णवः ॥
सर्वेष्वात्मसु जन्तु-जीवपुरुषेष्वन्तः प्रचेतोर्णवः
स्यान् मूले हृदये च मूर्धि वदने चिन्नादरस्यार्णवः ॥२७॥

॥ प्रचेतयति केतुना ॥

हृद्योगेन सरस्वती स्वरचिता सा केतुना प्रज्ञया
मूर्धज्यौतिषसोमसद्रसचिता वाचा परात्माज्ञया ॥
सर्वान् स्वान् पुरुषान् प्रचेतयति सा सद्ब्रह्मणोऽनुज्ञया
स्वे स्वे कर्मणि तान् प्रवर्तयति सा चित्या निजाभिज्ञया ॥२८॥

वर्तन्तेऽत्र सदा समस्तमनुजाः सच्छ्रद्धया सद्धिया
सद्धर्मेष्वखिलान् त्समीरयति सा सद्ब्रह्मवेदाज्ञया ॥
सर्वान् योजयति स्वयं परहिते सा वेदवाचाऽऽज्ञया
युक्तानुद्धरति स्वसामरसतः स्वाध्यात्मसद्विद्यया ॥२९॥

॥ धियो विश्वा विराजति ॥

प्रत्यञ्च्यात्मनि संहिता परतरे ब्रह्मण्यखण्डात्मना
वागेवाहमिति स्फुरत्यवगतेरन्तर्हिता चेतना ॥
शक्तिः सैव सनातना (ऽऽ)त्मवचना सा वाक् समानाऽऽत्मना
सत्या वाचकरूपिणी विजयते वाच्यार्थसद्वस्तुना ॥३०॥

शक्तिः सा परमात्मनश्चितिमुखा संवित्क्रियेच्छोन्मुखा
साऽहं स्फूर्तिमुखा रसस्वरमुखा प्रत्यङ्मुखा वाङ्मुखा ॥
सा विश्वाः स्वधियः प्रचेतनमुखाः सञ्चेतयत्युन्मुखाः
संवित्ते सुविराजयत्यभिमुखाः सम्राजते सन्मुखा ॥३१॥

प्राणैः स्वैः सह सप्तभिः समधिया सा संविदानाऽऽत्मना
संवेद्याऽखिलवृत्तिभिः समपदा वाग् अष्टमी ब्रह्मणा ॥
तैरन्तर्निहिता समैकसदना नैवानुषक्ताऽखिलैः
सर्वात्मैव सरस्वती समुदगाद् एका समाना समैः ॥३२॥

॥ इति सप्तमी कला ॥

सम्पूर्णा

## ॥ अष्टमी कला ॥ ( ८ )

### ॥ तिस्रो देव्यः सरस्वती इला भारत्यः ॥

**"इला सरस्वती मही" इति मेधातिथिः काण्वऋषिः ।**
**इला सरस्वती मह्यः तिस्रो देव्यो देवताः गायत्रीछन्दः ॥**

( १ ) ( ऋ० सं० मं० १, सू० १३, ऋक्० ९ )

"इळा सरस्वती मही तिस्रो देवीर्मयो भुवः ॥
बर्हिः सीदन्त्वस्रिधः ॥

॥ पदपाठः ॥

"इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ॥
बर्हिः । सीदन्तु । अस्रिधः ॥

( २ )

**"इळा सरस्वती मही" इति वसुश्रुतः आत्रेयः ऋषिः ।**
**इळा सरस्वती मह्यः तिस्रो देव्यो देवताः । गायत्रीछन्दः ॥**

( ऋ० मं० ५, ११, ८ )

"इळा सरस्वती मही तिस्रो देवीर्मयो भुवः ॥
बर्हिः सीदन्त्वस्रिधः ॥

॥ पदपाठः ॥

"इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ॥
बर्हिः । सीदन्तु । अस्रिधः ॥

( ३ )

**"भारतीळे सरस्वति" इति अगस्त्यो मैत्रावरुणिः ऋषिः ।**
**तिस्रो देव्यः भारतीळा सरस्वत्यो देवताः । गायत्रीछन्दः ॥**

( ऋ० मं० १ । १८८ । ८ )

"भारतीळे सरस्वति या वः सर्वा उपब्रुवे ॥
ता नश्चोदयत श्रिये ॥

॥ पदपाठः ॥

''भारति । इळे । सरस्वति । याः । वः । सर्वाः । उप । ब्रुवे ॥
ताः । नः । चोदयत । श्रिये ॥

( ४ )

"शुचिर्देवेष्वर्पिता" इति दीर्घतमाः मामतेयः औचथ्यः ऋषिः ।
तिस्रो देव्यः भारतीळासरस्वत्यो देवताः अनुष्टुप् छन्दः ॥

( ऋ० मं० १, १४२, ९ )

''शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती ॥
इळा सरस्वती मही बर्हिः सीदन्तु यज्ञियाः ॥९॥

॥ पदपाठः ॥

''शुचिः । देवेषु । अर्पिता । होत्रा । मरुऽत्सु । भारती ॥
इळा । सरस्वती । मही । बर्हिः । सीदन्तु । यज्ञियाः ॥९॥

( ५ )

"भारतीपवमानस्य" इति काश्यपः असितो देवलो वा ऋषिः । तिस्रो देव्यः भारती-सरस्वतीळाः देवताः । अनुष्टुप्छन्दः ।

( ऋ० मं० ९, ५, ८ )

''भारती पवमानस्य सरस्वतीळा मही ॥
इमं नो यज्ञमा गमन् तिस्रो देवीः सुपेशसः ॥८॥

॥ पदपाठः ॥

''भारती । पवमानस्य । सरस्वती । इळा । मही ॥
इमं । नः । यज्ञं । आ । अगमन् । तिस्रः । देवीः । सुऽपेशसः ॥८॥

( ६ )

सरस्वती साधयन्ती धियं नः" इति गृत्समदः आङ्गिरसः ऋषिः । तिस्रो देव्यः सरस्वतीळाभारत्यो देवताः । त्रिष्टुप्छन्दः ।

( ऋ० मं० २, ~~४~~ ३/८ )

''सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः ॥
तिस्रो देवीः स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्य ॥

॥ पदपाठः ॥

"सरस्वती । साधयन्ती । धियं । नः । इळा । देवी । भारती । विश्वऽतूर्तिः ॥
तिस्रः । देवीः । स्वधया । बर्हिः । आ । इदं । अच्छिद्रं । पान्तु । शरणं । निऽसद्य ॥

( ७ )

"आ भारती भारतीभिः सजोषा" इति विश्वामित्रः गाधिपुत्रः ऋषिः । तिस्रो देव्यः भारतीळासरस्वत्यो देवताः । त्रिष्टुप् छन्दः । ( ऋ० मं० ३, ४, ८ )

"आभारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ॥
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरे दं सदन्तु ॥

॥ पदपाठः ॥

"आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ॥
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदं । सदन्तु ॥

( ८ )

"आ भारती भारतीभिः सजोषाः" इति वसिष्ठः मैत्रावरुणिः ऋषिः । तिस्रो देव्यः भारती सरस्वतीळाः देवताः । त्रिष्टुप् छन्दः । ( ऋ० मं० ७, २, ८ )

"आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ॥
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥८॥

॥ पदपाठः ॥

"आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ॥
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदं । सदन्तु ॥

( ९ )

"तिस्रो देवीर्बर्हिरिदं वरीयः" इति सुमित्रो वाध्र्यश्वः ऋषिः । तिस्रो देव्यः इळाद्याः देवताः । त्रिष्टुप्छन्दः । ( ऋ० मं० १०, ७०, ८ )

"तिस्रो देवीर्बर्हिरिदं वरीय आसीदत चकृमा वः स्योनम् ॥
मनुष्वद् यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषन्त ॥८॥

॥ पदपाठः ॥

"तिस्रः । देवीः । बर्हिः । इदं । वरीयः । आ । सीदत । चकृमा वः । स्योनन् ॥
मनुष्वत् । यज्ञं । सुऽधिता । हवींषि । इळा । देषी । घृतऽपदी । जुषन्त ॥८॥

( १० )

"आ नो यज्ञं भारती तु यमेतु" इति जमदग्निः भार्गवः, तत्सुतो वा रामः ऋषिः। तिस्रो देव्यः भारतीळा सरस्वत्यः देवताः। त्रिष्टुप् छन्दः। ११०।

( ऋ० मं० १०/८ )

"आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ॥
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥८॥

॥ पदपाठः ॥

"आ। नः। यज्ञं। भारती। तूयीं। एतु। इळा। मनुष्वत्। इह। चेतयन्ती ॥
तिस्रः। देवीः। बर्हिः। आ। इदं। स्योनं। सरस्वती। सुऽअपसः। सदन्तु ॥

॥ तिस्रो देव्यः सरस्वतीळा भारत्यः ॥

॥ कल्पलता ॥

तिस्रो देव्य इति श्रुताः प्रकृतयो वाग्देवतामूर्तयः
तत्राद्या तु सरस्वती तत इला स्याद्भारतीत्यन्तिमा ॥
व्योम्न्यूर्ध्वं भुवि चान्तरिक्षसदने सूर्याग्निशक्रान्विताः
तत्तद्दैवततैजसाग्नितनवस्तन्नामरूपोदिताः ॥ १ ॥

## ॥ सरस्वती ॥ ( १ )

दिव्योऽसौ महसा सरन् स्वरसतः सूर्यः सरस्वान् त्स्वयं
तद्योगेन सरस्वतीयमुदगात् तेजोरसात्मान्वयम् ॥
स द्यावापृथिवी तदन्तरपदं व्याप्तः समस्तात्मना
सिद्धः स्थावरजङ्गमेषु विततः सर्वान्तरात्मा महान् ॥ २ ॥

तस्मादेव सरस्वती सुतपसा दिव्याग्निरूपोत्तमा
सैवाद्येह तिसृष्वसौ श्रुतिनुता देवीषु तत्त्वात् समा ॥
आप्रीसूक्तनुताः समिद्धमुखतो दीप्ताग्नितेजोमुखाः
वाचस्ताः पुनरग्नयोऽत्र दिविषद्भौमात्मविद्युन्मुखाः ॥ ३ ॥

## ॥ इला ॥ ( २ )

भूमिः सेयमिला निजाग्निसदना वागग्निचित्त्यानना
भौमाग्निप्रतिपन्नमर्त्यभुवना सा वाग् इलाऽग्निस्वना ॥
देवानामिह वेदयज्ञभवने होमादिळाह्वानगा
मर्त्यानामपि भोगभाजनपरा सात्सा पुरोडाशभाक् ॥ ४ ॥

इन्द्रः स्वात्मनि ताभिरेव हि महान् वाग्भिः शचीभिः समं
मर्त्यान् स्वाञ्ज्जगति प्रशास्ति भगवान् सञ्जीवयन् सान्वयम् ॥

शक्त्या मानवशासनीं त्रिजगतां वाचं समर्थामिलां
सर्वार्थेषु चकार साधनपरां साक्षात्प्रमाणानलाम् ॥ ५ ॥

॥ भारती ॥

या विद्युन्मरुदिन्द्ररुद्रमहसां भासा(ऽ)सुभाषा द्युतिः
योगात् सन्निरताऽन्तरिक्षसदने सा भारती वैद्युती ॥
भूयो मध्यमलोकदैवतसती भातीह भाषोद्यती
सिद्धा माध्यमिका सती भगवती वाग् देवता भारती ॥ ६ ॥

प्रायो व्युत्क्रमतः क्रमान्तरमुखादादाविळा भारती
पश्चादेव सरस्वतीति विततास्ता "भूर्भुवः स्वः क्रमात् ॥
प्रारम्भादपि मध्यतः प्रथमगा सा भारतीळा ततः
याऽन्ते सैव सरस्वती क्वचिदिमाः स्युर्भारतीळा मही ॥ ७ ॥

॥ तिस्रो देव्यः--इन्द्राणी-वरुणानी-अग्नायी च ॥

सेन्द्राणीन्द्ररताऽन्तरिक्षसदने वाग् भारती वैद्युती
व्योमस्था वरुणान्यसौ सवितृगा सारस्वती वारुणी ॥
साऽग्नायी पृथिवीपदेऽग्निवदना साऽग्नेःसती वाग् इळा
तिस्रो देव्य इमाः समाः सुविदितास्तन्नामरूपान्तराः ॥ ८ ॥

॥ अया (अयः) शया, रजा (रजः) शया, हरा (हरि) शया ॥

पृथ्वीस्था प्रथमाऽवमा पृथुतरा साऽया (अयः) अयाशया शयाऽग्नेस्तनूः
वैद्युत्येव रजा (रजः) रजाशया शयाऽनिलतनूः साऽप्यन्तरिक्षान्तरा ॥
व्योमस्था च हराशया हरिशया दिव्याग्नितेजस्तनूः
तिस्रस्ताः खलु रुद्रियाग्नितनवस्तच्छक्तिचिद्वाक्पराः ॥ ९ ॥

॥ तिस्रः विष्णोः तनवः त्रिभुवनस्थाः ॥

॥ अंहोमुक्, विमृधा, इन्द्रियावती ॥

आग्नेयी भुवि दोषमोचनकृतेरंहोमुग् आद्या तनूः
इन्द्रात्मा विमृधाऽन्तरिक्षसदना विद्युद् द्विषां मर्धनात् ॥
सूर्यात्मा सकलेन्द्रियप्रकृतिका दिव्येन्द्रियावत्यसौ
विष्णोस्तिस्र इमाः पराः सुतनवस्तेजःसुवाङ्मूर्तयः ॥१०॥

॥ तिस्रो देव्यः गायत्री-सावित्री-सरस्वत्यः ॥

सूर्योऽसौ सकलाधिपस्त्रिजगतां धर्ता पतिः प्राणिनां
सर्वेषां स निरन्तरोऽत्र जगतामात्माऽऽन्तरस्तस्थुषाम् ॥
तस्यैवास्य सरस्वतो रसवतो दिव्यस्य तेजस्वतः
वाक्छक्तिर्हि सरस्वती रसवती तेजस्वती भाः स्वरा ॥११॥

श्रीविष्णुः सवितैक एव हि महान् आत्मा परा देवता
त्रेधा विक्रमणात् पदानि निदधे वाचा स्वशक्त्या श्रिया ।।
पूर्णा दिव्यमृता त्रिपात् पुरुषगा प्रत्ना त्रिशक्त्यात्मिका
वाग् वै साऽपि चिदन्विता त्रिपदभृत् सम्राजते सर्वदा ।।१२।।

### ।। गायत्री-सावित्री-सरस्वती ।।

गायत्री प्रथमाऽत्र भूमिसदने ब्रह्माग्निशक्त्याऽवमा
सावित्री स्वरविद्युदन्तरपदे रुद्रात्मिका मध्यमा ।।
दिव्या वाक् च सरस्वती समुदगाद् विष्णोः सती सोत्तमा
तिस्रो देव्य इमास्त्रिमूर्तिहृदया ध्येयास्त्रिसन्ध्या सुताः ।।१३।।

### ।। गायत्री प्रातःसन्ध्यायाम् ।।

सूर्यस्योदयसन्धिसङ्गवपदे तद्योगसंस्थोदिता
गायत्री त्रिपदा पराऽक्षरमयी वाग् ब्रह्मदैवत्यभाक् ।।
बाला(ऽऽ)दित्यगुणाऽरुणात्मकिरणा मित्रात्मशान्तोषसा
विश्वस्यास्य सुजीवने प्रणयने तत्प्राणने सत्त्वदा ।।१४।।

### ।। सावित्री मध्यान्हसन्ध्यायाम् ।।

सावित्री दिवि मध्यमण्डलगता मध्यान्हसन्ध्यापदे
सोर्ध्वा विष्णुपदे प्रचण्डकिरणा वाग् रुद्रचिद्देवता ।।
ध्येया सा युवती प्रकाशकचिते विश्वप्रकाशार्थका
प्रौढा(ऽऽ)दित्यमहासुतैजसमयी पूर्णा समर्थोर्जिता ।।१५।।

### ।। सरस्वती सायंसन्ध्यायाम् ।।

सायं सैव सरस्वती गयशिरःसन्ध्यापदेऽन्तःस्थिता
वृद्ध(ऽऽ)दित्यसुमण्डलान्तरहिता साऽस्ताचलाधिष्ठिता ।।
विष्णोः सत्त्वसमृद्धसम्पदुदिता सा वैष्णवी वित्परा
ध्येया पक्वमनः प्रशान्तिकलया सौम्याऽम्भसा वारुणी ।।१६।।

### ।। सरस्वती सरित्स्वरूपा ।।

एकैवात्र सरस्वतीह सरसा पूर्णा स्रवन्ती सती
सूर्यादेव सरस्वतः प्रवहति व्योम्नोऽधरासंस्रुतिः ।।
संसिद्धा त्रितयी परा सुरसरिद् दिव्या सुरस्यात्मना
विश्वं चेतयति स्वयं स्वरसतः सञ्चेतते स्वात्मना ।।१७।।

### ।। तिस्रो देव्यः गङ्गायमनासरस्वत्यः ।।

हे गङ्गे यमुने सरस्वति परे प्राणात्मचिद्देवते
विश्वस्यास्य च मातरो रसचितः सद्देवतामूर्तयः ।।

वाक्सत्त्वेन समन्विताः स्वररसैस्तन्नामरूपादिना
तिस्रो देव्य इति स्तुताः श्रुतिमुखा वाग्देवताशक्तयः ॥१८॥

श्रीविष्णोश्च सरस्वतोऽत्र सवितुस्तस्य त्रिपादात्मनः
पूर्णाद् विष्णुपदात् स्वमूलपदतो ज्योतीरसैकास्पदात् ॥
सञ्जाताऽसुरसात्मिका सुरसरिद् व्योम्नस्त्रिसन्ध्याश्रयान्
नित्यं सम्प्रवहत्यजस्रकलया पूर्णा सुधाधारया ॥१९॥

एकस्मादुदिता द्विधा प्रथमतस्ते द्वे विरूपे समे
तद्योगेन सितासिते सुसरिदौ नद्योस्तयोः सङ्गमे ॥
व्योम्न्यन्तस्तु समा अपीह विषमावृत्तास्त्रिवेणीमुखे
भूमौ साऽत्र सरस्वती समुदगान्मध्ये तृतीया द्वयोः ॥२०॥

आदावन्तत आहिता दिवि सती वेदे च देवे पुनः
भूमौ मध्यत एव सा प्रवहति स्याद् गुप्तगामिन्यसौ ॥
सा गङ्गा च सरस्वती च यमुना तत्रास्ति सा मध्यगा
तद्वत् प्राणभृदन्तरे तनुभृतां देहेऽन्तरे प्राणगाः ॥२१॥

॥ इडा-पिङ्गलासुषुम्णा ॥

सर्वान्तः प्रवहन्ति ताः सरिदिव प्राणात्मचिद्धारया
मर्त्यांस्तान् प्रतिचेतयन्ति सहसा ताः प्राणसञ्चेतनात् ॥
वामेडा नसि पिङ्गला प्रतिपदं प्रश्वासतो दक्षिणा
सिद्धा सन्धिमयीह मध्यमपदा गुप्ता सुषुम्णा परा ॥२२॥

सोमार्काग्निसुतैजसात्मनयना दृक्छक्तिरूपाः समाः
देहे वाम-सुदक्ष-मध्यसदनाः सिद्धास्त्रिशक्त्यात्मिकाः ॥
नाड्योऽन्तर्हितदैवतत्रययुताः हृत्प्राणवाग्भूमयः
तिस्रो देव्य इहान्तराः सुखभुवो योगादिसद्भूमिकाः ॥२३॥

सुम्नं तत् सुखमात्मनि स्वररसानन्दात्मवाक् सद्रसं
भ्रूमध्यात् सममूर्ध्वमूर्धनि सृतं पूर्णात्मसंविद्रसम् ॥
पश्चात् कुण्डलिनीमुखात् समुदितं पूर्णं सहस्रारगं
पूर्णेऽन्तः परमात्मनि प्रमुदितं सोमामृतैकात्मकम् ॥२४॥

गङ्गा प्राणमयी क्रियारसमयी रुद्रेन्द्रविद्युन्मयी
सेच्छाभावनशक्तिकेह यमुना सौम्यामनश्चिन्मयी ॥
वागेवात्र सरस्वती स्वरवती रस्यात्मसंविन्मयी
तिस्रो देव्य इतीरितास्त्रिकरणाः प्रत्यङ्मुखाः शक्तयः ॥२५॥

गङ्गा सेयमिडाऽत्र वामनयना सा वामनासायना
दक्षेऽङ्गेऽक्षिणि पिङ्गला च यमुना दक्षान्नसः प्राणनात् ॥
भ्रूमध्ये तु तयोश्च मध्यमपदा सिद्धा (ऽ) सुयोगात् परा
वाग्देवीह सरस्वती सुखरसा सुप्ता सुषुम्णाऽग्निचित् ॥२६॥

॥ तिस्रो देव्यः ॥

॥ तिस्रो वाचः चिदात्ममूर्तयः ॥

प्राक् सृष्टेः पुरुषस्य चेतनचितो ज्योतिर्मयो वाङ्मुखात्
प्रत्यक्षोऽग्निरयं पुनः प्रतिमुखं वाग्रूपतोऽन्वाविशत् ॥
आत्मन्यन्तरितां स्वसंविदुदितां वाचं निजां सोऽवदद्
वाग् वै सा त्रितयी त्रयी त्रिपदभृद् गुह्या परा विश्ववित् ॥२७॥

तिस्रो वाच इतीरिताः पुनरिमास्ताज्योतिरग्राः समाः
देव्यस्ता इह मातरः प्रथमजा ब्रह्मात्मवागुत्तमाः ॥
तिस्रो व्याहृतयश्च सत्प्रकृतयस्ता भूर्भुवःस्वःपदाः
छन्दः सत्त्वपरास्त्रयीश्रुतिपरास्ता ऋग्यजुःसामगाः ॥२८॥

गायत्री प्रथमाऽग्नि-विप्रमुखगा क्षत्रेन्द्रभाक्त्रैष्टुभी
विट्सत्त्वोर्जति वैश्वदेव्यमहसा छन्दस्वती वाक् त्रयी ॥
गायत्री पुनरग्निवाग्रसमयी सोष्णिक् सवित्रात्मिका
सोमात्मेयमनुष्टुबार्षवचसां देव्यः श्रुताश्छन्दसा ॥२९॥

तिस्रस्ता अपि वाच आन्तरतमास्ता वाङ्मनःप्राणगाः
मूले संविदिह प्रचेतनपरा सा वाक् प्रतीची परा ॥
पश्यन्ती च पराङ्मुखा सुमनसा नाभौ सदिच्छात्मिका
प्राणाप्ता हृदि मध्यमा स्वरमुखा सिद्धा क्रियाशक्तिका ॥३०॥

सा वैश्वानरवन्हिवाक्चिदनला भौमात्मिका स्यादिला
मध्या वैद्युततैजसेन्द्रवदना सा रुद्रिया भारती ॥
दिव्यात्मैव सरस्वती रसवती प्राज्ञात्मिका सत्तमा
देव्यस्तिस्र इमाः समान्तरतमा आध्यात्मसत्त्वोत्तमाः ॥३१॥

एता गुप्ततरार्थसत्त्वकलया गुह्यं परं स्वेङ्गितं
स्वात्मन्यन्तरितं निजं प्रकृतिकं नोवेदयन्तेऽर्थतः ॥
तस्माद् गुह्यपदात्मिकाः श्रुतिनुता वेदैकवेद्यार्थकाः
व्यक्ता विश्वमुखोदिता श्रवणभाक् तुर्या तु वाग्वैखरी ॥३२॥

॥ इति अष्टमी कला ॥

सम्पूर्णा

## ॥ नवमी कला ॥ ( ९ )

### ॥ गौरी माध्यमिका वाक् ॥

### ॥ दीर्घतमाः मामतेयः औचथ्यः ॥

सान्तः सन्मनसा सुदीर्घतपसा सद्भावतः श्रद्धया
निर्वेद्यावरणेन दीर्घतमसा लीनः समाधौ धिया ॥
आविर्भूतनिजानुभाववचसा सर्वात्मसत्सन्दृशा
दिव्यो दीर्घतमा महर्षिरुदगात् सन् मन्त्रदृक्छन्दसा ॥ १ ॥

इन्द्रो विश्वविभूतिपूर्णपुरुषः सन् पूर्णचन्द्रात्मकः
सान्द्रः स्वात्मचिताऽऽत्मनि स्वतपसा विश्वं जुहाव स्वयम् ॥
यज्ञाद् विश्वसुमेधसात् प्रतपतो यश्छन्दसां वर्षकः
ब्रह्मर्षिः प्रतिसम्बभूव परमश्छन्दोभ्य एवामृतात् ॥ २ ॥

यश्छन्दोमयदिव्यमन्त्रतपसा स्वब्रह्मवाक्च्छक्तितः
तं विश्वावरकं च दीर्घतमसं वृत्रं जघान स्वतः ॥
मोहाज्ञानमयं मदान्धतमसं वेदाद् विदार्योदितः
सेन्द्रो दीर्घतमास्तमःप्रहरणात् सर्वार्थदृक् स्यादृषिः ॥ ३ ॥

ऋग्वेदे परतत्त्वदर्शनमिदं सर्वार्थसम्बोधकं
हृद्योगात् परवस्तुदर्शकचितेरज्ञानदृग्बाधकम् ॥
प्रज्ञानाक्षरमोक्षतत्त्वपरकं साक्षात्परादर्शकं
निर्वेदात्मपरं हि दैर्घतमसं सद्दर्शनं दृश्यताम् ॥ ४ ॥

### ॥ माध्यमिका वाग् देवता गौरी ॥

"गौरीर्मिमाय सलिलानि तक्षती" इति दीर्घतमाः ऋषिः । गौरी वाग्देवता। जगतीछन्दः ॥ (ऋ० मं० १, १६४, ४१)

"गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ॥
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥४१॥

### ॥ पदपाठः ॥

गौरीः । मिमाय । सलिलानि । तक्षती । एकऽपदी । द्विऽपदी । सा । चतुःऽपदी ॥
अष्टाऽपदी । नवऽपदी । बभूवुषी । सहस्रऽअक्षरा । परमे । विऽओमन् ॥

"गौ॒री मि॑माय सलि॒लानि॑ तक्ष॑ती०" ( तै०कृ०य० आ० १, ९, ४)
"गौ॒रिन्मि॑माय सलि॒लानि॑ तक्ष॑ती०" ( अथर्वसं० १३, १, ४२ )

॥ कल्पलता ॥

गौरी इन्द्राणी माध्यमिका वाक् ॥

गौरी व्योमनि गर्जति प्रततया तद्व्योमतन्मात्रया
विद्युत्प्रेरितया स्वशक्तिपरया वाचाऽऽत्मचिन्मात्रया ॥
गुर्वीन्द्राद् घनगर्जितस्वरितया युक्ता परा मात्रया
सेन्द्राणीह महेन्द्रशक्तिरुदगाद् इन्द्रः परो मात्रया ॥ ५ ॥

॥ गौर्यास्तात्त्विकं स्वरूपम् । गौरीशब्दार्थतत्त्वम् ॥
॥ गौरी रुद्राणी विद्युन्मयी माध्यमिका वाक् ॥

गौरी सा परमेऽन्तरिक्षसदने चित्या स्वरन्ती सती
रौद्रीशात्मनि रौति साऽऽत्मभवने वाग् विद्युदात्मोद्यती ॥
रुद्रोऽभ्यूर्जति रोरवीति तपसा वाचा स्वयं विद्युता
रुद्राणी भुवि रुद्रिया चितितनुर्वाग् वैद्युताग्निद्युता ॥ ६ ॥

॥ गौरी ब्रह्माणी वाग् अग्नायी ॥

गौरीगौर्दिवि गच्छति स्वरचिता ज्ञानक्रिया योगिनी
साऽग्नायी भुवि चाग्नितैजसतनूर्वाग् अग्निचिद्योगिनी ॥
ब्रह्मा सोऽग्निरधिष्ठितोऽवनिपदं सा ब्रह्महृद्भागिनी
ब्रह्माणी परमन्त्रवेदवदना वाग् ब्रह्मचिद्भोगिनी ॥ ७ ॥

॥ गौरी श्रीः सावित्री वैष्णवी वाक् ॥

गौरी विष्णुपदेऽन्तरे गिरति सा श्रीर्वैष्णवी व्यापिका
गीर्णा दिव्यसुतेजसाऽऽत्मकिरणैर्दिव्यात्मसत्वापिका ॥
दिव्यो विष्णुरसावुदेति सविता वाचं प्रसूते निजां
सावित्री वरुणान्यसौ प्रवृणुते विश्वंप्रसूतेरजम् ॥ ८ ॥

॥ गौरीवाक् प्रत्यक्षं ब्रह्म, ब्रह्माणी ॥

गौरी सा परमात्मनि प्रतिरता पूर्णे परे ब्रह्मणि
ब्रह्मात्मा बहिरन्तरेऽपि लसति प्रज्ञानवाग् ब्राह्मणी ॥
ब्रह्मात्मन्युदिताऽखिलान्यजनयद् ब्रह्माण्डसञ्चालके
ब्रह्माणी बृहदात्मना प्रभवति ब्रह्मात्मभूगोलके ॥ ९ ॥

॥ सामान्यतः समग्रमन्त्रार्थः ॥

॥ गोरीर्मिमाय सलिलानि तक्षती० ॥

सा गौरी सलिलानि जीवस्सरसान्यातक्षती स्वात्मना
दिव्या वागिह तानि सर्वभुवनान्याविश्चिकीर्षादिना ॥
तान्येवानु मिमाय तैर्निजपदैर्विश्वान्यनुक्रामती
भूत्याऽतिक्रमतोऽखिलात् प्रतिबभौ वाग् विश्वरूपा सती ॥१०॥

॥ एकपदी द्विपदी० इत्यादि सहस्राक्षरान्ता ॥

गौरी सा प्रथमं परेण तपसा विश्वं जगत् तक्षती
तद्योगाय चिदात्मना प्रतिपदं पूर्णा प्रतीर्णा सती ॥
एक-द्वि-त्रि-चतुष्क - पञ्चपदयुक् - षट् - सप्त - साऽष्टौ नव
प्राप्ताऽङ्कक्रमपङ्क्तितोऽत्र भवती तावत्पदी सम्बभौ ॥११॥

॥ अधिभूतम् ॥

लोकानामधि मूर्धनीह परमे व्योमन्यपादात्मिका
वाग् वै सा परमात्रया स्वकलया सन्तक्षती जीवनम् ॥
भूतानां भुवनात्मकानि च पदान्यादौ मिमाय स्वयं
भूतान्यप्यनुनामतः समकरोत् सज्यौतिषान्यन्वयात् ॥१२॥

॥ अधिदैवतम् ॥

ब्रह्मण्यन्तरिता गुणेन बृहती वाक्प्राणमुख्या परा
ज्योतिर्मूर्तिमयी त्रयी रसमयी ब्रह्मात्मसत्याक्षरा ॥
प्रज्ञानेन सुचेतनात् प्रतिपदं विश्वं मिमानाऽऽत्मना
पूर्णं ब्रह्म मिमाय वाक् समगुणा सा ब्रह्मणो (ऽ) मात्रया ॥१३॥

॥ अध्यात्मम् ॥

मूर्ध्नि प्राणभृतां चिदात्मकलया संविद्रसैः पूर्णया
जीवानां प्रतिधारणाय सलिलं सौम्यं रसं तक्षती ॥
वाक्सत्त्वेन मिमाय तात्त्विकदृशा विश्वं जगज्जानती
चित्याऽन्तर्हृदि च क्रमे स्वमहसा पूर्णा सहस्राक्षरा ॥१४॥

॥ गौर्याः अपात्तत्त्वम् ॥

ब्रह्मात्मा परमोऽग्रतः स्वयमपाद् आसीत् समः केवलः
पूर्णो बिन्दुरिवैव मानरहितः सन् निर्गुणो निष्कलः ॥
तादात्म्यात् तमधिष्ठिताऽत्र बृहती वागप्यखण्डा (ऽ) स्वरा
संसिद्धा प्रथमा ह्यपात् पुरुषवत् सा पद्धतीनां परा ॥१५॥

मात्राभिश्च गुणैः कलादिकरणैः पादैश्च भावादिभिः
व्याहृत्या मानचितिक्रियाधिकरणैस्तेषामभावादिभिः ।।
यावद् ब्रह्म परं प्रतिष्ठितमलं यावाँश्चिदात्मा पुमान्
तच्छक्तिः परमात्मिका चितिमयी वाक् संस्थिता तावती ।।१६।।

सा वाग् ब्रह्म तदाधिपत्यनिरतः स ब्रह्मणः सन् पतिः
सत्यः सन्नपि नामरूपरहितः सोऽस्तित्वमात्रामतिः ।।
सिद्धानामनुभावसिद्धवचनात् सद्भाववित्सङ्गतिः
निर्वेदात्मनि सर्वथैव शरणं सन्मौनमुद्रास्थितिः ।।१७।।

एवं तत्र तथा तदात्मनि परे पूर्णे च वस्तुस्थितिः
पूर्णात्मा परमः पुमान् स भगवान् वाग्ब्रह्मणः सत्पतिः ।।
प्रज्ञानेन सुसन्दृशा समुदगात् सन्नुन्मिषँश्चित्पतिः
सोऽहं वाक्चिततिः स्फुरन् त्स्वरणतः सन्नुच्छ्वसन् वाक्पतिः ।।१८।।

नित्यं सम्मिलितात्मनोर्भगवतो वाग्ब्रह्मणस्तत्पतेः
योगाद् वाङ्मुखतः कृताद्धमनतः कर्मारवत् फूत्कृतेः ।।
यत् तस्मादसतः समं जगदिदं स्वाविर्बभूवादितः
सर्वं तत् प्रतिनामरूपललितं सद् विश्वरूपं बभौ ।।१९।।

वाचा सन् परमः प्रचेतनपदाद् बिन्दोरपात्पुरुषः
पूर्णः सन्नपि पश्यते न सकलैर्द्रष्टा बहिश्चक्षुषा ।।
वेदैः शास्त्रदृशा परेण तपसा प्रत्यग्दृशा संविदा
योगात् तत्त्वविमर्शनाप्तमनसा सन्दर्शनीयः सदा ।।२०।।

पूर्णं केवलमेव निर्गुणपदं वाचः परावाक्पदं
प्रत्यञ्च्यात्मनि चेतनं सममनुस्वारे पदेऽहम्पदम् ।।
एक-द्वि-त्रि-चतुष्पदादिमुखतः सङ्ख्यादिपङ्क्तिक्रमात्
सिद्धं तत्त्वगुणादिवस्तुपरकैः पादैर्मुखैः सङ्क्रमात् ।।२१।।

## ।। एकपदी गौरीवाक् ।।

तत्रैकं पदमेव चेतनपरं वाचस्तथा ब्रह्मणः
तस्मात् स प्रथमः श्रुतो हरिरजः सन् एकपात् पुरुषः ।।
तद् विष्णोः परमात्मनो भगवतो नाभौ सदेकं पदं
बिन्दौ विष्णुपदं हि मध्यमपदं सन्धौ समूढं पदम् ।।२२।।

एकं तद् भुवनेऽन्तरिक्षसदने भूते तदापोमयं
तत्त्वं स्यादधिदैवतं परतरं ज्योतिर्मयं वैद्युतम् ।।
सत्यं तत् सगुणं सचेतनमिदं सर्वान्तराध्यात्मकं
गौरी तत्पदयोगतः समुदगात् सैवैकपाद् वाक् स्वतः ।।२३।।

## ॥ द्विपदी गौरी वाक् ॥

बाह्यान्तर्यमयं पदद्वयमदस्तद्भूत-जीवात्मकं
शून्यं तत् खलु चेतनेन सहितं युक्ते रजस्तामसे ॥
अन्तर्वाङ्मनसे सतैजस-रसे तेजोऽवनी रोदसी
सूर्याग्नी सकलं द्विदैवतमयं शक्ती क्रियेच्छात्मिके ॥२४॥

## ॥ त्रिपदी गौरी वाग्देवता ॥

तत्त्वैः सा त्रितयी त्रिपात् प्रतिबभौ तैर्भूत-देवाऽऽत्मभिः
भूतैस्तैर्भुवनैस्त्रिभिः समुदगाज्ज्योतिस्त्रयी-मूर्तिभिः ॥
अध्यात्मं तु चिदात्मकैस्त्रिकरणैर्देहैस्तथा पूरुषैः
वाग्भिस्तत्परचित्तिभिश्च तिसृभिश्चिद्देवताशक्तिभिः ॥२५॥

## ॥ चतुष्पदी गौरी ॥

एकाऽनादिपदा द्विपादिह सती गौरी त्रिपादास्थिता
दिग्भिः सैव चतुष्पदी प्रतिबभौ वाचश्चतुर्भिः पदैः ॥
दिव्यैर्दैवतगैश्च वेदवदनैः पूर्णात्मनो ब्रह्मणः
ज्ञानेच्छाकृतिचित्तिशक्तिकरणैरध्यात्मसत्त्वान्वितैः ॥२६॥

## ॥ पञ्चपदी गौरी ॥

एकेनाथ चतुर्भिरप्यधिगता द्वि-त्रैः पदैः पञ्चपात्
मध्याद् बिन्दुपदात् तथोर्ध्वपदतो दिग्भिर्विदिग्भिर्युतात् ॥
पञ्च ब्रह्मपरैश्च रुद्रवदनैः प्राणात्मकैः पञ्चभिः
भूतैस्तैः सगुणैश्च धीन्द्रियपरैर्देवैश्च सोमादिभिः ॥२७॥

## ॥ षट्पदी गौरी ॥

द्वाभ्यामत्र चतुर्भिरन्वितपदैर्वाक् षट्पदी षड्विधा
भूतं वाक्पृथिवी शरीरहृदये प्राणाश्च तत्षड्विधम् ॥
षड्दिग्भिः सह देवताभिरुदिता सा तिर्यगूर्ध्वाधरा
पञ्चज्ञानमयेन्द्रियैश्च मनसा गायत्रिकुक्षिः परा ॥२८॥

## ॥ सप्तपदी गौरी ॥

द्वाभ्यां पञ्चभिरन्वितैरपि पदैर्भूयश्चतुर्भिस्त्रिभिः
दिग्भिः षड्भिरथापि मध्यपदतो वाक्सप्तपात् संबभौ ॥
अध्यात्मं मनसा धिया च सहिता श्रोत्रादिभिः पञ्चभिः
प्राणैस्तत्परदैवतैश्च भवती ब्राह्म्यादिभिर्मातृभिः ॥२९॥

## ॥ अष्टापदी गौरी ॥

दिग्भिश्चाष्टभिरन्विता सममिता सेन्द्रादिदिग्दैवतैः
मित्राद्यैरदितेस्तदष्टतनयैर्गौरीन्द्रवाग् वैद्युती ॥
साऽन्तः स्वात्मनि सप्तधीन्द्रिययुतावागष्टमी तन्मयी
ब्राह्मी मुख्यपराष्टमातृभिरसौ गौरीह साऽष्टापदी ॥३०॥

## ॥ नवपदी गौरी ॥

दिग्भिश्चाष्टभिरेव सा नवपदी मध्येन सद्विन्दुना
तत्त्वैस्तैस्त्रितयैस्त्रिभिस्त्रिवृदितैः सा शक्तिचक्रात्मिका ॥
देहेऽन्तःकरणैश्चतुर्भिरुदिता ज्ञानेन्द्रियैः पञ्चभिः
गौरी वाङ नवशक्तिभिश्च सहिता प्राणैः समैर्दैवतैः ॥३१॥

## ॥ दशपदी-गौरी सहस्राक्षरा ॥

दिव्यात्मा दशभिः पदैः समुदगात् संख्यान्ततत्त्वान्विता
गौरी सा नवसत्त्वकैर्दशपदी सैकेन सद्बिन्दुना ॥
तद्बिन्दुद्वययोगतः शतपदी त्रिभ्यः सहस्राक्षरा
साऽऽनन्त्यात् तदसंख्यया प्रतिबभौ पूर्णा परार्धा परा ॥३२॥

॥ इति नवमी कला ॥

सम्पूर्णा

---

# दशमी कला (१०)

"तस्याः समुद्रा अधि विक्षरन्ति" इति दीर्घतमाः ऋषिः । वाक् समुद्राः, आपः, अक्षरं च देवताः । प्रस्तारपङ्क्तिः छन्दः ॥ ( ऋ० मं० १, १६४, ४२ )

"तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद् विश्वमुप जीवति ॥ ४२ ॥

॥ पदपाठः ॥

"तस्याः । समुद्राः । अधि । वि । क्षरन्ति । तेन । जीवन्ति । प्रऽदिशः । चतस्रः ॥
ततः । क्षरति । अक्षरं । तत् । विश्वं । उप । जीवति ॥

॥ कल्पलता ॥

॥ सामान्यतः समग्रमन्त्रार्थः ॥

तस्याश्चिद्भिरधिक्षरन्ति सरसाः वाचः समुद्राः स्वराः
तेन प्राणदवाग्रसेन महसा जीवन्ति सर्वा दिशः ॥
तस्माद् वाक्स्वरतः क्षरन्ति सहसा सर्वाक्षराण्यादितः
वाक्सत्त्वं तदनूपजीवति समं विश्वं जगत् प्राणिभिः ॥ १ ॥

॥ अधिभूतम् ॥

तस्या एव हि वाक्चितेः स्वरणतो रस्याः समुद्रा दिवः
ता आपो भुवि विक्षरन्ति महसः सिद्धाः पृथिव्याश्रयाः ॥
वेदे तु प्रथितान्तरिक्षपरकास्तेजोरसैकाश्रयाः
ता व्योम्नाऽधि ततः समस्तभुवनाधाराश्च भूताश्रयाः ॥ २ ॥

वाचस्तेन जलात्मना रसवता तद्वायुतेजस्वता
जीवाधारतया स्रवद्रसचिता तत्प्राणसत्त्वोद्वता ॥
सर्वे प्राणभृतोऽत्र चेतनवता जीवन्ति सर्वा दिशः
भूमौ प्राणचिता महःसुकलया जीवाश्च दिक्संस्थिताः ॥ ३ ॥

तस्मादेव हि वाग्रसात् स्वरवतः पूर्वाक्षराणि स्वतः
चिद्योगादिह विक्षरन्ति सततं सच्छब्दहृत्सत्त्वतः ॥
तान्येवानु समेत्य विश्वमखिलैर्विद्यादिसद्वाग्रसैः
हृद्योगादुपजीवति प्रकृतिकं प्रत्यक्षसिद्धं नृणाम् ॥ ४ ॥

## ।। अधिदैवतम् ।।

तस्या एव परात्मचित्स्वरचितेर्वेदात्मवाचोमुखात्
तत्संवित्स्वरसत्प्रवाहसुरसाः सर्वात्मविद्यामुखाः ।।
ते नित्यादधिविक्षरन्ति तपसा संवित्समुद्रात्मकाः
प्रज्ञानात्मरसान्विताः समरसा दिव्याधिदैवात्मकाः ।। ५ ।।

तेनैवादिमवाग्रसस्वरवता वेदात्मसंविद्वता
जीवन्तीह समस्तजन्तव इति प्रत्यक्षशास्त्रोदितम् ।।
प्रज्ञानोदितशान्तिशक्तिकरसौर्वाक्सत्त्वसत्संविदा
स्वानन्दात्मसुधारसेन सकला जीवन्ति लोकाः सदा ।। ६ ।।

तस्मादेव हि वाङ्मुखात् क्षरति तद्वेदादिबीजाक्षरं
ब्रह्मात्मप्रणवाक्षरं परतरं तद्वाचकैकाक्षरम् ।।
तन्मन्त्राक्षरमेव संस्रवदनु प्रत्येत्यनुज्ञाक्षरं
तद्विज्ञानरसेन सज्जगदिदं चित्योपजीवत्यलम् ।। ७ ।।

तस्माद् वाक्चितिसत्त्वतः स्वरसतः सद्ब्रह्मणो वाग्रसात्
सत्यं ब्रह्म हि निर्गुणं सुवचसाऽनिर्वाच्यवस्त्वक्षरम् ।।
वाक्छक्तेः क्षरति स्वरेण सगुणं सन्नामरूपात्मकं
वाच्यं सत्प्रणवाक्षरेण भवति ब्रह्मेति तत्सार्थकम् ।। ८ ।।

यत् पूर्णं खलु नामरूपरहितं सत्यं परंचाक्षरं
नित्यं सिद्धमगोचरं दिवि मनोवाचामपि ब्रह्म तत् ।।
तद्वागेव रसात् तदक्षरमपि ब्रह्मेति नाम्नाऽविशद्
रूपं व्यापकसत्तयोर्जतिपरञ्ज्योतिस्तदन्वाविशत् ।। ९ ।।

तेनैवानुभवोदितेन वचसा तद्वाग्रहस्यार्थतः
दिव्यं ज्ञानमथाभ्युदेति सहसा साक्षात्कृतेर्योगतः ।।
ज्ञात्वा तद्धृदयं परोऽपि महसा तत् स्वानुभावोदितं
जीवन्नेव सबन्धमुक्तमनसा ज्ञानेन संजीवति ।।१०।।

तस्माद् वाङ्मुखतोऽत्र साक्षरतया विद्याप्रकाशादिना
सर्वेषां सुखशान्तिजीविततया विद्वत्तयाऽर्थादिना ।।
विज्ञानोदितया स्वया ऋजुधिया ब्रह्माण्डबीजाक्षरात्
प्रज्ञानात् समुपाप्तया जनतया विश्वं चिरं जीवति ।।११।।

## ।। अध्यात्मम् ।।

अध्यात्मं निजमूर्धनि प्रतिचिता गौरी सहस्राक्षरा
बिन्दौ सद्रसचित्स्वरा स्फुरति सा संवित्सहस्रारगा ।।
तस्याः सोमरसात्मकाः स्वरयुताः सूक्ष्माः क्षरन्त्यन्ततः
नीचैस्तत्र समुद्भवन्ति रसना मूलाग्रगाः सन्तताः ।।१२।।

मूर्ध्नोऽनाहतनादसद्रसचिता हृत्प्राणसत्त्वात्मना
तेनैवान्तरवाग्रसेन सकला जीवन्ति जीवाः समाः ॥
तस्मादेव सदा क्षरत्यनुपदं सर्वाक्षरं सद्रसं
तद्दिव्येन सुजीवनेन जनता विश्वं च जीवेच्चिरम् ॥१३॥

मूलाधारपदेऽप्यनन्तकलया चित्त्या स्फुरन्त्याः सदा
स्वाहम्प्रत्ययतः स्फुरत्स्वरचितेर्वाचः पराया हृदा ॥
ऊर्ध्वाग्राश्चसमुद्रवन्तिसहसावाक्प्राणचितोद्रसाः
ते सर्वेन्द्रियवृत्तिकोर्मिचितिभिस्तद्वाक्प्रवाहात्मकाः ॥१४॥

तेनैवान्तरवाग्रसस्वरवता प्राणेन मुख्यात्मना
जीवन्ति प्रतिजन्तवस्तनुभृतो दिग्देवतासत्त्वना ॥
तस्मादेव चिदात्मनो रसनया वक्त्रात् क्षरत्यक्षरं
तद्वाचाव्यवहारतोऽखिलजना जीवन्त्यमी साक्षरम् ॥१५॥

स्वात्मन्यन्तरहञ्चितिस्वरपदे तस्मिन्नहम्प्रत्यये
रुद्रादभ्युदितेऽखिलाक्षरपरेऽप्याद्ये समाम्नायके ॥
तत्सर्वाक्षरयोगतः सुविहितं सर्वस्वमन्तर्हितं
सर्वार्थैकसमर्थनैककरणं सर्वार्थं संवित्प्रदम् ॥१६॥

अत्राहञ्चितिवृत्तिसंस्फुरणतः सन्मौनमुद्रात्मकः
चित्पूर्मेश्च समुद्गताःकरणतः संवित्समुद्रात्मकाः ॥
प्रज्ञानात् क्षरणेन चित्स्वरणतः प्राणस्वरेणान्विताः
स्वंज्ञानं वितरन्ति हृत्स्मरणतः वाचः स्वरेणात्मनः ॥१७॥

वाचस्ताः स्वमुखेन सस्वरवता प्रज्ञापयन्त्यर्थतः
विश्वेभ्यो वितरन्ति सत्त्वमखिलं ज्ञानं च सञ्जीवनम् ॥
तेनैवात्र समे स्वतन्त्रमुखतो जानन्ति जीवन्त्यमी
वाग्यन्त्रेण नियन्त्रितं जगदिदं मन्त्रात् स्वतन्त्रात् समम् ॥१८॥

आत्मा स्वाक्षरमौनवृत्तिनिरतः सन् अक्षरात्मा स्वयं
तस्मिन् अक्षरसत्त्वके च परमे लीनोऽक्षरे ब्रह्मणि ॥
वाचाऽन्तर्निजयैव वाग्रसतमः पूर्णः स्वतन्त्रोऽच्युतः
योगान्नच्यवते परान्निजपदान्नैव क्षरत्यक्षरः ॥१९॥

एवं सत्यपि तत्तथाऽपि च पुनस्तां सर्वधीमूलकां
वाचं स्वामनुसृत्य चित्स्फुरणतः सन् प्राङ्मुखोऽयं स्वयम् ॥
स्वज्ञानादिगुणप्रकाशनकृते वाचः स्वरात् सद्रसाद्
आत्माऽपि क्षरति स्वतः पतिपदं सन्नक्षरोऽप्यन्ततः ॥२०॥

वाक्तत्त्वत्रयसंहिता त्रिविधता पूर्णा तुरीयाऽऽहिता
सा प्रत्यक्ष-परोक्षकान्तरपरैस्तैर्भूत-देवाऽऽत्मभिः ॥
तद्बाह्याध्वनिरूपतो दिगुदितं सद्व्योमतन्मात्रकं
भूतं बाह्यमचेतनं श्रुतिगतं दिग्-व्योमसत्त्वात्मकम् ॥२१॥

दिव्यं स्यादधिदैवतं श्रुतिमतं ज्योतिष्कलं चेतनं
सञ्ज्ञाप्यं श्रुतिमात्रगोचरमतः सद्वस्तुसञ्ज्ञापकम् ॥
अध्यात्मं तु सचेतनं रसनया वाच्यं परं वाचकं
सर्वान्तिर्यमहञ्चितिस्फुरणगं हृत्प्राणवाक्सूर्वरम् ॥२२॥

मूर्धन्यन्तरनाहता रसतमा चिन्नादसत्त्वान्विता
साऽन्तः स्यादपरोक्षकैव सततं श्राव्या तु साऽन्तः श्रुतेः ॥
तेष्वेतेषु समासतः सममनुस्यूता समस्तात्मिका
सा वाग् व्यस्तसमस्ततत्त्वपरतस्तेभ्योऽतिरिक्तात्मिका ॥२३॥

सद्ब्रह्मात्मकबिन्दुवत् परतमा सन्मौनसत्त्वात्मिका
सत्या केवलसात्त्विका रसतमा संवित् प्रपूर्णात्मिका ॥
वागेवाक्षर-बिन्दुसत्त्वपरमा लक्ष्यार्थका वाचका
नादात्मा चितिसामरस्यकलया ध्वन्यार्थकाऽप्यूर्जिता ॥२४॥

साक्षाद्ब्रह्मपरा सतीयमपरा छन्दःस्वमन्त्राक्षरा
साक्षिण्यात्मनि सुस्वरा चितिपरा सर्वस्वधीभ्यः परा ॥
भूयस्ताः स्वधियः समन्वयचरा सर्वार्थं बोधोत्तरा
ब्रह्मात्मैकरसप्रचारणपरा प्रत्याययत्याऽऽन्तरा ॥२५॥

॥ सङ्ख्यात्मिका वाक् ॥

गौरी वाक् सुमिमाय वैद्युतचिता विश्वं जगत् सङ्ख्यया
सैक-द्वि-त्रि-चतुष्क-पञ्चपदयुक् षट् सप्त चाष्टौ नव ॥
सङ्ख्या साऽपि तदङ्कनामपदभृत् पूर्णेन्दुना बिन्दुना
सङ्ख्याप्तैर्दशकैस्तथैव शतकैः पूर्णा सहस्रादिना ॥२६॥

सङ्ख्या सा परवस्तुशक्तिकगुणा वागित्यभिख्यायते
सङ्ख्येयाखिलवस्तुवाचकगुणा सा सङ्ख्ययाऽऽख्यायते ॥
सैवाख्यात-समस्तवस्तुगणने शक्ता समाख्यायते
सत्सङ्केतपराक्षराङ्कवितता वागेव सङ्ख्यायते ॥२७॥

वागेवाक्षरशब्दनामपदभृत् सङ्ख्यात्मनाऽऽख्यायते
सङ्ख्याऽपि प्रतिनामतोऽङ्कमुखतो वाचैव साऽनूद्यते ॥
ब्रह्मात्मा वसु-रुद्र-सूर्यपुरुषाः प्रोक्ताश्च सङ्ख्यात्मना
गण्यन्ते प्रतिशब्दतोऽप्यभिधया वागेव सत्सङ्ख्यया ॥२८॥

रेखावर्णमुखाप्तचित्रलिपिवत् सा गुप्तभाषा मता
वागाख्यैव समाख्यया समुदिता सङ्ख्येति सङ्केतिता ॥
तस्मात् सोपनिषन्मुखे श्रुतिनुता साङ्ख्यायनात्मोदिता
गायत्री त्रिपदा पराक्षरमयी साङ्ख्यायनी वाङ्मिता ॥२९॥

सङ्ख्या साऽखिलवस्तुषु स्वयमनुस्यूता समस्तात्मना
वाच्यार्थाखिलवाचकेष्वपि पुनर्वर्णेषु वागात्मना ॥
तस्मादेव समस्तवस्तुगणने सङ्ख्याऽप्यते वाचया
बुध्यन्ते क्रमशस्तदङ्कमुखतो वर्णाश्च ते सङ्ख्यया ॥३०॥

॥ सर्वभाषामयी सङ्ख्या ॥

सङ्ख्येयार्थकसर्ववस्तुगणने सख्यैव सत्यापिका
भाषास्वप्यखिलासु साधकतमा सर्वार्थकैषा समा ॥
तस्मात् सर्वमतेन शास्त्रविधिना भाषाऽपि सङ्ख्यात्मिका
सङ्ख्यैवेह भवेदियं समगुणा सा सर्वभाषात्मिका ॥३१॥

॥ सङ्ख्यान्तसत्त्वकं दशकं अनन्तसङ्ख्यात्मकम् ॥

सा सङ्ख्याऽपि नवाङ्कतत्त्वनियता सङ्ख्येयसत्त्वार्थका
बिन्दोरभ्युदिताऽप्यतीत्यसकलं बिन्दौ समाप्ताऽन्ततः ॥
तस्मात् सा दशसंख्ययैव विरता सद्बिन्दुनैवान्विता
सङ्ख्यान्तार्थकसत्त्वकं हि दशकं पूर्णं सहस्रात्मकम् ॥३२॥

॥ इति दशमी कला ॥

सम्पूर्णा

---

# एकादशी कला (११)

"तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेकः" इति दीर्घतमाः ऋषिः वाग्-अक्षरंदेवता। त्रिष्टुप् छन्दः॥

(ऋ. मं. १, १६४, १०)

"तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति॥
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम्॥"

॥ पदपाठः ॥

"तिस्रः। मातृः। त्रीन्। पितृन्। बिभ्रत्। एकः। ऊर्ध्वः। तस्थौ। न। ईम्। अव। ग्लापयन्ति। मन्त्रयन्ते। दिवः। अमुष्य। पृष्ठे। विश्वऽविदम्। वाचम्। अविश्वऽमिन्वाम्॥"

"तिस्रो मातृः०—
मन्त्रयन्ते०—विश्वविदो वाचमविश्वविन्नाम्।

॥ पदपाठः ॥

विश्वऽविदः। वाचं अविश्वऽविन्नाम्॥

॥ कल्पलता ॥

वाचो व्याहृतयोऽत्र भौवनपरास्ता "भूर्भुवः स्वः" पदाः
तिस्त्रस्ताः खलु मातरस्त्रिजगतां चिज्ज्योतिरात्मान्विताः॥
ये लोकत्रितये त्रयश्च पितरस्तेऽग्नीन्द्रसूर्यात्मकाः
सर्वेषामपि पालकाश्चजनका वाग्भिर्युता ज्यौतिषाः॥१॥

सर्वाधारकशक्तिरूपकतनूस्तिस्त्रोऽत्र मातृः सतीः
ज्योतिर्भूतिमयान् प्रकाशनपराँस्तानेव हि त्रीन् पितृन्॥
एकः सन् स्वयमेव बिभ्रदखिलादूर्ध्वः परो व्यापकः
तस्थौ पूर्णकलान्वितः स भगवान् सन् पारमैश्वर्यभाक्॥२॥

"ईं" पूर्णं पुरुषं परं तममृतं सर्वस्वसत्तात्मकं
विश्वाध्यक्षमनन्तशक्तिसचिवं सत्याक्षरैकात्मकम्॥
सर्वे ते खलु मातरश्चपितरो न ग्लापयन्त्यग्रगं
नान्ये केचिदपि स्पृशन्ति सहसा नार्हन्ति तं बाधितुम्॥३॥

एनां वास्तविकीं स्थितिं भगवतः कीर्तिं महाशक्तिकां
वाचं तामिह विश्ववेदसमिमां विश्वैरमेयात्मिकाम् ।।
विश्वे विश्वविदः समर्थपुरुषा विश्वैरविन्नां स्वतः
व्योम्न्यन्तः परतः स्थिता दिविषदस्ते मन्त्रयन्तेऽर्थतः ।।४।।

॥ अधिभूतम् ॥

विद्युच्छक्तिनिनादचित्यनुकृतिं तां व्योमतन्मात्रकां
वेद्यात्माक्षरशब्दशक्तिकरवां सूक्ष्मध्वनेर्वाचिकाम् ।।
ईङ्कारात्मक शब्दबीजवचनां तां सद्रसां सस्वरां
वाचं मन्त्रवदाचरन्ति मुनयो नित्यं जपन्त्यान्तराम् ।।५।।

बाह्यस्यासदचेतनस्य जगतः प्रत्यक्षभूतस्य वै
नित्यंकेवलचेतनस्य हि सतस्तस्मात् परोक्षस्य च ।।
सर्वान्तस्तु सचेतनस्य सतनोरस्यापरोक्षात्मनः
सामस्त्यादनुलक्ष्यकं समुदगाद् ईमित्यनुज्ञाक्षरम् ।।६।।

॥ अधिदैवतम् ॥

तिस्रो वाच इमास्त्रयीमयतनूस्ता ज्योतिरग्राः समाः
त्रीन् देवानपि वह्निवायुसवितॄनस्तान् वाग्रसाग्रान् पितॄन् ।।
यो बिभ्रत् स्वयमेक एव परमस्तस्थौ स ऊर्ध्वः समः
सर्वाधीश्वरमीं न केचिदपि तं संचायलन्ति क्वचित् ।।७।।

ईङ्काराक्षरतः सुवाच्यमचलं चिन्नादलक्ष्यं परं
प्राज्ञा विश्वविदोऽत्र विश्वसुविदं तं संविदोपासितम् ।।
सर्वज्ञानमयीमनन्यविदितां तद्वाचकैकाक्षरीं
वाचं तां परमात्मनश्चितिमयीम् ईं मन्त्रयन्ते मनुम् ।।८।।

॥ अध्यात्मम् ॥

अन्तः स्वात्मनि मातरस्त्रिकरणाः संवित्क्रियेच्छागुणाः
तिस्रस्ताः सुखभूमयस्त्रितनवः सर्वात्मचिच्छक्तयः ।।
येऽन्तःस्थाः करणत्रये च पितरस्तेऽग्नीन्द्रसूर्यात्मकाः
ते वैश्वानर-तैजसाभिध-परप्राज्ञात्मकाः पूरुषाः ।।९।।

एकस्तान् सकलाँश्च बिभ्रदुदगादूर्ध्वं समूर्ध्न्यन्तरे
बाधन्ते न तु केचिदप्युपहितं तं सर्वतोऽस्मात् परम् ।।
अध्यात्मं त्वपरोक्षसत्त्वनिरताः सिद्धाः समस्तान्तरे
सर्वार्थेषु समाश्च साधकतमाः स्वीयाः समिष्टाः परे ।।१०

सर्वेषां हि चिदीश-जीव-जगतां मूर्धन्यहंसस्वरां
सौम्यानन्दसुशान्तिसद्रसतमां सानाहतां चित्स्वराम् ॥
स्वात्मानं च चिदात्मवाचकमयीं वाचं स्वशीर्षान्तरां
सर्वज्ञा मुनयः स्वमूर्धनिरतास्तां मन्त्रयन्ते पराम् ॥११॥

पूर्णां सोमकलामयीं रसमयीं शान्तिप्रभां चिन्मयीं
देवैस्तैर्दिविसेवितां भुवि नरैः सम्पूर्णसंपन्मयीम् ॥
वाचं तामिह पद्मिनीं स्वरमयीमीङ्कारमात्रामयीं
धीयोगादनुमन्त्रये श्रियमिमां मन्त्रात्मसंविन्मयीम् ॥१२॥

॥ वाक् इत्येव मन्त्रवर्णः ॥

"वाग्" इत्येव हि मन्त्रवर्ण उदगाद् ऋङमन्त्रवर्णान्तरे
तस्यादावुपदेशतोऽनुवचनं स्याज्जातकर्मान्तरे ॥
प्राङ्नाभेरभिवर्धनात् प्रथमतः संस्कारके वैदिके
सद्योजातशिशोः श्रुतौ सुविहितं वाङ्मन्त्रसंमन्त्रणम् ॥१३॥

"वाग् वाग् वाग्" इति तत् त्रिवारविहितं तस्योपदेशात्मकं
वाङ्मन्त्रस्य तु तत् त्रिवारवचनं सत्संस्कृतिप्रापकम् ॥
तस्मिँस्तच्छ्रुतिमार्गतः प्रविशताद् वागात्मिका सा त्रयी
संस्कारात् प्रतिभाविताऽनुवचनादन्वेति तं वाङ्मयी ॥१४॥

तच्छाखान्तरभेदतोऽत्र बहुधा श्रौत्रादिमन्त्रान्तरैः
मेधाशक्तिकधारणाप्रकृतये युक्तोपदेशाक्षरैः ॥
विद्याबुद्धिवचोमहोबलकृते श्रद्धादिसत्त्वोदये
सद्योजातशिशोस्तुकर्णकुहरे तद्वेदवाङ्मन्त्रणम् ॥१५॥

तारानीलसरस्वतीस्वरपरा वाग् बीज मन्त्राक्षरा
जिह्वायां लिखिता घृतैर्मधुरसैर्हेम्ना सुदूर्वाङ्कुरैः ॥
सर्वज्ञाऽखिलवेदमन्त्रवचसां वाचां धियां संविदां
ईशाना प्रतिवादयत्यमृतदा सा वाग्रसैस्तं शिशुम् ॥१६॥

विद्युद्वज्रचिदिन्द्रवह्निवदना पूर्णेन्दुबिन्द्वानना
हृत्सौम्यामृतरस्यपूर्णरसना सा वाग्रसैकायना ॥
रुद्रात्माऽखिलसन्मुखेऽन्तरुदगादोष्ठापिधानाऽऽन्तरा
दिव्यैर्दन्तगणैर्गुणैः परिवृता वाग् वज्रविद्युत्स्वरा ॥१७॥

दर्शादीष्टिमुखे मखे श्रुतिविधेर्यज्ञीयकर्मान्तरे
होता यत्र वषट् करोति हविषां होमाय याज्यान्ततः ॥
"वागोजः सहओज" इत्यनुपदं तन्मन्त्रयीतात्मवान्
वाक्प्राणादि बलाय युक्तमनसा वाचा वषट्कारवान् ॥१८॥

ज्योतिष्टोममखे तु तद्विकृतिके यत् सोमपानान्ततः
"वाग् देवी" त्यनुमन्त्रणं सुविहितं "सोमस्यतृप्यत्विति" ॥
सद्यस्तद्रसपानतः सुविहिताद् वाग् देवता तृप्तितः
स्वान्तः सन्त्समुदेति सौम्यमनसाऽऽनन्दात्मविद्याग्रसः ॥१९॥

ब्राह्मीशक्तिकसंपदः समुदये दिव्यद्विजन्माप्तये
बुद्धेः संस्कृतिके बटूपनयने तद्ब्राह्मसंस्कारके ॥
ज्ञानाद् ब्राह्मणतोदयाय विहितो ब्राह्मीशरीराप्तये
गायत्रीपरमन्त्रवाक्प्रमुखतो ब्रह्मोपदेशः श्रुतेः ॥२०॥

बाधामृत्युभयादिमोचनकृते दोषादिविध्वंसने
रक्षार्थं भुवि रक्षसामुपहतेः पापात्मनां हिंसने ॥
विद्यासंपदुपाप्तये सुविजये ज्ञाने च संजीवने
मन्त्राणामिह सत्प्रयोगमुखतः सा वाक् समर्था स्वयम् ॥२१॥

एवं सर्वगुणैः प्रपञ्चविषये सत्संपदे प्रेयसे
सत्यासत्यविमर्शनेऽपि विदुषां सत्संविदे भूयसे ॥
सम्पूर्णे परमार्थवस्तुविषये चिच्छक्ति शान्त्याशिषे
वागेवात्मनि सर्वथा विजयते निःश्रेयसे श्रेयसे ॥२२॥

॥ छन्दस्वती मन्त्रात्मिका वाक् ॥

"यद् गायत्रे अधिगायत्रमाहितम्" इति दीर्घतमाः ऋषिः। छन्दस्वती वाग् देवता। जगती छन्दः ॥ ( ऋ० मं० १,१६४,२३ )

"यद् गा॒य॒त्रे अधि॑ गाय॒त्रमाहि॑तं त्रैष्टु॑भाद् वा॒ त्रैष्टु॑भं नि॒रत॑क्षत।
यद् वा जग॒ज्जग॒त्याहि॑तं प॒दं य इत् तद् वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥"

॥ पदपाठः ॥

"यत्। गा॒य॒त्रे। अधि॑। गा॒य॒त्रम्। आऽहि॑तम्। त्रैष्टु॑भात्। वा॒। त्रैष्टु॑भं। निः। अ॒त॒क्ष॒त। यत्। वा॒। जग॑त्। जग॑ति। आऽहि॑तम्। पदम्। ये। इत्। तत्। वि॒दुः। ते। अमृ॒त॒त्वम्। आ॒न॒शुः ॥"

॥ कल्पलता ॥

वाचं छन्दसि सद्रसाक्षरपरां स्वच्छन्दसा संहितां
गायत्र प्रमुखैस्त्रिभिः पविवृतां छन्दस्वतीं सस्वराम् ॥
विन्दन्त्सत्त्वधियाविदैस्त्रिकरणैर्योगेन पूर्णात्मना
प्राप्नोति प्रणिधानतो भगवतश्छन्दोऽमृतत्वं पदम् ॥२३॥

॥ प्रथमं गायत्रं पदम् ॥

गायत्रेऽष्टवसूदितेऽग्निजनिते तच्छन्दसाऽष्टाक्षरे
भूमौ स्थूलशरीरके स्वभुवने चान्तर्यवैश्वानरे ॥
यत् प्रातः सवने च ऋङ्मयपदे तच्छन्दसि स्वे पदे
गायत्र्या निजवाक्पदेन निहितं गायत्रमाद्यं पदम् ॥२४॥

॥ द्वितीयं त्रैष्टुभं पदम् ॥

रुद्रैकादशवर्णके च मरुता स्वे छन्दसि त्रैष्टुभे
देहे सूक्ष्मतरेऽन्तरिक्षसदने प्राणेऽन्तरे तैजसे ॥
यज्ञार्हे यजुषि द्वितीयसवने मध्यन्दिने त्रिष्टुभा
वाचास्थापितमैन्द्रदैवतपरं सद् ब्रह्मणा त्रैष्टुभम् ॥२५॥

सौर्ये द्वादशमासिकाक्षरपरे यज्जागते छन्दसि
व्योमन्युत्तमगे च कारणतनौ प्राज्ञे च सूर्ये परे ॥
सौम्ये सामपदे तृतीयसवने तद् वैश्वदेव्याहिते
वाचो जागतमुत्तमं सुमनसं दिव्यं तृतीयं पदम् ॥२६॥

एतच्छान्दसवस्तुतत्त्वपरकं वागात्मसत्त्वोदितं
तच्छन्दोमयपूरुषात्मपरकं तत्त्वत्रयेणान्वितम् ॥
बाह्यान्तर्यपरात्मवस्तुगमकं वाग्-ब्रह्मभावोन्नतं
गायत्रादिसुनामरूपगुणकं दिव्यामृतत्वप्रदम् ॥२७॥

"गायत्रेण प्रतिमिमीते अर्कम्" इति दीर्घतमा ऋषिः ।
छन्दस्वती वाग् देवता । त्रिष्टुप् छन्दः ॥
(ऋ० मं० १, १६४,२४)

"गा॒य॒त्रेण॒ प्रति॑ मिमीते अ॒र्कम॒र्केण॒ साम॒ त्रैष्टु॑भेन वा॒कम् ।
वा॒केन॑ वा॒कं द्वि॒पदा॒ चतु॑ष्पदा॒ऽक्षरे॑ण मिमते स॒प्त वा॒णीः॑ ॥

॥ पदपाठः ॥

"गा॒य॒त्रेण॒ । प्रति॑ । मि॒मी॒ते॒ । अ॒र्कं । अ॒र्केण॑ । साम॑ । त्रैष्टु॑भेन । वा॒कम् ॥
वा॒केन॑ । वा॒कं । द्वि॒ऽपदा॑ । चतुः॑ऽपदा । अ॒क्षरे॑ण । मि॒म॒ते॒ । स॒प्त । वा॒णीः॑ ॥

॥ कल्पलता ॥

गायत्रेण तमर्कमृक्परममुं वेदं मिमीतेऽग्निना
तेनार्केण च ऋक्परेण महसा सामापि तच्छन्दसा ॥
वाकं सूक्तमयं तथा स्तुतिमयं द्वित्रैश्चतुर्भिः पदैः
वाचस्ते मिमतेऽर्किणोऽक्षरमुखात् ताः सप्तवाणीः स्वरैः ॥२८॥

छन्दाँस्येव हि सन्ति सप्त नियतैः सामस्वरैः सप्तभिः
वाचस्ताः प्रति सम्मिताः स्वरसतः षड्जादिभिस्तैः स्वरैः ।।
सप्तव्याहृतिभिः सदैवततैस्तैर्भौतिकैर्भौवनैः
स्वाऽऽन्तर्येरपि धीन्द्रियैः सहमितैं प्राणैश्च सप्तर्षिभिः ।।२९।।

गायत्री स्वयमग्नितोऽष्टवसुतो ज्योतिर्मुखाऽष्टाक्षरा
सोष्णिक् स्यात् सवितुः स्वरेण रसतो ज्योतिः सवित्री स्वरा ।।
सोमात् सैव चतुष्पदी समुदगात् साऽनुष्टुबष्टाक्षरा
ब्रह्मात्मेह बृहस्पतेस्तु बृहती छन्दस्वती सा परा ।।३०।।

वाङमित्रावरुणात्मनोरपि विराट् सिद्धा दशात्माक्षरा
त्रिष्टुप् सेन्द्रमुखाच्चरुद्रमहसा सैकादशात्माऽक्षरैः ।।
विश्वेदेवमहोमुखाच्च जगती सा द्वादशोष्टाक्षरा
विश्वात्माऽक्षरपूर्णसत्त्वमहिमा ब्रह्मात्मवाक् सत्तमा ।।३१।।

एवं पूर्णपरात्मनोर्भगवतोर्वाग्-ब्रह्मणोरक्षरं
तेनैवाक्षरचिन्मुखेन सकलं विश्वं परं चापरम् ।।
व्याप्तं तेन चराचरं सदखिलं साक्षात् परोक्षात् परं
ब्रह्मैवाक्षरसत्त्वकं विलसति प्रत्यक् चिदात्मान्तरम् ।।३२।।

।। इति एकादशी कला ।।
सम्पूर्णा

## द्वादशी कला ( १२ )

### ।। चतुष्पदी वाक् ।।

"चत्वारि वाक् परिमिता पदानि" इति दीर्घतमाः ऋषिः । वाग् देवता । त्रिष्टुप् छन्दः ।।—( ऋ० १, १६४, ४५ )

"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।।

### ।। पद पाठः ।।

"चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः । गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः । वदन्ति ।।

### ।। कल्पलता ।।

### ( सामान्यतः समग्रमन्त्रार्थः )

चत्वारि प्रपदानि वाक् परिमितान्यन्तर्विदुर्ब्रह्मणः
तेषु त्रीणि गुहाहितानि विविदुर्गुह्यानि ते ब्राह्मणाः ।।
स्वार्थं तानि तु नेङ्गयन्ति हि बहिर्नो वेदयन्ते स्वतः
वाचा तत्र तुरीयमेव मनुजा नित्यं वदन्त्यर्थतः ।।१।।

### ।। अधिभूतम् ।।

तान्याद्ये त्रिपदे दिवि स्वपुरुषे शब्दैकतन्मात्रकाद्
अव्यक्तात्मतयाऽऽत्मनोऽन्तरहिते सद्भूतवाक्सत्त्वके ।।
त्रीण्यन्तर्निहितानि गुप्तकलया मेघादिनादान्ततः
तद्वाचाऽनुकृतेस्तुरीयमपरं मर्त्या वदन्त्यन्तगम् ।।२।।

### ।। अधिदैवतम् ।।

ब्रह्मेन्द्रात्मसमाश्रया(ऽ)प्रतिमितं चिज्ज्योतिरेकात्मकं
ब्राह्मं दिव्यरसस्वरात्मनिनदं ज्योतिस्त्रयी सत्त्वकम् ।।
दिव्यं स्यादमृतं त्रिपात् पुरुषगं पूर्णं परं ब्रह्मवद्
व्यक्तं वाचिकविश्वभूतविततं सर्वे वदन्त्यर्थवत् ।।३।।

## ॥ अध्यात्मम् ॥

अध्यात्मं सकलान्तरे मुनिहितं गुह्यार्थसत्त्वात्मकं
स्वीयं वाक्पदचिच्चतुष्टयमपि ब्रह्मात्मतत्त्वार्थकम् ॥
वाक्पादत्रितयं त्रयीव निधिवत् प्रत्यक् सुधीसंवृतं
स्वान्तर्यं न पराग्दृशः प्रतिविदुस्तुर्यं वदन्त्यर्थदम् ॥४॥

## ॥ आर्षं वाक् पादचतुष्टयम् ॥

वाचः पाद चतुष्टयं समुदगाद् "ओं भूर्भुवः स्वः" पदं
वाच्यं तत् परमार्षमादिमपदं सर्वार्थसत्त्वास्पदम् ॥
तत्राद्यं प्रणवाक्षरं परतमं तत् सर्ववेदाश्रयं
वेद्यं व्याहृतिमन्त्रकत्रयमिदं भूतत्रयैकाश्रयम् ॥५॥

## ॥ अधिज्यौतिषं-अधिविद्यं च ॥

वेद-ज्यौतिष-भूत-लोकविततं दिव्याग्निविद्युद्रवि-
प्रख्यं तद् भुवनेषु दैवतचितेरग्नीन्द्रसूर्यात्मकम् ॥
वाच्यं वाचकशब्दशक्तिसहितं विद्यात्रयीसंहितं
संज्ञा-सद्‌गुणरूपलक्षणयुतं स्याद् "ऋग्यजुःसामकम्" ॥६॥

## ॥ अध्यात्मम् ॥

आन्तर्या परमा त्रिशक्ति चरमा संवित्क्रियेच्छोत्तमा
सर्वान्तःकरणत्रयान्तरतमा वाक्-प्राण-हृत्सत्तमा ॥
तेजोऽबन्नमयी त्रयी सुवचना ज्योतिस्त्रयात्मानना
तिस्रस्ताः परवाच एव वितताश्चिज्ज्योतिरग्र्याः समाः ॥७॥

एतेषु त्रिषु तात्त्विकेषु च पदेष्वन्त्या तुरीयात्मिका
व्यक्ता सा व्यवहारिकीत्यभिमता भाक्ताऽत्र भाषात्मिका ॥
ज्ञानेच्छाकृतिचेतनात्मकमिदंतत्त्वस्वरूपार्थकं
वाचः पादचतुष्टयं हि परमं सर्वार्थ सद्व्यापकम् ॥८॥

## ॥ विशिष्टार्थकं-अध्यात्मम् ॥

अध्यात्मं तु पराभिधाऽऽन्तरतमा सच्चेतना खेचरी
पश्यन्तीति च मध्यमा च भवती तुर्या भवेद् वैखरी ॥
एतद् यौगिकतन्त्रशास्त्रवचनादभ्यासयोगास्पदं
तद्वद् वैदिकमन्त्रयोगपरकं सच्छान्तिशक्तिप्रदम् ॥९॥

एतानीह पदाभिधानि सकलान्याध्यात्मके यौगिके
सङ्केतार्थसरूपकानि परमाण्याहुः स्वतन्त्रान्तरे ॥
वेदादौ तु विशिष्टसत्त्वमुखतो योगेन नामान्तरैः
तत्त्वार्थेन समर्थितानि बहुधा भावेन रूपान्तरैः ॥१०॥

॥ परा वाक् प्रतीची ॥

वक्तुः स्वस्य चिदात्मनः परचितेरुद्यद्विवक्षाधृतेः
वाचः पादचतुष्टयं सुनिहितं देहेऽन्तरात्मन्यपि ॥
या वैश्वानर आत्मनि प्रतिरता सा वाक् प्रतीची परा
सर्वान्तः स्फुरतीह चेतनपरा सा प्रत्यगात्मान्तरा ॥११॥

॥ पश्यन्ती वाक् पराङ्मुखा ॥

मूलाधारपदे सहैव मनसा सञ्चेततेऽर्थात्मना
साऽहम्प्रत्यय संस्फुरच्चितिकला वाक् संविदानाऽऽत्मना ॥
अस्मादेव चिदात्मनः समुदगात् प्रत्यङ्मुखा वाक् परा
पश्यन्ती तु पराङ्मुखा चिदुदिता सा मानसेच्छा परा ॥१२॥

ऊर्ध्वं सन्मनसा सहैव हृदये वैश्वानरेणात्मना
वाक् सैवात्मसमीरणान्निजपदात् प्राणेषु संस्थापनात् ॥
प्राणादूर्ध्वमुखोदिता स्वहृदयादन्तः स्वरन्ती सती
मूर्ध्नो मूलतले च तालुनिहिता प्राणाहता सोद्यती ॥१३॥

सोदीर्णा स्वररूपिणीत्यभिहिता सा मध्यमाऽसुस्वरा
मध्या पूर्वदशा परा सुवचनात् सूक्ष्मस्मृतेरुत्तरा ॥
मूर्ध्नस्तन्निनदप्रतिध्वनिमुखाद् वक्त्रेऽवतीर्णा सती
तस्मिन् कण्ठ-सुतालु-मूर्ध-रसना-दन्तौष्ठसंयोगतः ॥१४॥

वक्त्राद् या समुदेति वर्णविवृता सा वैखरी श्रूयते
सर्वार्थेष्वपि संविदां प्रकटने सर्वैः समाश्रीयते ॥
अन्यस्मै प्रतिवस्तुसंविदुदये सा वाक् समाश्राव्यते
वाचैवात्र समस्तवस्तुवचनात् साऽन्यैः प्रतिश्रूयते ॥१५॥

मूलाधार पदे पदं सुमनसा वैश्वानरेऽध्यास्थितं
प्राणे प्रेरितमन्तरात्ममहसा वैश्वानरेणाहितम् ॥
प्राणेन स्वरितं स्वरात्मकमिदं हृद्यन्तरात्मेहितं
वक्त्रादुच्चरितं वचो रसनया व्यक्तं तुरीयं मतम् ॥१६॥

स्वं हंसाक्षारदिव्यमन्त्रमजपा गायत्रिसंज्ञं परं
जीवात्मैव निरन्तरं प्रजपति प्रज्ञाप्रतिष्ठापरम् ॥
श्वासोच्छ्वास गतेश्चितः प्रगतितो वाक्-प्राण-चित्तान्वयं
शश्वच्छान्तिरसात्मना प्रतिलसन् हंसः समास्ते स्वयम् ॥१७॥

हंसः सन् परमात्मपूर्णगुणभाग् इन्द्रः परः पूरुषः
स्वीयां वाचमनुष्टुभं समनुयन् वृत्त्या चितः सत्तया ॥
हंसो(ऽ)हंस इति प्रति प्रगतितः प्रत्यङ् निवृत्त्याऽऽन्तरे
स्वात्मन्येव परात्मना विरमते सर्वार्थपूर्णेऽक्षरे ॥१८॥

मूर्धन्यन्तरनाहतात्मनिनदा पद्मे सहस्रारके
वाग् वै सा परमात्मना विरमते पूर्णा सहस्राक्षरा ॥
तुर्यातीततया मनः परतमा सोमामृता शन्तमा
निर्वेदेन मनोन्मनी विजयते सत्सामरस्योत्तमा ॥१९॥

॥ अथ प्रकारान्तरेण तत्समर्थनम् ॥

चत्वार्येव पदानि तानि विममे ब्रह्मात्मना वाक् परा
पश्यन्तीति च मध्यमेति विदिता सा वैखरी चान्तरा ॥
मूलाधारगता परा चितिमयी वैश्वानरात्मात्यया
प्रत्यक् चित्तिपराऽऽत्मसंस्फुरणचित् साऽहम्मतिप्रत्यया ॥२०॥

तत् सर्वाक्षरमूलबीजमुदगाद् आद्येऽक्षराम्नायके
साऽनुस्वारयुता पराक्षरमयी सावर्णमालात्मके ॥
तन्त्रेष्टा परमातृकाक्षरमयी तद्बीजमन्त्रात्मिका
साऽहं स्फूर्तिकपूर्णसत्त्वपरमा चैतन्यसत्तात्मिका ॥२१॥

वाग् वै सा परमात्मसत्त्वरसचित् पूर्णा तुरीयात्मिका
संसिद्धा परमा त्रिशक्तिसचिवा प्रत्ना पराशक्तिका ॥
तस्यास्तित्र इमाः परापरचितस्ताः संविदिच्छाक्रियास्
ताः सर्वात्मसु वाङ्मनोऽसुकरणा वह्नीन्दुसूर्योच्छ्रयाः ॥२२॥

प्रत्यक्त्वात् प्रथमा पराऽऽन्तरतमा वाक् केवलं चेतना
पश्यन्तीह पराङमुखा स्फुरणतः संविद् दृगन्तस्तना ॥
प्राणेऽन्तर्हृदि मध्यमा सुमनसा सेच्छा तृतीया स्वरा
वक्त्रादुच्चरिता क्रिया(ऽ)सुवचना तुर्या श्रुता वैखरी ॥२३॥

पश्यन्ती समनाभिकन्दसदने सूक्ष्मा मनःसत्त्वका
प्रत्यञ्चित्त्वपरा पराङमुखहिता सेच्छात्मिका पश्यताम् ॥
पश्यत्यात्मसमीरिता प्रतिपदं स्वज्ञानसद्वाचने
पश्यन्तीं प्रति सन्दृशा प्रणिहिताः पश्यन्ति ते योगिनः ॥२४॥

नाभेरूर्ध्वमुखां हृदन्तरुदितां प्राणस्वरैः सस्वरां
सूक्ष्मां मध्यदशां निजामुपगता सा मध्यमा संज्ञिता ॥
वाग् व सा हृदि मध्यमेन मरुता प्राणेन्द्ररुद्रात्मना
वक्तुं संयतते स्वयं स्वरसतो ज्ञातार्थदा भारती ॥२५॥

सोदीर्णाऽऽत्मनि मूर्ध्नि वागभिहता वक्त्रेऽवतीर्णास्वरा
शीर्षात् सोमरसान्विता रसनया नादात्मिकाऽऽत्मस्वरा ॥
सा प्राणक्रियया खराकृतिपरा शब्दात्मिका सा खरा
सा कर्मेन्द्रियभाग् बहिः प्रकटिता वर्णात्मिका वैखरी ॥२६॥

तास्वेतासु चिदात्मनश्चतसृषु प्रत्यक् स्वरूपाऽऽन्तरा
साऽऽद्या केवल चित्सु शक्ति परमा संवित्प्रधाना परा ॥
अन्स्योक्ता तु तुरीयपात् कृतिमयी वागुत्तरैवापरा
प्रत्यक्षेण पराक्तरा प्रकृतितो वाग् वैखरी स्वःस्वरा ॥२७॥

तिस्रोऽन्तर्निहताः सुगुप्तकलया संचेष्टमानास्तनौ
निर्दिष्टा अपि नामतः श्रुतिपदैः प्राज्ञैस्तथाऽनूदिताः ॥
प्रज्ञानानुभवैकगोचरपदा नो रूपतो वस्तुतः
प्रत्यग्वृत्तिचिदात्मिका उपहिताः पश्यन्त आत्मन्यतः ॥२८॥

वाचो नाम निपातकं तदुभयं धातूपसर्गद्वयं
तद् वैयाकरणादिसम्मतपदं सच्छब्दशास्त्रास्पदम् ॥
वाग् धेनोर्विहिताः स्तनाः श्रुतिनुताः स्वाहा वषड् देवभाग्
द्वौ चान्यौ भजतो मनुष्यपितरौ हन्त स्वधाचेतितौ ॥२९॥

गायत्र्यादिपदानि च त्रिषवणे छन्दःसु पादत्रयं
वह्नीन्द्रादितिजैस्त्रिलोकपतिभिश्छन्दस्त्रयाधिष्ठितैः ॥
सामानि श्रुतिगायनोचितपदान्याहुः स्वराद्यन्वयाच्—
चातुर्थ्यं व्यवहारिकं पदमिदं व्यक्तं हि वाचः समम् ॥३०॥

ईशे ब्रह्मणि चात्मनीह जगति व्योमान्तरे वाचि वै
वाक् पूर्णाऽक्षरतत्त्वतः प्रतिपदं तत्त्वत्रयैकान्वयात् ॥
तत्त्वेषु त्रिषु सन्तता पृथगपि व्यस्ता समस्ता च सा
व्यस्ता स्यात् त्रिपदा स्वराक्षरपरा तुर्या समस्ता परा ॥३१॥

तन्त्रान्तेऽपि तु बिन्दु-मूल-पद-कन्दाद्यैश्च नामान्तरैर्
वाचस्तानि पदानि च प्रतिविदुः स्व स्व प्रकृत्योत्तरैः ॥
सर्वं तत् खलु लक्ष्यभेदमुखतस्तत्त्वादि दृग्योगतः
भूयो विस्तृतमात्मसात्करणतः सम्पूर्णवाग्वैभवम् ॥३२॥

॥ इति द्वादशीकला ॥
संपूर्णा

# त्रयोदशी कला (१३)

॥ वाग् वै गौः ॥

"गौरमीमेदनु वत्सं मिषन्तम्" इति दीर्घतमा ऋषिः। गौः वाग् देवता। त्रिष्टुप् छन्दः ॥ (ऋ० मं० १, १६४, २८)

"गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ॥
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥२८॥"

॥ पदपाठः ॥

"गौः। अमीमेत्। अनु। वत्सम्। मिषन्तम्।
मूर्धानम्। हिङ्। अकृणोत्। मातवै। ॐ इति ॥
सृक्वाणम्। घर्मम्। अभि। वावशाना।
मिमाति। मायुम्। पयते। पयःऽभिः ॥२८॥"

॥ कल्पलता ॥

"गौ" र्वै गीति-गति-क्रिया-चितिपरा चित्संविदिच्छाक्रिया
वागेवानुमिषन्तमात्मनि चितं चित्याऽन्वमीमेत् सुतम् ॥
तन्मूर्धानमजिघ्रदात्मचितितो मातुं स्वहिङ्कारतः
तस्मिन् सत्त्वमुखेन सा स्वरसतः सक्ता(ऽ)सुसंस्कारतः ॥१॥

इच्छन्तं प्रति सम्मिमाति भवती तं मातुमिच्छन्त्यसौ
स्वज्योतिः प्रति संसृजन्तमपितं वाचं निजां मातरम् ॥
तेजः संहित सद्रसैः स्वरचितैः सन्तं सुतं स्वात्मनः
प्रत्यक्षं पवतेऽत्र रक्षितुममुं गौरेव वागात्मना ॥२॥

॥ अधिभूतम् ॥

गौर्वै वाग् दिवि गच्छति स्वरमुखात् सा शब्दतन्मात्रया
विद्युत्प्रेरितया मरुद्विततया ज्योतीरसात्माप्तया ॥
व्योमन्यन्तरुदेति गर्जति गिरा या सङ्गिरन्त्यातता
शक्त्याऽसौ विचरत्यखण्डनिनदात् सा व्योमवाणीर्यते ॥३॥

॥ अधिदैवतम् ॥

वाग् वै गौर्निजधामनीह परमे व्योमन्यखण्डात्मिका
चिद्योगाद् गुरुनादसद्रसमुखान्नित्यं गुरुत्यात्मना ॥
चैतन्याद् गतितो निजेन्द्रचितिभिः संवित्क्रियेच्छादिभिः
स्वार्थं संवितरत्यनन्तमुखतः सा देववाणीष्यते ॥४॥

॥ अध्यात्मम् ॥

अध्यात्मं हृदयेऽन्तरात्मनिहिता मूर्धन्यनादात्मना
संवित्तेऽन्तरनाहता गुरति सा गुर्वीन्द्रचन्द्रात्मना ॥
स्वार्थं वेदयति प्रबोधकलया सर्वेन्द्रियेभ्यः परा
गौर्वै ब्रह्ममयीयमिन्द्रवदना सर्वात्मवाग् आन्तरा ॥५॥

"अयं स शिङ्क्ते येन गौरभीवृता" इति दीर्घतमाः ऋषिः । वाग्-आत्मा च देवता । जगती छन्दः ॥—(ऋ० मं० १, १६४, २९)

"अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥२९॥"

॥ पदपाठः ॥

"अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता ।
मिमाति । मायुम् । ध्वसनौ । अधि । श्रिता ।
सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यम् ।
विऽद्युत् । भवन्ती । प्रति । वव्रिम् । आ । औहत ॥२९॥

॥ कल्पलता ॥

॥ सामान्यतो मन्त्रार्थः ॥

॥ "अयं स शिङ्क्ते येन गौरभीवृता" ॥ (१+१)

येनेयं पुरुषेण वागभिवृता गौर्ब्रह्मणा स्वात्मना
शिङ्क्ते सोऽयमिहान्तरे दिवि बहिः सन् वाङ्मुखः सस्वतः ॥
ब्रह्मात्मा पुरुषः स इन्द्र उदगात् सन् केवलश्चेतनः
प्रज्ञानादिगुणप्रकाशनकृते स्याद् वाक् स्वरैः सस्वनः ॥६॥

॥ "मिमाति मायुं ध्वसनावधि श्रिता" ॥ (१+२)

वाग्वै सा ध्वसनौ निजध्वनिपदे व्योम्न्यन्तरेऽधिश्रिता
मातुं कामयमानमात्मपुरुषं मायुं मिमात्याश्रिता ॥
पूर्णं तं सकलैरमेमपि यसः तस्यैव चित्त्योच्छ्रिता
मेयं तत्र मिमाय वाक् स्वरणतश्चिन्मात्रयोत्याश्रुता ॥७॥

॥ "सा चित्तिभिर्नि हि चकार मर्त्यम्" ॥ (१+३)

सा वाक् चित्तिभिरात्मशक्तिभिरसौ सर्वात्मशक्त्यात्मिका
ज्ञानेच्छाकृतिचित्तिशक्तिवितता पूर्णा पराशक्तिका ॥
मर्त्यं तन्मरणादिशीलमखिलं सद्यश्चकार स्वयं
विश्वं चित्तिसमाश्रयैकनिलयं वाग्-ब्रह्मसत्तान्वयम् ॥८॥

॥ "विद्युद् भवन्ती प्रति वव्रिमौहत" ॥

पूर्णं स्वं पुरुषं परात्मरसदं प्राप्ता हृदा तत्सती
वाग् वै सा परविद्युदात्मकचितेराविर्भवन्ती सती ॥
वाचं स्वां निजवाचकां निजसतीं वृण्वन्तमेवादराद्
वागेव स्वयमात्मनो वरममुं प्रत्यौहत स्वं पतिम् ॥९॥

॥ अधिभूतम् ॥

(२) ॥ "अयं स शिङ्क्ते येन गौरभीवृता"॥ (२+१)

इन्द्रो व्योमनि गर्जति स्वरसतो मेघेन विद्युन्मयो
वव्रे वाचममूं वधूमिव वरस्तां मेघनादात्मिकाम् ॥
पर्जन्यादिमुखेन विश्वजनने संजीवने प्राणिनां
सूर्यज्योतिरनूर्जितः स्वतपसा सद्योऽभिवर्षत्यसौ ॥१०॥

(२) ॥ मिमाति मायुं ध्वसनावधि श्रिता ॥ (२+२)

व्योम्न्यन्तः परनादसम्भवपदे मार्गादि शून्ये स्थिता
सा वाग् वैद्युततेजसं निजचिता शक्त्या मिमात्युत्थिता ॥
विद्युद् घर्षणतः स्ववज्रमुखतस्तन्मेघसद्गर्जनात्
सद्यस्तत् समुदेति वृष्टिकरणं ज्योतिर्जगत्तर्जनात् ॥११॥

(२) ॥ सा चित्तिभिर्नि हि चकार मर्त्यम् ॥ (२+३)

सा वै गौरिह शब्दशक्तिरुदगात् स्वव्योमसद्व्यापिका
नित्याभिर्दिवि दिव्यशक्तिभिरसौ ज्योतीरसैकापिका ॥
भूतं मर्त्यमचेतनं जगदिदं चिन्मात्रसत्वान्वितं
सर्वं स्वं निजनामरूपविशदं वाचा चकारोन्नतम् ॥१२॥

(२) ॥ विद्युद् भवन्ती प्रति वव्रिमौहत ॥ (२+४)

ब्रह्माण्डे बहिरम्बरे सुवितता गौः शब्दशक्तिः सती
विद्युज्ज्योतिषचित्तिरूपमुखतः सा सम्भवन्त्युत्यती ॥
शब्दाधिष्ठितवैद्युतात्मपुरुषं प्रत्यावृणोद् वागियं
वाच्यं स्वं स्वयमात्मसात्करणतः स्वीकर्तुमात्मान्वयम् ॥१३॥

(३) ॥ अधिदैवतम् ॥

(३) ॥ अयं स शिङ्क्ते येन गौरभीवृता" ॥ (३×१)

शिङ्क्ते यः स्वरसात् समुच्छ्व सनतः सञ्चेतनाशक्तितः
सा गौरेव हि वाक् परा प्रमुदिता छन्दः स्वरैः संहिता ॥
वाचं तां पुरुषः सतीमिव परां योगेन वव्रे निजां
संसक्तां स्वरसस्वरैरभिमुखां पूर्णां परोक्षात्मजाम् ॥१४॥

(३) ॥ मिमाति मायुं ध्वसनावधि श्रिता ॥ (३+२)

पूर्णे केवलचेतनेऽत्र परमे व्योम्न्यक्षरे ब्रह्मणि
ब्रह्मेति प्रतिनामरूपकपरज्योतिश्चिता ब्राह्मणी ॥
ब्राह्मी मानवती प्रमाणपरका चित्सामरस्यान्वयं
ब्रह्माणी परमिन्द्रमात्मपुरुषं सा वाङ्मिमाति स्वयम् ॥१५॥

(३) ॥ सा चित्तिभिर्नि हि चकार मर्त्यम् ॥ (३+३)

ब्राह्मी ब्रह्मसती चिता समरसाद् ब्रह्मैव साक्षात् सती
पूर्णा ब्रह्मणि नामरूपगुणतस्तस्मात् पराऽऽत्मन्वती ॥
इन्द्रात्माऽखिलचित्तिभिः समगुणा मायाभिरातन्वती
चिद्योगेन चकार तज्जगदिदं वाग् ब्रह्मणा चिन्वती ॥१६॥

(३) ॥विद्युद् भवन्ती प्रति वव्रिमौहत ॥(३+४)

पूर्णे स्वे पुरुषे परे सुनिरता वाङ्मौनमुद्रोद्यती
ब्रह्मेन्द्राद्यधिदैवतात्ममहसा विद्युद् भवन्ती सती ॥
विश्वस्याभ्युदयाय युक्ततपसा ब्रह्मात्मवाग् देवता
वव्रे प्रत्युदिवाऽञ्चती भगवती स्वं पूरुषं प्रत्यूता ॥१७॥

(४) ॥ अध्यात्मम् ॥

(४) "अयं स शिङ्क्ते येन गौरभीवृता" (४+१)

आत्माऽयं हृदये स्फुरन् निजचिता मूर्ध्नोऽवतीर्णोऽम्बरात्
शिङ्क्ते प्रश्वसनान्निजाभिवृतया वाचा च वाचः स्वरात् ॥
स्वज्ञानादि गुणप्रकाशनपरो योगेन संवित्तये
वाचं स्वां वृणुतेप्रियां निजरतां प्रत्यङ्मुखामात्मनः ॥१८॥

(४) ॥ मिमाति मायुं ध्वसनावधि श्रिता ॥ (४+२)

आत्मन्यन्तरजस्रसत्त्वकलया मूर्धन्यरस्यस्वरा
सर्वेषामपि मूर्ध्नि नित्यनिरता सत्सोमसत्त्वाक्षरा ॥
स्वेशं कामयमानमान्तरतमं वागेव मानात्मिका
सर्वात्मानमिमं मिमाति महसा स्वोन्मानमेयात्मकम् ॥१९॥

(४) ॥ सा चित्तिभिर्नि हि चकार मर्त्यम् ॥ (४+३)

प्रत्यग् वृत्तितताभिरान्तरतमा वाग् आत्मनश्चित्तिभिर
हृद्योगेन सुवीर्यवृत्तिततिभिर्ज्ञानादिचिच्छवित्तिभिः ॥
सा सर्वेन्द्रियवृत्तिसत्त्वसहितं तद्योगभोगास्पदं
चिद्योगेन सचेतनं निजपदं चक्रे शरीरं समम् ॥२०॥

(४) ॥ विद्युद् भवन्ती प्रति वव्रिमौहत ॥ (४+४)

प्रत्यङ्च्यन्तरिताऽऽत्मनि प्रणिहिता मूलेऽसुलीनाऽऽन्तरा
वाक् सर्वात्मसु विद्युदेव भवती चित्त्योद्भवन्ती परा ॥
सर्वात्मानुभवप्रकाशनपरा वागेव तत्संदृशा
वाचंकामयमानमेव पुरुषं प्रत्यौहतान्तर्दृशा ॥२१॥

॥ सरस्वती—सर्वसंजीवनी स्तनवती ॥

"यस्ते स्तनः शशयो यो मयोभूः" इति दीर्घतमाः ऋषिः। सरस्वती देवता। त्रिष्टुप् छन्दः ॥ (ऋ० मं० १, १६४, ४९)

"यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ॥
यो रत्नधा वसुविद् यः सुदत्रः सरस्वति तमिह धातवे कः ॥४९॥"

॥ पदपाठः ॥

"यः। ते। स्तनः। शशयः। यः। मयःऽभूः।
येन। विश्वा। पुष्यसि। वार्याणि ॥
यः। रत्नऽधा वसुऽवित्। यः। सुऽदत्रः।
सरस्वति। तम्। इह। धातवे। करिति कः ॥"

॥ कल्पलता ॥

यस्ते देवि सरस्वति प्रतिहितो मातुः प्रमात्र्याः स्तनः
सौम्यः सत्त्वगुणादिसद्रसमयः शान्तो महोधः स्तनः ॥
सर्वज्ञानरासानुभावनिलयः सन् पूरुषार्थस्तनः
पूर्णानन्दरसोर्मिचेतनधनः सन् वाक् सुधौघस्तनः ॥२२॥

सर्वैश्वर्यकलासुधारसतमं सर्वात्मसंजीवनं
सिद्धं सत्त्वरसायनं सुखतमं सर्वोत्तमं सत्तमम् ॥
सर्वप्राणभृतां सुपोषकतमं सद्वीर्यसंचेतनं
बस्मान् धापयितुं सरस्वति रसं धत्से सदा शन्तमम् ॥२३॥

॥ अधिभौतिकम् ॥

॥ सरस्वान् सूर्यः ॥

वृष्टेर्वर्षणतोऽभितः समरसैः संरक्षितुं प्राणिनः
देवो दिव्यरसेन सर्ववसुधां सन्तर्पयत्यात्मनः ॥
दिव्योऽसौ सविताऽखिलप्रसविता ज्योतिर्मयः सन् पिता
धत्ते सर्वसुधासरः समरसं सूर्यः सरस्वान् स्वतः ॥२४॥

## ।। तच्छक्तिः सरस्वती ।।

तच्छक्तिस्तु सरस्वतीह सरसा साऽद्भिः समाप्यायिनी
स्वर्ज्योतीरससत्त्वयाऽऽत्मकलया प्राणात्मसंजीवनी ।।
वर्षिष्ठा वरुणान्यसौ सुरसरित् सा वारुणी चित्स्तना
धत्ते दिव्यसुधारसं स्वरमृतं सन्तृप्तये प्राणिनाम् ।।२५।।

यस्ते मातृरसस्तनो दिविशयः सन् सर्वदेवाशयः
सौर्येणापि च तेजसा पुरिशयः सन् सोमरस्याशयः ।।
विश्वं पोषयसीह येन सहसा मेघेन रस्यात्मना
शक्त्या वर्षयसीह सर्वसुरसं स्वं वैद्युतेनात्मना ।।२६।।

## ।। अधिदैवतम् ।।

मातस्ते परमात्मनः स्वरचितेर्वाचो बृहत्याः स्तनः
पूर्णानन्दसुधामयः परतमः संवित्सुरस्यस्तनः ।।
येन ब्रह्मरसेन सस्वरवता साम्ना सुसौम्यात्मना
विश्वं पोषयसि स्वयं रसतमा योगेन सोमात्मना ।।२७।।

यस्ते भारति दिव्यवाग्रसमयः श्रीदेववाणीस्तनः
ब्रह्मेन्द्रात्मकसत्यवस्त्ववगमे सद्भावसच्चिन्तनः ।।
ब्राह्मी ब्रह्मणि पूरुषे पुरिशये गुप्तश्चिताऽन्तःस्तनः
ब्रह्मानन्दसुधारसाभिभरितो ब्रह्मात्मसंवित्स्तनः ।।२८।।

दिव्यो वेदचतुष्कसत्त्वसदनो ब्रह्मात्मवाक्सुस्तनः
धर्मार्थोर्जितकाममोक्षवदनः पूर्णः पुमर्थस्तनः ।।
चिद्ब्रह्मात्मचतुष्कवेदवदनः श्रीवेदवाणीस्तनो
वाक् पादास्य चतुष्टयात्मरसनो ब्रह्मात्ममातृस्तनः ।।२९।।

## ।। अध्यात्मम् ।।

मूलेऽन्तर्हृदये च मूर्ध्नि वदने सन्वाक्चतुष्कस्तनो
देहे स्वात्मनि योऽन्तरे पुरिशयः सुप्तः सुगुप्तस्तनः ।।
आन्तर्यस्त्रितयो हितः स शशयो वक्त्रे तुरीयोऽपरः
सिद्धः सोऽत्र चतुष्टयः स्वररसैः पूर्णः परावाक् स्तनः ।।३०।।

यः संविन्मयचेतनोर्मिमधुरः सद्वाग्रसात्मस्तनः
स्वात्मानन्दरसोर्मिसद्रसधरो वाचः परस्याः स्तनः ।।
स्वाहा-हन्त-वषट्-स्वधाकृतिपरः यज्ञार्हमन्त्रोत्तमः
स्वीयार्थेष्टचतुष्टयः श्रुतिपरः संसेव्यतां सत्तमः ।।३१।।

स्वीयं शक्तिरसं समस्तरसदं सन्धापयन्ती स्तनं
सर्वांश्चेतयति स्वकर्मकरणे संबोधयन्ती स्वयम् ॥
पूर्णं शान्तिरसं स्वसंविदुदये सा सन्दधानाऽन्वहं
सा वाग्धेनुरुपास्यतां त्रिकरणैर्वेदैश्चतुस्स्तना ॥३२॥

॥ इति त्रयोदशी कला संपूर्णा ॥

———————

## ॥ चतुर्दशी कला ॥ ( १४ )

### ॥ ऋगादिमूलभूतम् अक्षरं परं ब्रह्म ॥

"ऋचो क्षरे परमेअव्योमन्" इति दीर्घतमाः ऋषिः । अक्षरं देवता । त्रिष्टुप्छन्दः ॥

(ऋ० मं० १, १६४, ३९)

"ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ॥
यस्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते ॥"

॥ पदपाठः ॥

"ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् ।
देवाः । अधि । विश्वे । निऽसेदुः ।
यः । तत् । न । वेद । किम् । ऋचा । करिष्यति ।
ये । इत् । तत् । विदुः । ते । इमे । सम् । आसते ॥

॥ कल्पलता ॥

ऋग्वेदादिसमस्तवाक्परतरे विश्वादिबीजेऽक्षरे
यस्मिन्नभ्युदितं प्रतिष्ठितमिदं देवादिविश्वं जगत् ॥
यस्तद् वस्तुपरं न वेद किमृचा कुर्यात् स वाचा वृथा
ये वैं तत् परमार्थतो विदुरिमे सम्यक् त एवासते ॥१॥

॥ अधिभूतम् ॥

छन्दः संहितमन्त्रवर्णवचसां वाचामृचां सस्वरे
साक्षाद् ब्रह्मणि शब्दशक्तिकपरे तद्वाचकैकाक्षरे ॥
यस्मिन् विश्वमिदं हि तत्र परमे व्योमैकतन्मात्रके
तद्वाच्येऽखिलभूतमूलकमहाभूते महाकाशके ॥२॥

तद्वद् वाचक-वाच्यवस्तुपरके पूर्णेऽक्षरेऽर्थात्मके
प्रज्ञानात्मकपूर्णवस्तुनि परे देवादिविश्वं जगत् ॥
यस्मिन् पूर्णपदे प्रतिष्ठितमदो विश्वाद्यधिष्ठानकं
विश्वाध्यक्षपरं प्रचेतनपरं पूर्णं परं ब्रह्म तत् ॥३॥

यो वै तन्न तु वेत्ति वस्तु परमं ब्रह्मात्मकं चाक्षरं
वाचा केवलया निरर्थकलया प्राप्नोत्ययं किं फलम् ॥
ये तत् सत् परसत्यवस्तुविरलं पूर्णं विदुश्चेदलं
विन्दन्त्यत्र त एव तत् परपदं पूर्णामृतत्वाचलम् ॥४॥

## ।। अधिदैवतम् ।।

ऋग्वेदादिकमन्त्रवाक्परतरं तन्मूलमन्त्राक्षरं
प्रत्यक्षं प्रणवाक्षरं समुदगाद् "ओ"मित्यनुज्ञाक्षरम् ।।
तद्वाच्यार्थपराक्षरात्मकमदः सद्ब्रह्मपूर्णं पदम्
विद्यान्नित्यमनादिसिद्धमखिलाद् देवादिविश्वास्पदम् ।।५।।

नोचेत् केवलया स्तवादिपरया वाचा भवेत् किं फलं
वागर्थप्रतिपत्तितः प्रतिफलेत् सद्वस्तुनिष्ठाफलम् ।।
सर्वार्थेषु तदेव पूर्णमखिलं सत्यं स्वयं स्यादलं
तद्वत् तत्र भवेदपूर्णमपरं यद्वाचिकं केवलम् ।।६।।

सर्वत्रात्र पदार्थसंविदुदये पूर्वं पदप्रत्ययः
पश्चादेव तदर्थबोध उदियात् सद्वस्तुतत्त्वान्वयात् ।।
अर्थानां च समन्वयः प्रति भवेत् प्रायः पदानां चयात्
व्युत्पत्यादि मुखेन तत्त्वपरता योगेन सत्प्रत्ययः ।।७।।

न्यायेनात्मवतामनेन विदुषां जिज्ञासवेऽभ्यर्थिने
पूर्वं ह्यक्षरसत्पदे परिचयो धातोः क्रियादेर्गुणे ।।
तन्नाम्नाऽपि च स स्वरूपमुखतः स्याद् वस्तु सत्प्रत्ययः
वाच्योऽर्थेऽपि परे च वस्तुनि पुनर्लक्ष्ये च तत्त्वत्रयात् ।।८।।

यद् वै न क्षरति स्वयं प्रतिपदं स्वीयात् पदात् स्वः पदान्-
नीरूपान्निजरूपतः समरसात् सन्निर्गुणात् सद्गुणात् ।।
सत्यं वस्तुपरं सुपूर्णमचलं तच्चेतनं केवलं
नित्यं सिद्धमनाद्यनन्तममृतं स्यादव्ययं चाक्षरम् ।।९।।

तद्वत् तस्य समानसत्त्वकलया तद्वाचकं चाक्षरं
यद् वै तत्र भवेत् समस्तकलया तन्मात्रया तत्परम् ।।
स्वार्थं वस्तुसमर्थयत्यनुपदं वाच्यार्थरूपात्मकं
ब्रह्मात्मादिसमस्तवस्त्वनुगतं तद्वाचकैकात्मकम् ।।१०।।

एकं सद् द्वितयं मिथः सममितं वागर्थं सत्त्वात्मकं
तादात्म्येन समन्वितं समरसात् तन्नामरूपात्मकम् ।।
भूयोवाचकवाच्यवस्तुनिरतैः संवित्क्रियाभावनैः
भूयात् तत्परिनिष्ठया भगवतोर्वाग्-ब्रह्मणोर्दशनम् ।।११।।

योगादक्षरनामरूपपदयोर्वागर्थसत्त्वात्मनोः
सद् ब्रह्मात्मकसत्यतत्त्वपरयोः साम्येन वाग्-ब्रह्मणोः ।।
नाम्नो रूपगुणादितो रहितयोः सन्मौनमुद्राप्तयोर्
निर्वेदात्मकसत्त्वयोरमृतता सत्सामरस्याप्तयोः ।।१२।।

एवं शास्त्रदृशा च तात्त्विकदृशा वागर्थसत्त्वं परं
सर्वार्थेष्वपि तत्समन्वयदृशा सत्यं विदन्त्यन्ततः ॥
तद्वद् ये व्यतिरेकतः समदृशा विन्दन्ति सत्यं ततः
सर्वत्रापि समासतेऽन्तरदृशा ते संविदाऽत्यन्ततः ॥१३॥

॥ अध्यात्मम् ॥

वाचो मूलपदेऽन्तरात्मनि परे व्योमात्मके चाक्षरे
मूले स्फूर्तिपदे हृदि-स्वरपदे मूर्ध्न्यन्तरेऽनाहवे ॥
यस्मिंस्तत्सकलेन्द्रियाधिपतयस्तेऽग्नीन्द्रसूर्यादयो
विश्वे नित्यमधिष्ठिताः समधियो ज्योतिर्मयाः पुरुषाः ॥१४॥

वाचं स्वां परमां पराक्षरमयीं स्वान्तर्हितां तत्त्वतः
स्वात्मानं न तु वेत्ति योऽन्तरदृशा लक्ष्यार्थकं वस्तुतः ॥
वाचैवात्र स किं करिष्यति नरः कर्तुं च शक्नोत्ययं
यो वै वेत्तितदक्षरात्मकमिमं नित्यं स आस्ते चिरम् ॥१५॥

वाचस्तत् परमं पदं समुदितं यद् व्योमवद् व्यापकं
तद्वत् तद्गुणवाचकाक्षरपदं सर्वाक्षरैकार्थकम् ॥
पूर्णं केवलमेव चेतनपरं ब्रह्मैव सत्याक्षरं
प्राज्ञं प्रत्नतमं निजान्तरतमं वाच्यं च लक्ष्यार्थकम् ॥१६॥

॥ अस्मिन् अर्थे औपनिषदं तत्त्वदर्शनम् ॥

वेदान्तोपनिषत्सु तात्त्विकदृशा स्वाध्यात्मविद्यान्वये
वर्णादिर्विचिकित्सयाऽक्षरपदाच्छास्त्रेण मीमांसितम् ॥
हृद्योगात् सदसद्विमर्शनमुखात् तद्ब्रह्मसूत्रान्वयान्
निर्णीतं परमक्षरं श्रुतिमतं ब्रह्मैव सत्याक्षरम् ॥१७॥

विश्वस्यापि तदम्बरान्तजगतश्चिच्छक्तितो धारणाद्
ऋग्वेदादिकशास्त्रवाक्प्रमुखतः सद्बोधतः शासनात् ॥
तज्ज्ञानात् प्रतिसिध्यतीह तपसा सद् ब्राह्मणत्वं परं
तस्याज्ञानत एव तत् प्रति भवेत् कार्पण्यदोषास्पदम् ॥१८॥

द्रष्टा दर्शयति बृहन् स पुरुषः सन् अक्षरात्मा स्वयं
वेत्ता वेदयिता महान् स परमः पूर्णामृतत्त्वान्वयात् ॥
नो दृश्यो न च दृश्यतादिविदितो वेद्यो न वा वेदितो
नाऽन्योऽतोऽस्तिततोऽक्षरात् परतरो वेत्ता न सन्दृक्छ्रुतः ॥१९॥

तस्मादेव सतोऽक्षराऽजगदिदं विश्वं बभूवादितः
तस्मिन् संप्रतितिष्ठतीहसततं प्रत्येतिचान्तेऽक्षरम् ॥

एकस्मादिह पावकादणुमयास्तद्विस्फुलिङ्गा यथा
सत्यादक्षरतः सहस्रश इमा उद्यन्ति सर्वाः प्रजाः ॥२०॥

तस्यैवात्र परात्मनः समरसात् संवित् सुविद्या परा
तत्त्वार्थेन समन्वयात् समुदियाद् अध्यात्मविद्योत्तमा ॥
तद्बोधार्थकसाधनैककरणा वेद्याऽधिविद्याक्षरा
वेदात्मा भुवि वाङ्मयीयमपरा विद्याऽपि सत्याक्षरा ॥२१॥

सत्यं वाचकशक्तितत्त्वपरकं वेदादिवागक्षरं
साक्षाद् ब्रह्ममयं सुसाधकतमं सद्वस्तुसंबोधकम् ॥
सत्यं वस्तुपरं चिदात्मकपरं वाच्यं परं ब्रह्म तत्
नो निर्वाच्यमपि प्रमाणमुखतो वेदैकवेद्यं बृहत् ॥२२॥

तस्मात् तत् परमाक्षरं सममितं वाच्यं तथा वाचकं
तेनैकाक्षरसन्मुखात् तदुभयं संबुध्यते तत् समम् ॥
एवं तत्र ऋचां तदक्षरमपि द्वेधात्मसत्त्वोदितं
ब्रह्मैव प्रणवाक्षरं समुद्गात् तद्वाचकं वाक् परम् ॥२३॥

तस्माद् ब्रह्म परं हि वेदविदितं तच्छास्त्रयोनित्वतः
साक्षात् तत्प्रमितेर्विदादिकरणं शास्त्रप्रमाणार्थकम् ॥
तद्वेद्यं परमं समन्वयमुखाद् वेदाक्षरालम्बनात्
संप्राप्यं परसत्यमक्षरमदः सत्प्रत्ययैकास्पदम् ॥२४॥

॥ ( परब्रह्मवाचकं ओङ्काररूपं प्रणवाक्षरम् ) ॥

प्रत्यक्षं प्रणवात्मकं धनुरिदं ब्रह्मैव लक्ष्यं परं
वेद्धव्यं पुनरप्रमादहृदयात् संजागृतेरन्तरे ॥
संविद् भावनसत्क्रियादिपरता योगेन लीनः स्वयं
पूर्णे ब्रह्मणि तन्मयोऽनुभवतात् सत्सामरस्यान्वयम् ॥२५॥

ब्रह्मात्मोदितसर्ववेदवचसां सत् सारभूताक्षरं
ब्रह्मोपासनमूलभूतमखिलाधारं समालम्बनम् ॥
यज्ञार्थं परयोगसत्त्वतपसे सद् ब्रह्मचर्यार्थकं
प्रज्ञानाभ्युदये परात्मनि भवेद् ओमित्यनुज्ञाक्षरम् ॥२६॥

उद्गीथादिगुणस्वरात्ममुखतः सत्सामगानोच्चये
ब्रह्मात्मेन्द्रपरेशवस्तुनि परे योगेन निष्ठाप्तये ॥
उद्गीथं प्रणवाक्षरं परतरं विद्यात् समस्ताश्रयं
तद्गानादिमुखाद् रसानुभवतो विन्देत पूर्णं पदम् ॥२७॥

सन्मात्रात्रितयेन सद्ग्रथनतो वाक् सत्त्वमेकाक्षरं
साक्षाद् ब्रह्मपरं चिदेकरसदं विश्वादिभूतास्पदम् ॥
जाग्रत्स्वप्नसुषुप्तिषु प्रतिपदं देहत्रयैकाश्रयाज्—
ज्ञानेच्छाकृतिचिन्मुखैस्त्रिकरणैर्योगेन पूर्णाक्षरम् ॥२८॥

सन् वैश्वानर आदिमः प्रथमपात् स्यात् तैजसो मध्यमः
प्राज्ञात्मैव तृतीयपादभिमतस्तेऽग्नीन्द्रसूर्यात्मकाः ॥
सोऽनुस्वारपरस्तुरीयपदभाक् पूर्णोऽर्धमात्रः श्रुतः
प्रायेणेन्द्रपरः प्रचेतनपरः प्राज्ञैरमात्रः स्थितः ॥२९॥

ब्रह्मात्मेन्द्रतपोमहः समुदितं वेदात्मवागक्षरं
छन्दः सत्स्वरसस्वरादिमुदितं स्वानन्दभूमाक्षरम् ॥
वाच्यं ब्रह्म परं स्वयं गमयति ध्वन्यं च लक्ष्यार्थकं
पूर्णं ब्रह्म परायणं श्रुतमियाद् ओङ्कारमात्मार्थकम् ॥३०॥

॥ ऋङ्मन्त्रेषु गुप्तम् ईङ्कारात्मकमक्षरम् ॥

॥ छन्दोदर्शने ॥

"ब्रह्मणस्पतेर्यः समिदं गृणाति
अदस्मै दधानोऽमृतं नाम गुह्यम् ॥
तस्येदु विश्वमिदं भवाति भद्रं
ब्रह्मतदीं ज्योतिर्विश्वस्य दर्शयत् ॥

॥ पदपाठः ॥

"ब्रह्मणः । पतेः । यः । सम् । इदम् । गृणाति ।
अत् । अस्मै । दधानः । अमृतम् । नाम । गुह्यम् ॥
तस्य । इत् । ऊँ इति । विश्वं । इदम् । भवाति । भद्रम् ।
ब्रह्म । तत् । ईं इति । ज्योतिः । विश्वस्य । दर्शयत् ॥"

( छन्दोदर्शनम्, अनु० ३, १, ८ )

"ईङ्कारः" परमात्मनः समुदगाद् ऋङ्मन्त्रवर्णान्तरे
विश्वासामपि संविदाश्रयपदां ब्रह्मात्मवाचामृचाम् ॥
आद्यं मूलपदं तदीङ्कृतपदं गुह्यं त्रितत्त्वार्थकं
विश्वव्यापकनादसद्रसमयं पूर्णं तदेकाक्षरम् ॥३१॥

ऋग्वेदादिसमस्तमन्त्रवचने सद्वस्तु पूर्णं परं
हृद्यं तत् परमात्मसत्स्ववचनं सत्यं समस्तास्पदम् ॥
वेद्यं वेदमुखात् परेण तपसा प्रज्ञानयोगोदयाद्
ईमित्येव विदां सतामभयदं पूर्णामृतत्त्वाक्षरम् ॥३२॥

॥ इति चतुर्दशी कला ॥

संपूर्णा

## पञ्चदशीकला ( १५ )

॥ वाङ्माता ॥

ईशो विश्वहिताय वेदमुखया वाचाऽऽविदेशाखिलं
श्रुत्वा तामृषयः शशास्तुरखिलां स्वार्थेऽखिलार्थेऽप्यलम् ॥
वाचाऽनूदितमस्तियद्यदखिलैर्वेदादिभिश्छन्दसा
सङ्केतैरिह सप्तभिः समुदगाद् वाग् वेदवादिन्यसौ ॥१॥

ज्ञानेच्छाकृतिचित्तिसत्त्वसहितं तत्त्वत्रयेणोहितं
ज्ञानोपासनकर्मयोगसहितं भक्त्यादियोगाहितम् ॥
तद्वेदोदितसर्वयोगविहितं विश्वैककल्याणदं
वाग्-ब्रह्मात्मसुधारसायनहितं सच्छान्ति-शक्त्यास्पदम् ॥२॥

"एकः सुपर्णः" इत्यादीनां तिसृणामृचां सध्रिः—तापसोधर्मो वा ऋषिः । वाग्-आत्मा च देवता, जगती छन्दः ॥

( ऋ० म० १०, ११४, ४ )

"एकः सुपर्णः स समुद्रमा विवेश
स इदं विश्वं भुवनं वि चष्टे ॥
तं पाकेन मनसापश्यमन्तितस्तं
माता रेळ्हि स उ रेळ्हि मातरम् ॥४॥

॥ पदपाठः ॥

"एकः । सुऽपर्णः । सः । समुद्रम् । आ । विवेश ।
सः । इदम् । विश्वम् । भुवनम् । वि । चष्टे ॥
तम् । पाकेन । मनसा । अपश्यम् । अन्तितः ।
तम् । माता । रेळ्हि । सः । ऊँ इति । रेळ्हि । मातरम् ॥४॥

॥ कल्पलता ॥

॥ सामान्यतो मन्त्रार्थः ॥

एकः सन्त्स सुपर्ण आत्मरसतः सञ्चेतनेनावितः
सानेकात्मकता मुखाद् द्रवविदं विश्वं समुद्रात्मकम् ॥
पूर्णात्मा स्वयमाविवेश महसा पूर्णं स्वसत्त्वोत्तरं
प्रज्ञानात्मकसन्दृशाऽऽप्तमखिलं संपश्यति स्वान्तरम् ॥३॥

तं सत्त्वेन तपः सुपक्वमनसैवादर्शमात्मान्तरे
सोऽहं तत्परिदर्शनेन महसा लीनः सुपर्णान्तरे ॥
पूर्णात्मप्रतिदर्शनार्थमुचिते तत्सत्यमन्त्रान्तरे
पूर्णं ब्रह्म विराजते मधुरसैर्वागात्ममात्रान्तरे ॥४॥

तं माता परमं सुपर्णपुरुषं सञ्चेतनं स्वान्तरं
मात्री वाक् परिलेढिसत्स्वरसतः स्वानन्दसंविद्रसम् ॥
भूयः सोऽपि सुपर्ण ऊर्ध्वरसनो मात्रीं परां मातरं
वाचं स्वां प्रतिलेढि सौम्यमनसा तां संविदामान्तरम् ॥५॥

एवं तौ च परस्परं सुमनसा लीढः सहासादनाद्
युक्तौ वाग्रसतोऽविविक्तमनसौ संविद्रसास्वादनात् ॥
संसक्तौ परमप्रभावकलया सद्भावतः सर्वथा
सन्तृप्तौ स्व-परप्रसादकलया नित्यं रमेते मिथः ॥६॥

## ॥ अधिभूतम् ॥

आदित्यः स सुपर्ण एक उदगाद् व्योम्नोर्ध्वतः संपतन्
स्वर्ज्योतिः प्रतिजातमम्बुधिमिमं सायं प्रति प्राविशन् ॥
भूयः प्रातरनूदितोऽखिलमिदं संप्रेक्षते सन्दृशा
भव्यं तं परिपक्वसत्त्वमनसा साक्षादपश्यं दृशा ॥७॥

आदित्यः पुरुषोदितेः समुदगाद् आदित्यतः साऽदितिः
सिद्धं वाक्पर-वाच्यवस्तुवदिदं ह्यन्योऽन्यजन्मार्थकम् ॥
सा माताऽदितिरात्मजं निजमुखाद् आदित्यमास्वादते
सूर्यः सोऽप्यदितिं स्वमातरममूं लेढि स्वधासादिताम् ॥८॥

## ॥ अधिदैवतम् ॥

आत्मा केवलचेतनः स पुरुषः सन् एक एव स्वयं
चिच्छक्त्या स सुपर्णवत् परिपतन्त्सञ्चेतमानोऽम्बरे ॥
स्वस्मादेव समुद्रवद् रसतमं स्वीयान्तरिक्षं पदं
प्रत्यक् प्राविशदादितोऽत्र सकलं सोऽन्वीक्षते सर्वतः ॥९॥

दिव्यं तं च सुसन्दृशं स्वमहसा पूर्णं परोक्षात्मकं
धीर्योगात् तपसा सुपक्वमनसा शान्तेन सौम्यात्मना ॥
द्रष्टारं निजसाक्षिणं प्रति मुखात् प्रत्यग्दृशा स्वात्मनः
सत्साक्षात्करणाददर्शममृतं सद्ब्रह्म सत्त्वान्वयात् ॥१०॥

पूर्णं तं पुरुषं स्वमिन्द्रममरं सच्छन्दसां सत्पतिं
छन्दोवर्षकमात्मसत्त्वरसदं छन्दो रसैकास्पदम् ॥
माता तस्य सुतत्त्वबोधनपरा छन्दोमयी वाक् परा
लेढि स्वं स्वरतोऽन्तरात्मरसतो मात्री प्रमाणात्मिका ॥११॥

सोऽपि ब्रह्म रसान्वयेन पुरुषो मात्रीं निजां मातरं
वाचं स्वां प्रतिलेढि चिद्रसनया संवित्स्वरूपोत्तराम् ॥
एवं तौ च समानसत्त्वकलया तादात्म्ययोगाद् विदा
लीढः पूर्णविरामतो निजपदे चित्सामरस्यात् सदा ॥१२॥

॥ अध्यात्मम् ॥

सर्वान्तःपुरुषेऽन्तरेऽयमुदगाद् एकश्चिदात्मा स्वयं
सर्वस्मात् परमश्चिताऽऽन्तरतमो धीभ्यः परः सत्तमः ॥
धीयोगेन सचेतनोऽयमहमासिद्धः सुपर्णात्मकश्
चैतन्येन समुद्रवत् सुहृदयं स्वं प्राविवेशान्तरम् ॥१३॥

प्रत्यङ्ङ सोऽभ्युदितोऽयमान्तरदृशा विश्वं विचष्टे निजं
प्रत्यञ्चं समपश्यमत्र मनसा प्रत्यग्दृशाऽहन्धिया ॥
माता वाक् परमाचिताऽऽन्तरहमा नित्यं स्फुरन्ती स्वया
स्वान्तर्लेढि रसस्वरोद्रसनया शीर्षण्यचित्सत्त्वया ॥१४॥

प्रत्यञ्च्यन्तरुपात्तदृक् सुमनसा स्वान्तर्निवृत्तां निजां
प्रत्यालेढि निजान्तरेऽयमहमावाचं प्रतीचीं पराम् ॥
तावन्योऽन्यरसानुषक्तमनसौ लीढः सुगूढौ दृढौ
गाढालिङ्गनतोऽन्वितौ परिवृढौ योगाधिरूढौ मिथः ॥१५॥

॥ अस्मिन् अर्थे ऐतरेयमतं वासिष्ठवचनोपबृंहितम् ॥

वाङ्माता मनसाऽन्विता स्वपतिना प्राणोऽत्र तस्याः सुतः
सोऽप्यन्तर्निजवाग्रसस्वरमुखो मुख्योऽग्नि-शक्रोन्मुखः ॥
जीवात्मा स्वयमैतरेयकथितो वाक् पुत्रतां प्रत्यृतः
प्राणस्यापि च वाचि मातृवचनं वासिष्ठवाक् प्रत्यृतम् ॥१६॥

मन्त्रेऽस्मिन् प्रतिशब्दयोर्विरहतस्तत्प्राण-पुत्रार्थयोः
तच्छब्दश्च पुरोक्तवस्तुविषये युक्तः परामर्शकः ॥
एकः सोऽत्र सुपर्ण आत्मवचनो विश्वान्तरो विश्वदृग्
द्रष्टव्योऽत्र चिदग्रयाऽऽन्तरधिया दृष्टः परात्मैव सः ॥१७॥

सत्यात्मा पर मन्त्रवाग्रसमयी वागात्मयोगोन्मनी
सेव्या स्वात्मसुसंविदाऽऽत्मनि परानन्दामृतास्वादिनी ॥
छन्दोवाग्रसऋङ्मुखाद् रसनया विद्यारसास्वादनाच्-
छन्दोवर्षकमिन्द्रमेव शरणं विन्द्यात् समासादनात् ॥१८॥

॥ द्वितीया ऋक् पञ्चमी ॥

"सुपर्णं विप्राः कवयो वचोभि-
रेकं सन्तं बहुधा कल्पयन्ति ॥

छन्दांसि च दधतो अध्वरेषु
गृहान् सोमस्य मिमते द्वादश ॥५॥"
"सुऽपर्णम् । विप्राः । कवयः । वचःऽभिः ।
एकम् । सन्तम् । बहुऽधा । कल्पयन्ति ॥
छन्दांसि । च । दधतः । अध्वरेषु ।
गृहान् । सोमस्य । मिमते । द्वादश ॥५॥

॥ पदपाठः ॥

॥ कल्पलता ॥

एकं सन्तममुं सुपर्णमपरे प्रत्नैर्वचोभिः परैर्
विद्वांसः प्रतिकल्पयन्ति बहुधा सद्रूपकैर्नामभिः ॥
सत्त्वैः शक्तिगुणक्रियास्थितिमुखैस्त्वत्त्वैश्च भूतादिभिः
सिद्धार्थैश्च सहस्रशोऽपरिमितैस्तद्विश्वतोऽनन्ततः ॥१९॥

सत्यं ब्रह्म परोक्षमत्यधिततं नित्यं श्रुतं निर्गुणं
सर्वस्वैः सदसद्गुणैर्विरहितं तन्नामरूपादिभिः ॥
पूर्णः सन् स सुपर्ण आत्मवचनः सञ्चेतनापूरणाद्—
आस्ते बिन्दुरिवैव पूर्णवदनश्चित्सत्त्ववाणीरणात् ॥२०॥

ब्रह्मात्मा स सुपर्ण ईश सगुणो ब्रह्मा स इन्द्रः पुमान्
ब्रह्माण्डेऽत्र सचेतनः समुदगात् पिण्डेऽप्यणीयान् महान् ॥
सिद्धः सत्त्वगुणप्रधानकलया वाचा धिया संविदा
शक्तया नेमसमात्मसत्त्वपरया स्त्रीसत्त्वकः पूरुषः ॥२१॥

इन्द्रः सन् स्वविभूतिभिः स भगवान् सन् पारमैश्वर्यवान्
ब्रह्मात्मैव पुमान् निजप्रकृतितश्चिच्छक्तितत्त्वान्वयात् ॥
स्त्रीरूपोऽभ्युदियाय सा भगवती वाग् वै शचीन्द्रात्मिका
तस्माद् वस्तु सदेकमेव परमं स्त्री-पुन्नपुंस्त्वात्मकम् ॥२२॥

सत्या वाक् परमात्मनि स्वपुरुषे चित्सामरस्याञ्चिता
तादात्म्यात् पुरुषात्मतामधिजगौ साऽयःशलाकाऽग्निवत् ॥
तस्मात् सा पुरुषीति मन्त्रमुखतस्तन्त्रेऽपि संबुद्धितः
वेदे ता वनितात्मकाः प्रकृतयः सिद्धाः पुरुष्यः श्रुताः ॥२३॥

शक्तीस्ताश्च सतीः स्त्रियोऽत्र सकला मातृत्वसत्त्वान्विताः
शक्ताः स्त्रीतनुभूमिसत्प्रकृतकाः पुत्रप्रसूत्यै श्रिताः ॥
तानेवाहुरिहान्वयेन पुरुषान्त्सञ्चेनैकात्मकान्
यो वेदेदमयं पितुश्च स पिता पुत्रो भवेत् तत्त्ववित् ॥२४॥

तस्माद् ब्रह्मणि वाचि चात्मनि न सा स्त्री-पुन्नपुंस्त्वात्मता
लोके सा तु शरीरयोगपरया संप्राप्तया संज्ञया ॥
बीजक्षेत्रगुणैश्चतद्विरहतः प्रत्यक्षतो युज्यते
सा न स्यादपरोक्षचेतनपरे पूर्णे परोक्षात्मनि ॥२५॥

एवं सर्वमपि प्रपञ्चितमिदं वाचैव सत् कल्पितं
तस्मात् केवलमेव वाग्वलिसितं सिद्धं हि वाग्वैभवम् ॥
पूर्णं वस्तुपदं स्वतोऽप्यधिततं वीतं समस्तात् सतस्
तत् स्त्री-पुंस्त्वनपुंसकत्वरहितं नित्यं भवेदव्ययम् ॥२६॥

तस्मादेव परात्मिका भगवती सर्वस्वपूर्णात्मिका
जीवेऽस्मिञ्जगतीश्वरेऽपि च परे पूर्णा सुपूर्णात्मिका ॥
सम्पूर्णः स महर्षिमूर्धनि महान् सौम्यः सुपर्णश्चिता
पूर्णं सत्त्वमनुश्रुतं भगवतोर्वाग्-ब्रह्मणोश्छन्दसा ॥२७॥

वाचा सोऽत्र सुपर्ण आदिपुरुषः सिद्धोऽखिलार्थालयः
सन् वर्णापरनाममन्त्रवलयस्तद्देवतैकालयः ॥
तस्मिन्नेव समस्तवस्तुविलयस्तस्मात् समस्तोदयः
वाक् सत्त्वात् सरसस्वराक्षरमयात् सर्वस्वभावोदयः ॥२८॥

पञ्चज्ञान-सपञ्चकर्मकरणैः प्राणैर्दशात्मानना
वागेका दशधात्मिका समुदगादेकादशेनात्मना ॥
आन्तर्यैः करणैश्चतुर्धिरधिकैश्चातुर्दशैकात्मिका
युक्तैकेन चिदात्मना विजयते वाक् पञ्चदश्यात्मिका ॥२९॥

वाग्वै सा परमा सुपर्णचरणा संवित्क्रियेच्छेरणात्
तेजोऽबन्नकलागुणा त्रिकरणा वाक्-प्राण-चित्तेक्षणा ॥
सा वाक्-प्राण-मनःश्रुतीक्षणपरा पञ्चाननप्रेक्षणा
सप्तात्मा श्रवण-त्वगक्षि-रसना-नासा-मनो-धीगुणा ॥३०॥

षोडश्या ध्रुवया परात्मकलया युक्ता सुपूर्णात्मिका
हृद्योगादमृतादिभिः सुमनसा वाक् पूर्णचन्द्रात्मिका ॥
सा प्राणादिभिरात्मचित्सु करणैर्ब्रह्मात्मपादात्मकैः
संज्ञानादिभिरात्महार्दचितिभिः पूर्णा सुपर्णात्मिका ॥३१॥

पूर्णात्मैव सुपर्णवाक्स्वरसतस्तत्सर्वधीयोगतः
सैकात्मेयमनन्तसत्त्वकलया सिद्धा सहस्राक्षरा ॥
चित्या संततधारया स्वरणतः सा विश्व रूपात्मिका
श्रुत्या नित्यमपारया श्रवणतो वेद्या सुवेदात्मिका ॥३२॥

॥ इति पञ्चदशीकला संपूर्णा ॥

# षोडशी कला (१६)

पञ्चमी ऋक् अष्टमी ॥ ब्रह्म वाक् ॥

ऋ० १० मं० ११४।८

"सहस्रधा पञ्चदशान्युक्था
यावद् द्यावापृथिवी तावदित् तत् ॥
सहस्रधा महिमानः सहस्रं
यावद् ब्रह्म विष्ठितं तावती वाक् ॥८॥

॥ पदपाठः ॥

"सहस्रऽधा । पञ्चऽदशानि । उक्था ।
यावत् । द्यावापृथिवी इति । तावत् । इत् । तत् ॥
सहस्रऽधा । महिमानः । सहस्रम् ।
यावद् । ब्रह्म । विऽस्थितम् । तावती । वाक् ॥८॥

॥ कल्पलता ॥

वाच्यार्थात्मकसत्यवस्तुपरमं तच्चैकमेवास्थितं
वाचा वाचकशक्तितत्त्वकलया तादात्म्य सत्त्वोत्थितम् ॥
भूयः स्वीय विभूतियौगिकचितेराविर्बभूव स्वयं
सर्वार्थेन सहस्रधा सुविततं सावन्त्य-विश्वात्मकम् ॥१॥

उक्थान्युच्चतमानि तत्र बहुधा तत्त्वादिसद्भावतः
प्रायः पञ्चदशात्मकानि विविधान्याविर्बभूवात्मतः ॥
भूतैः पञ्चतयैस्त्रिकैः प्रतिमितैस्तन्मात्रकैरिन्द्रियैर्
ब्रह्माण्डं च सहस्रशः प्रतिबभौ पिण्डं च देहात्मकम् ॥२॥

सत्यं वस्तु तदेकमेवपरमं ब्रह्मैव हीन्द्रात्मकं
माहात्म्येन सहस्रशः प्रतिततं तद् विश्वरूपात्मकम् ॥
नित्यं वाचक-वाच्यवस्तुमुखतस्तन्नामरूपात्मना
व्याप्तं चेतनमायया परमया वाग्-ब्रह्म सत्त्वात्मना ॥३॥

॥ अधिभूतम् ॥

श्रेष्ठानीह वियन्मुखानि च महाभूतानि पञ्चत्रिकैः
शब्दादीनि च तद्गुणार्थपरकाण्याद्यानि तन्मात्रकैः ॥
श्रोत्रादीनि तदिन्द्रियाण्यपि पुनर्दिग्देवताद्यैः समं
श्रेयः पञ्चदशात्मकं तनुभृतां निःश्रेयसैकाश्रयम् ॥४॥

॥ अधिदैवतम् ॥

उक्थं पञ्चदशात्मकं दिविषदां तत्त्वाधिदैवात्मकं
दिव्यं ज्यौतिषसत्त्वकानलमरुत्सूर्येन्दुदिग्दैवतम् ॥
वाक्प्राणाक्षिमनःश्रुतिप्रकृतिका यज्ञीयदेवात्मकाः
योगेष्टाखिलयज्ञसाधनपरा होत्रादयो याजकाः ॥५॥

॥ अध्यात्मम् ॥

पञ्चानां त्रितयेन पञ्चदशकं स्यादिन्द्रियाध्यात्मकं
प्राणानामपि कर्मणां च करणं सत्संविदां तद्धियाम् ॥
उक्थान्यत्र सहस्रशः प्रमुखतो व्याप्त्या महिम्नाऽऽत्मना
सानन्त्यात्मतयाऽऽत्मनि प्रतिततान्याद्यानि सर्वात्मना ॥६॥

"वाङमाता" स्वपरार्थतत्त्वपरता योगेन विश्वात्मिका
वेद्यावेद्यसमस्तवस्तुनिरता सा विश्वविद्यात्मिका ॥
वेदात्मोदितचित्सुधावितरणात् सा संविदोत्तारका
साक्षाद् ब्रह्ममयी सदा विजयते विश्वादिमात्रात्मिका ॥७॥

संज्ञारूपगुणक्रियादिचितिभिर्व्याप्त्या स्वविश्वान्वयात्
तद्वत् तद्व्यतिरेकतो निजरसे निर्वेदयोगोदयात् ॥
यावद् ब्रह्मपरं स्थितं समरसाद् वाच्यार्थतादात्म्यतः
तावत्येव हि वाक् परा चितिमयी तद्वाचकात्मा स्थिता ॥८॥

पूर्णब्रह्मसमग्रसामरसचिद्योगादमात्रात्मिका
तन्मात्रात्मकचित्तिसंस्फुरणवित् सा वाक् परा शक्तिका ॥
मौने सद्वचने समानकलया निर्वेदने वेदने
पूर्णा सूक्ष्मतमाऽग्रिमाऽऽन्तरतमा सर्वात्ममूर्धोत्तमा ॥९॥

पूर्णब्रह्म तदुन्मिषच्छ्वसदनुस्वाराद् विसर्गात् स्वतः
वाचं स्वां सुमिमाय वाचकचितिं शक्तिं परां निर्ममे ॥
वागेवात्र मियाय तत् प्रतिपदं विश्वं मिमाना स्वयं
चक्रे वाच्यमथो बभूव भवती तेनार्धमात्रा बभौ ॥१०॥

॥ ब्रह्मेति नामकरणम् ॥

पूर्णं तत् परवस्तुनामरहितं शून्यं स्वरूपादिभिः
वृध्यर्थाद्बृहिधातुतश्चितिकृतेः प्रज्ञानरूपादिभिः ॥
वागेव स्वपरात्मचिच्छ्वसनतस्तज्ज्योतिषा व्यापकं
ब्रह्मेति स्वगुणात्मनामकरणं चक्रे परं वाचकम् ॥११॥

प्राप्तं मातृपदं स्वतोऽपरिमितं प्रत्नं प्रमाणास्पदं
वाचस्तत् परमं पदं निरुपमं सिद्धं स्वसत्ता पदम् ॥
स्वानिर्वाच्यतयोर्जितं हि परमव्योमात्मसत्त्वाक्षरं
साक्षाद् ब्रह्मपरं स्ववाचकपरं ब्रह्मैव सत्याक्षरम् ॥१२॥

### ।। प्रणवनामकरणम् ।।

तद्व्याप्तेरभिवृद्धियौगिकपराकाष्ठाप्तभूमात्मकं
सत्यं ब्रह्म तद् "ओमिति" प्रणवहृत्पूर्णाक्षरैकात्मकम् ।।
तत्सम्बोधनतः प्रणौति नमसा सा वागनुज्ञात्मना
संवित्ते निजसप्तकोपकरणैर्वागष्टमी ब्रह्मणा ।।१३।।

पूर्णात्मन्यपि सामरस्यलसिता सत्तात्रि शक्त्यात्मना
चिन्मात्रे पुरुषे समे रसतमे पूर्णासमानाऽऽत्मना ।।
वाच्यार्थात्मक सत्यवस्तुनि परे सा वाचकात्माऽऽक्षरा
नाम्ना रूपगुणक्रियाचितिमुखैर्ब्रह्मात्मिका वाक् परा ।।१४।।

नीरूपे निरुपाधिके च परमे पूर्णात्मके निर्गुणे
सत्ये निर्विषये निरस्तवचने वाङ्मौनमुद्रात्मिका ।।
सिद्धा स्वात्मनि सत्यवस्तुनि सती सर्वात्मना सद्गुणा
शक्तिर्वागपि तत्परा समरसात् सत्या स्वयं ब्रह्मणा ।।१५।।

शून्ये वस्तुनि शून्यसत्त्ववचना सा पूर्णबिन्द्वात्मिका
नाम्ना रूपगुणैः प्रतीक मुखतः पूर्णा विरामात्मिका ।।
साऽनुस्वारपरा विसर्गरुचिरा वागक्षरैकात्मिका
पूर्णब्रह्मपरात्मसत्प्रकृतिका वाग्विश्वरूपात्मिका ।।१६।।

ब्राह्मीवाचकशब्दशक्तिकतनूर्वाच्यार्थसन्मात्रका
ब्रह्मेन्द्रोर्जितविद्युदात्मकचितिज्योतिः स्वचिन्मात्रका ।।
सा नादस्वरवर्णशब्दवितता संवित्परा भास्वती
साक्षाद् ब्रह्मपरायणा भगवती भूमात्मिका भारती ।।१७।।

सृष्टेः प्रागपि पूर्णशक्तिवचना सत्तात्मिका चेतना
विश्वस्योदयतः स्थितौ निजजगच्चक्रादिसंचालनात् ।।
शक्ता प्रत्युपसंहृतौ निजगुणैः शिष्टा समानाऽऽत्मना
शक्तिः सर्वगुणक्रियाचितिमयी वाक्सर्वभूतात्मना ।।१८।।

प्रत्यक्षं च तथा परोक्षमखिलं तत्त्वं परोक्षं सतां
ब्रह्मोपेन्द्रमहेन्द्ररुद्रमरुतामम्भोवियद्विद्युताम् ।।
वाचैवात्र निरूप्यते सुमितिभिर्नीरूपमप्यर्थतः
वेद्यं विश्वमवेद्यमप्यतितरामावेद्यते तत्त्वतः ।।१९।।

### ।। नामशेषता ।।

सत्यब्रह्मचिदात्मसत्त्वकलिता सत्सामरस्याञ्चिता
सत्यासत्यसमस्तचित्रललिता सा विश्वरूपाङ्किता ।।
सर्वेषां प्रलयेऽपि सत्यवचनास्यान्नामशेषादृता
सर्वादर्शविभूतिमूर्तिवदना वाक्सत्यमन्त्राऽमृता ।।२०।।

॥ मातृत्वं नाम प्रमाणपरकत्वम् ॥

माता मानवती प्रमाणपरता योगेन मात्रात्मिका
मन्त्रात्मा स्वरवर्णशब्दतनुभृद् वाक्छन्दसाऽऽद्यात्मिका ॥
साक्षाद् वाचकशब्दशक्तिकलया वाच्यार्थसत्त्वान्विता
मान्या मन्त्रतनूश्च मन्त्रवदना मन्त्रात्मिका देवता ॥२१॥

॥ वाग् विश्ववित् ॥

विश्वात्मैव सती स्वयं स्वरसतो वाक् सर्वधीयोगतः
विश्वं वेत्ति च वेदयत्यनुपदं विश्वैरमेया स्वतः ॥
चित्या सन्तत धारया श्रवणतः सा विश्वरूपात्मिका
श्रुत्या नित्यमपारया श्रवणतो वेद्येह वेदात्मिका ॥२२॥

वाग्वै ब्रह्म हि सत्यमक्षरमदः सद्ब्रह्म सद्वाचकं
छन्दः संहितमेव मन्त्रवचनं ब्रह्मेति तद्वाचकम् ॥
साक्षाद्ब्रह्म परात्मवस्तुगमकं सर्वार्थसंबोधकं
तादात्म्येन सनामरूपगुणकं सर्वार्थसंसाधकम् ॥२३॥

शब्दब्रह्मसरूपसद्रसमयी वाग् देवतात्मा परा
सत्यासत्यसमस्तवस्तुवचना सर्वैः समानाऽपरा ॥
पूर्णापूर्णपरापरात्मवचना सा सार्वभौमोत्तमा
पूर्णब्रह्मपरायणा विजयते पूर्णात्मिका सत्तमा ॥२४॥

पूर्णंब्रह्मपरोक्षमेव परमं वाच्यार्थसद्रूपकं
सत्यं वस्तुपरं तदक्षरमिति प्राप्यं समं व्यापकम् ॥
योगादुन्मथितं चिरेण तपसा तद्ब्रह्म मन्त्रात्मकं
तत्पूर्णात्मकवाक्सुधारसमयं स्वानन्दसत्त्वात्मकम् ॥२५॥

तत् साक्षादपरोक्षतः समुदितं पूर्णं परोक्षं चितं
तत्त्वैस्तैस्त्रिभिरंजसोर्जति जगज्जीवेशवस्त्वञ्चितम् ॥
सिद्धं सर्वसमन्वयेन परमं सत्सामरस्यात् सदा
वाक्-ब्रह्मात्मरसायनं सुमतिभिः संसेव्यतां संविदा ॥२६॥

शक्त्यै स्वात्मबलेन विश्वविजये प्रापञ्चिकेष्टार्थदं
भुक्त्यै सद्धितसर्वसम्पदुदये स्वातन्त्र्यसौख्यार्थदम् ॥
भक्त्यातत्परमात्मसंविदुदये श्रद्धात्मसत्त्वान्वयं
मुक्त्यै चोर्जति वाक् सुधारसमयं वेदार्थहृद्वाङ्मयम् ॥२७॥

वागेवात्र समस्तवस्तुवचने सत्साधनं तद्विदां
स्यात् सर्वव्यवहारसाधकतमा सा सर्वविद्यास्पदम् ॥
सर्वेष्टार्थसुसिद्धिकृन् मतिमतां प्रापञ्चिके सम्पदां
सृष्टेराप्रलयं समस्तकृतये शक्तेष्टदा संविदाम् ॥२८॥

वाक्संवित्कृतिचेतनाधृतिगुणा सा संविदानाऽऽत्मना
साक्षाद् ब्रह्मसतीपराऽखिलगुणा पूर्णा परब्रह्मणा ।।
सर्वार्थं निजमात्रया स्वरति सा योगेन सर्वात्मना
प्रत्याञ्च्यात्मनि संस्फुरत्यहमिति प्रत्येति पूर्णात्मना ।।२९।।

वाचा सद्रसपूर्णया रसनया व्योमस्वरात्माप्तया
मूर्ध्नः सोमरसाप्तसद्वचनया चित्सामरस्याप्तया ।।
सर्वान्तर्हितचेतनोच्छ्वसनतः प्राणाः प्रचेतोमुखाः
गायत्रीं निजवाक्परां स्वरपरां गायन्ति वाक् चिन्मुखाः ।।३०।।

प्राणास्ते प्रभवन्ति सत्त्वमनसा चित्प्रेरितेनाञ्जसा
वाचः सस्वरगायने स्वमहसा ते वाग्रसैः सद्रसाः ।।
तस्मात् तेऽत्र गयाः श्रुतास्वतपसा वाक् त्रायते तान् गयान्
गायत्री निजगायकान् निजरसैः ब्रह्मात्मनो गायकान् ।।३१।।

गायत्री परदेवताऽऽत्मवदना छन्दोरसैकानना
सा तेजोरससुस्वराऽसुवदना तद्ब्रह्मपञ्चानना ।।
सा तेजोमयवाङ्मुखा श्रुतिमुखा सर्वार्थसंविन्मुखा
साक्षाद्ब्रह्मपरा परात्मकतनूः सत्यात्मसत्त्वोन्मुखा ।।३२।।

नित्यं गायति चिन्मुखेन परमं ब्रह्म स्वयं केवलं
नित्या ब्रह्मसती निजं रसतमं ब्रह्मात्मसत्त्वानलम् ।।
गायन्तं निजहृद्व्रतं प्रतिपदं संत्रायते स्वान्वयं
स्वस्या गीतिपदे स्वरे रसपदे संस्थापयत्यन्वहम् ।।३३।।

।। इति षोडशीकला ।।

संपूर्णा

## ॥ सप्तदशी कला ॥ (१७)

### (सूक्तकल्पलता)

### ॥ वाग् आम्भृणी-आत्मस्तुतिदर्शनम् ॥

प्राज्ञात्मा परमाऽऽत्मनिष्ठमनसा सत्संविदा संदृशा
प्रत्यञ्च्यात्मनि योगनिष्ठमहसा प्रज्ञानतोऽन्तर्दृशा ॥
ब्रह्माणी बृहदात्मने सुमनसा ब्रह्मार्पणान्तर्दृशा
ब्रह्माणि प्रतिसंददर्श तपसा वाग्आम्भृणीस्वर्दृशा ॥१॥

सर्वत्रापि समानभावमुदितां सर्वात्मभावोदितां
सिद्धां सिद्धसमस्तवस्तुषुसमां पूर्णानुभावोर्जिताम् ॥
शक्तिं सर्वगुणात्मिकां रसतमां सद्ब्रह्मणैकात्मिकां
तादात्म्यादहमेव सर्वमिति सा वाक् संददर्श स्वयम् ॥२॥

सर्वात्माद्यनुभावसंविदुदिता पूर्णात्मसाक्षात्कृतेः
सर्वत्रात्मसु सामरस्यमुदिता पूर्णात्मसंवित्कृतेः ॥
तन्मन्त्रान् प्रति संददर्श भवती योगात् तपः संस्कृतेः
तन्मन्त्रानुमुखाऽऽदिदेश सकलं वाग्ब्रह्मवादिन्यसौ ॥३॥

"अहमष्टौ वागाम्भृण्यात्मानं तुष्टाव" (आत्मस्तुतिः)

"अहं रुद्रेभिः" इत्यष्टर्चस्य सूक्तस्य वाग् आम्भृणी ऋषिका। वाग्-आत्मा देवता। त्रिष्टुप्छन्दः ॥

(ऋ० मं० १०, १२५, १-८)

### ॥ प्रथमा ऋक् ॥

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ॥
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥१॥

### ॥ पदपाठः ॥

"अहम्। रुद्रेभिः। वसुऽभिः। चरामि।
अहम्। आदित्यैः। उत। विश्वऽदेवैः।
अहम्। मित्रावरुणा। उभा। बिभर्मि।
अहम्। इन्द्राग्नी इति। अहम्। अश्विना। उभा ॥१॥

॥ कल्पलता ॥

॥ अहं रुद्रेभिः० चरामि० ॥

रोदस्योः परमेऽन्तरिक्षसदने सन्ध्ये पदे मध्यमे
वाग् एकादशभिश्चरत्यनुपदं रुद्रैः स्वविद्युत्तमैः ॥
दिक्संस्थैः समनामरूपगुणकैः प्रभ्राजमानादिभिः
रुद्राणीभिरपिप्रकाशचितिभिः प्रभ्राजमान्यादिभिः ॥४॥

॥ वसुभिः-चरामि ॥

स्वीयैः साष्टगुणैः सहाष्टवसुभिर्भौमाग्नितेजोमुखैः
भूमौ संचरति प्रकृष्टकिरणैः साज्योतिरग्रोन्मुखैः ॥
भूतं स्वं पचति स्वपाचकचिता वाक्सर्वसञ्जीवने
बीजं चाङ्कुरयत्यजस्रतपसा सर्वान्निसंभावने ॥५॥

॥ अहमादित्यैः० ॥

दिव्यैर्द्वादशभिश्चकालकरणैर्मासादिसंभाजकैः
आदित्यैः सह शक्तिभिः समगुणैर्दिव्याग्नितेजोमुखैः ॥
व्योम्न्यन्तश्चरति प्रकाशकिरणैर्वृष्ट्यादिसंपादकैः
सावित्री प्रसवादिशक्तिकलया वाग्देवताऽऽमोदकैः ॥६॥

॥ उत विश्वदेवैः ॥

सर्वत्रापि च विश्वदैवतगणैस्तद्दिव्यभावान्विता
विश्वात्मा विचरत्यलं प्रतिपदं विश्वैश्च देवैर्युता ॥
दिव्या वागिह विश्वदैवतमयी सा विश्वविद्योगिनी
वेदात्मा परविश्ववस्तुविभवा वाग्विश्वविद्योन्मनी ॥७॥

॥ अहं मित्रावरुणोभा बिभर्मि ॥

मित्रोऽसौ दिवि विश्वचक्षुरुषसा ज्योतिर्दिवा सन् रवीः
रात्रौ स्याद् वरुणो मनो रसमयः सोमात्मको नक्तया ॥
तौ मित्रावरुणौ बिभर्ति सहसा वाग्देवतासत्तया
देवौ संचरतश्चिरादहरहर्विश्वादिरक्षाप्तया ॥८॥

॥ अहमिन्द्राग्नी० ॥

इन्द्रः प्राणमयोऽत्र वैद्युतचिता राजा महान् मध्यमो
भौमोऽग्निर्हृदि वाङ्मयः समुदितो देवो हविर्भुग् यमः ॥
इन्द्राग्नी अपि तौ बिभर्ति महसा सा वाक् चितेः शक्तितः
शक्तिः स्यादुभयोस्तयोः सममुखा विश्वादिसंचालिका ॥९॥

सूर्याचन्द्रमसौ सदा सममहो रात्रात्मकौ तावुभौ
तौ द्यावापृथिवी स्वरूपकलितावैन्द्राग्नसत्त्वान्वितौ ॥
अग्नीषोमगुणात्मकौ प्रभवतो ज्योतीरसैकात्मकौ
वागेवात्र बिभर्ति सर्वजगतां संचालकावश्विनौ ॥१०॥

॥ द्वितीया ऋक् ॥

"अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् ॥
अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥२॥

॥ पदपाठः ॥

"अहम् । सोमम् । आहनसम् । बिभर्मि ।
अहम् । त्वष्टारम् । उत । पूषणम् भगम् ॥
अहम् । दधामि । द्रविणम् । हविष्मते ।
सुप्रऽअव्ये । यजमानाय सुन्वते ॥

॥ अहं सोममाहनसं बिभर्मि ॥

सोमः शीतलशान्तिसत्त्वकिरणैः पूर्णो मनः सत्त्वकः
सत्त्वज्ञानमयः समो रसमयः संतापसंहारकः ॥
अज्ञानान्ध-तमोभयादिशमनः सङ्कल्पसत्त्वात्मकः
सोमं स्वं मनसा बिभर्ति महसा वाक्संविदेकात्मिका ॥११॥

॥ अहं त्वष्टारमुतपूषणं भगम् ॥

त्वष्टाऽसौ दिवि तैजसो दिविषदां सन् विश्वकर्माधिपः
पूषा पोषकरश्मिभिः सह रसैः सन् विश्वसंपोषकः ॥
पूर्णैश्वर्यमयो भगः स भगवाँस्ते विश्वसंचालकस्
तान् देवान् प्रतिसंबिभर्ति तपसा वाग्दिव्यतेजोमयी ॥१२॥

॥ अहं दधामि द्रविणं हविष्मते० ॥

यो देवान् यजमान एव दिविजाँस्तान् भूसुरान् मानवान्
सर्वेषामपि याजको गृहपतिर्दाता हविष्मान् भवान् ॥
तस्मै सद्गृहमेधिने सुविदुषे सोमं रसं सुन्वते
यज्ञार्थं द्रविणं ददाति भवती त्यागाय योगार्थिनः ॥१३॥

॥ तृतीया ऋक् ॥

"अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ॥
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥३॥

॥ पदपाठः ॥

"अहम् । राष्ट्री । सम्ऽगमनी वसूनाम् ।
चिकितुषी । प्रथमा । यज्ञियानाम् ॥
ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा ।
भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥

॥ अहं राष्ट्री ंगमनी वसूनाम् ॥

राष्ट्री राष्ट्रभृदेव सा भगवती राष्ट्रार्थकृद् भामिनी
राष्ट्रे संगमनी समस्तवसुधा सत्संपदां स्वामिनी ॥
श्रद्धा सत्त्वकशान्तिशक्तिमहसा सत्त्वात्मने वाग्रसं
ज्ञानं जीवनमप्यलं गमयति स्वानन्दपूर्णामृतम् ॥१४॥

॥ चिकितुषी प्रथमा यज्ञियानाम् ॥

वाग्देवी प्रथमा समस्तजगतां जिज्ञासमानाऽसमा
विद्यानुग्रहतत्परा तनुभृतां सा यज्ञियानां समा ॥
नित्यं यज्ञकृतां समस्तसुखदा यज्ञार्थिनां सत्तमा
सद्यः सन्मनसाऽऽत्मसोमरसकृद् वाग्यज्ञसंवित्तमा ॥१५॥

॥ तां मा देवा व्यदधुः—आवेशयन्तीम् ॥

भूमाख्यां भुवि भूरिभूतिभवनां तां भारतीं भास्वतीं
भर्गाख्यां समसंपदं त्रिभुवनेष्वावेशयन्तीं सतीम् ॥
वाचं तां व्यदधुः समस्तवसुभिः पूर्णां परां व्यापकां
देवास्ते बहुधा विभूतिविततः सर्वस्वसंत्राणदाः ॥१६॥

॥ चतुर्थी ऋक् ॥

"मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ॥
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥४॥

॥ पदपाठः ॥

"मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति ।
यः । प्राणिति । यः । ईम् । शृणोति । उक्तम् ॥
अमन्तवः । माम् । ते । उप । क्षियन्ति ।
श्रधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥४॥

॥ कल्पलता ॥

॥ मया सो अन्नं०—उक्तम् ॥

लोकेऽस्मिन् खलु यस्तु जीवति नरो यः पश्यति प्रज्ञया
वाचोक्तं च शृणोति सत्त्वमनसा यद् वेदशास्त्राज्ञया ॥
शक्त्या सोऽतति सोऽन्नमत्ति सततं वाचा तयैव त्वया
तस्माद् वाचि समं प्रतिष्ठितमिदं सद्ब्रह्मचित्सत्तया ॥१७॥

॥ अमन्तवः०—वदामि ॥

अज्ञाः स्वल्पधियस्तथा जडधियः सर्वज्ञसत्त्वेच्छया
वाचं तां शरणं व्रजन्ति सुधियो वृत्याऽन्यतस्तुच्छया ॥
श्रद्धेयं वचनं वदत्यनुपदं वागेव सत्येच्छया
शृण्वन्तु श्रुतमन्वियात् समधिया नित्यं हितैकेच्छया ॥१८॥

॥ पञ्चमी ऋक् ॥

"अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ॥
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥५॥

॥ पदपाठः ॥

"अहम् । एव । स्वयम् । इदम् । वदामि ।
जुष्टम् । देवेभिः । उत । मानुषेभिः ।
यम् । कामये । तम्ऽतम् । उग्रम् । कृणोमि ।
तम् । ब्रह्माणम् । तम् । ऋषिम् । तम् । सुऽमेधाम् ॥५॥

॥ कल्पलता ॥

॥ अहमेव० यं कामये तंतमुग्रं कृणोमि ॥

वागेव स्वयमावदत्यनुपदं देवैश्च सर्वैर्नरैः
सेव्यं सेवितमेव सत्यममृतं पथ्यं समर्थः परैः ॥
यं यं कामयते स्वयं भगवती तं तं स्वमुग्रं परं
वीर्याप्तं प्रकरोति धीरपुरुषं वागेव सर्वं नरम् ॥१९॥

॥ तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥

ब्रह्माणं परसत्यवस्तुनिरतं तं ब्रह्म विज्ञानिनं
ब्राह्मं मन्त्रदृशां महर्षिमपरं सद्ब्रह्मचित्संदृशम् ॥
सर्वज्ञानसुमेधया समदृशं सर्वज्ञकल्पं नरं
वागेवात्र करोति दिव्यतपसा साक्षात्कृतेर्योगतः ॥२०॥

॥ षष्ठी ऋक् ॥

"अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ ॥
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥६॥

॥ पदपाठः ॥

"अहम् । रुद्राय । धनुः । आ । तनोमि ।
ब्रह्मऽद्विषे । शरवे । हन्तवै । ऊँ इति ॥
अहम् । जनाय । सऽमदम् कृणोमि ।
अहम् । द्यावापृथिवी । आ । विवेश ॥६॥

॥ अहं रुद्राय धनुरातनोमि० ॥

ब्रह्मात्मेश्वरविद्विषां विशरणे वेदादिविद्वेषिणां
बाधार्थं भुवि दुष्टभावनधियां दुष्कर्मदुष्टेषिणम् ॥
विश्वस्याप्युपसंहृतीष्टकृतये रुद्राय विद्युन्मयं
वाग् दिव्यं धनुरातनोति परमं स्वं सत्यमन्त्राक्षयम् ॥२१॥

वाग्वज्रात्मकमेव दिव्यमुदगादुग्रं धनुः सायकं
छन्दः संप्रतिबद्धमन्त्रवचनं चिज्ज्योतिरग्नोल्मुकम् ॥
वाक्छक्त्याः परमं धनुः स्वरमयं तत् सर्वशक्त्यग्रकं
रौद्रं भर्गचिदात्मविद्युदुदितं हृद्वीर्यशक्त्युग्रकम् ॥२२॥

॥ अहं जनाय समदं कृणोमि ॥

सत्त्वेनाखिललोकजीवजगतां शान्त्यै सुखावाप्तये
योगक्षेमकृते समस्तजनताशक्त्यै स्वतन्त्राप्तये ॥
योगेनाखिलदोषदुखःदहने ब्रह्मात्मसंतृप्तये
पूर्णानन्दसुधारसं प्रकुरुते वागेव विश्वेष्टये ॥२३॥

॥ अहं द्यावापृथिवी आविवेश ॥

सर्वेषां जगतां हिते दिविषदां सर्वात्मनोद्धारणे
तद्वत् प्राणाभृतां नृणां भुवि सतां बुध्यादिसंप्रेरणे ॥
सा द्यावापृथिवी निजेन महसा ज्योतीरसोच्चारणे
वाग्देवी तपसाऽऽविवेशमनसा सर्वस्वसंधारणे ॥२४॥

॥ सप्तमी ऋक् ॥

"अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व१न्तः समुद्रे ॥
ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥७॥

॥ पदपाठः ॥

"अहम् । सुवे । पितरम् । अस्य । मूर्धन् ।
मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे ॥
ततः । वि । तिष्ठे । भुवना । अनु । विश्वा ।
उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥७॥

॥ कल्पलता ॥

॥ अहं सुवे पितरमस्य मूर्धन् ॥

विश्वस्यास्य च मूर्ध्नि नित्यमुदितं सर्वप्रजानां पतिं
पातारं पितरं समस्तजनकं सूर्यं जगत्सत्पतिम् ॥
पूर्णं सद्रसदिव्यसत्त्वकलया सोमं मनस्तत्पतिं
वाङ्माताऽत्र समस्तसद्धितकृते नित्यं प्रसूते निजम् ॥२५॥
सर्वस्यास्य शरीरिणोऽसुकरणे मूर्ध्नीह सर्वोत्तमे
सम्पूर्णे च सहस्ररश्मिसदने सोमात्मरस्योत्तमे ॥
चिज्ज्योतीरसयोगवृत्तिकरणे वाक्सर्वसंधारणे
सोमं स्वं जनकं धियां प्रचरणे सूते स्वचित्प्रेरणे ॥२६॥

॥ सोमः ॥

सोमोऽसौ पवतेऽखिलं जनयति प्रत्यङ्धियः प्रेरयन्
सर्वाधारतया दिवं च पृथिवीं वह्निं च सूर्यं प्रयन् ॥
सर्वैश्वर्यसुपूर्णमिन्द्रममृतं विष्णुं च संधारयन्
सूते तं परमं समं रसतमं वागेव सोमं स्वयम् ॥२७॥

॥ मम योनिरप्स्वन्तः समुद्रे ॥

तस्याः संप्रसवैकशक्तिकचितेर्मातुः परायाः परं
वाचो योनिपदं निजं जनिपदं विश्वप्रसूतेः पदम् ॥
सर्वान्तर्बहिरप्यदोऽस्ति परमं व्योमैव मूर्धाभिधं
पूर्णानन्दसुधारसोद्भवपदं पूर्णानुभावास्पदम् ॥२८॥

॥ ततो वि तिष्ठे० स्पृशामि ॥

तस्मात् पूर्णपदाच्च वाग्जनिपदाज्ज्योतीरसैकास्पदात्
सर्वाग्रात् प्रथमं समग्रभुवनान्याविर्बभूवुः परात् ॥
वाग् वै सा प्रथमाऽध्यतिष्ठदखिलं ब्रह्माण्डभूगोलकं
मूर्धन्यं सकलोत्तमं च परमं व्योमस्वचिन्मूलकम् ॥२९॥

॥ अष्टमी ऋक् ॥

"अहमेव वातइव प्र वाम्यारभमाणा भुवनानि विश्वा ॥
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥८॥

॥ पदपाठः ॥

"अहम् । एव । वातःऽइव । प्र । वामि ।
आऽरभमाणा । भुवनानि । विश्वा ॥
परः । दिवा । परः । एना । पृथिव्या ।
एताऽवती । महिना । सम् । बभूव ॥८॥

॥ कल्पलता ॥

॥ अहमेव वात इव ॥

नित्यं वात इव प्रवाति सहसा वागेव वेदात्मना
चिज्ज्योतिः स्वरसद्रसात्ममहसा चिच्छक्तिविद्यात्मना ॥
विश्वान्यादिमवस्तुभूतभुवनान्यात्मैकहृत्कर्षणात्
वागेवारभते चिदात्मबलतः स्वानन्दविद्धर्षणात् ॥३०॥

॥ परो दिवा० संबभूव ॥

द्यौरूर्ध्वं भुवनं पदं दिविषदां ज्योतिःपदं स्वःपदं
भूश्चाधोभुवनं निजं तनुभृतां सर्वक्रियाद्यास्पदम् ॥
तद्द्यावापृथिवी परं समजगत् तत्सर्वलोकाश्रयं
पूर्णां व्याप्य परा बभूव भवती वाग् विश्वभूतिश्रियम् ॥३१॥

॥ वाचः पूर्णात्मता ॥

एवं सा परमात्मचेतनपरा शक्तिः सती वाक्स्वरा
सत्साक्षात्करणात् स्वयं समुदगात् पूर्णाऽऽत्मसंवित्परा ॥
साऽहंस्फूर्तिपराऽखिलाक्षरपरा सर्वात्मचित्संचरा
साऽहम्प्रत्ययचित्परा विजयते सैवाम्भृणी वाक् परा ॥३२॥

॥ इति सप्तदशीकला संपूर्णा ॥

---

# अष्टादशीकला (१८)

॥ सरस्वती ॥

॥ भरद्वाजः ऋषिः बार्हस्पत्यः ॥

बृहस्पतिः सोऽभ्युदगान्महर्षिर्वाचो बृहत्याः पतिरात्मदृष्टिः ॥
तस्माद् भरद्वाज ऋषिः प्रसूतः स मन्त्रदृक् संस्तपसाप्रभूतः ॥१॥
स ब्रह्मणा ब्रह्मसतीं समाश्रुतां सरस्वतीं तां तपसा समाश्रितः ॥
सद्भावतो मन्त्रदृशा समास्थितस्तुष्टावतां मन्त्रमुखात् समाहितः ॥२॥

॥ सरस्वती ॥

सा ब्रह्मणः शक्तिमयी परासती तेजोमयी ब्रह्ममयी सरस्वती ॥
स्रष्टुः क्रियात्माऽखिलसर्गशक्तिका जगत्सवित्रीह निसर्गवृत्तिका ॥३॥
वध्र्यश्वनामाऽत्रतपश्चचार पितुर्ऋणापाकरणार्थमिच्छन् ॥
प्राप्तुं सुतं वाक्स्तवनं चकार संभूतियोगात् तपसा समृच्छन् ॥४॥

॥ सरस्वतीसूक्तम् ॥

"इयमददात्" इति चतुर्दशर्चस्य सूक्तस्य भरद्वाजो बार्हस्पत्यःऋषिः। सरस्वती देवता। आद्यास्तिस्रो जगत्यः। ततो नव गायत्र्यः, चतुर्दशी त्रिष्टुप् ॥

(ऋ० मं० ६, ६१, १-१४)

॥ अथ प्रथमा ऋक् ॥

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ॥
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥१॥

॥ पदपाठः ॥

इयम् । अददात् । रभसम् । ऋणऽच्युतम् ।
दिवःऽदासम् । वध्रिऽअश्वाय दाशुषे ॥
या । शश्वन्तम् । आऽचखाद । अवसम् ।
पणिम् । ता । ते । दात्राणि । तविषा । सरस्वति ॥१॥

॥ कल्पलता ॥

इयं प्रसन्ना भवती सरस्वती वध्र्यश्वनाम्ने ऋषये तपस्विने ॥
तेजस्विनं ब्रह्मसुवर्चसं दिवोदासं ददौ पुत्रमृणाद्विमोचकम् ॥५॥
वाक् सत्त्वतोऽस्यापि सुतः प्रतर्दनो जज्ञेऽत्रसोऽज्ञानतमः सुतर्दनः ॥
प्राज्ञो बभूवेन्द्रवराप्तसाधनात् प्रज्ञात्मकप्राणगुणाद्युपासनात् ॥६॥

या संस्थितं शाश्वतभावसंपर्णि चखाद विश्वस्य हिताय दुर्गुणम् ।
सरस्वति त्वत्प्रतिपादितानि ते दानानि सद्वीर्यतराणि तानि ते ।।७।।

॥ द्वितीया ऋक् ॥

इयं शुष्मेभिर्बिसखाइवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ॥
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ।।२।।

॥ पदपाठः ॥

इयम् । शुष्मेभिः । बिसखाःऽइव । अरुजत् । सानु । गिरीणाम् । तविषेभिः । ऊर्मिऽभिः । पारावतऽघ्नीम् । अवसे । सुवृक्तिऽभिः । सरस्वतीम् । आ । विवासेम । धीतिऽभिः ॥

॥ कल्पलता ॥

सेयं बलैः स्वैस्त्वरया प्रवाहतो महार्णवाभिर्महदूर्मिभिः सतः ॥
भूमौ गिरीणां प्रसृता विवस्वतो बिभेद शृङ्गं बिसनालवत् स्वतः ।।८।।
वाग्विद्युतश्चित्प्रसृतेन तेजसा तद्गर्जितेन प्रबलेन चौजसा ॥
दिव्यं हिमानां घनसानुसोच्छ्रितं विभिद्य नीचैररुजत् तथाऽऽश्रुतम् ।।९।।

॥ पारावतघ्नीम् ॥

यत् सर्वतोऽस्मात् परतः परं स्थितं दूरात् सुदूरेऽपि च गुप्तमस्थितम् ॥
सूक्ष्माच्च यत् सूक्ष्मतरं सदोच्छ्रितं परोक्षमप्यत्र परावदाश्रुतम् ।।१०।।
पारावतं तच्च सदा परोक्षं दृष्टेरहस्यं मनसाऽप्यचिन्त्यम् ॥
वागेव बाह्यान्तरलक्ष्यवेधाच्छक्त्या परं हन्ति समन्त्रयोगात् ।।११।।
यथेह लोकेऽपि परोक्षसिद्धं लक्ष्यं तु वेद्धुं सहसाऽप्यशक्यम् ॥
वाचाऽभिशापादिमुखाददृश्यं लक्ष्यं च वेद्धुं तपसा सुशक्यम् ।।१२।।
तथैव तद्वैदिकतान्त्रिकादिकैर्मन्त्रैः समं वाङ्मुखतश्च साधकैः ॥
समस्तसंभावितलक्ष्यवेधतः शक्यं परं साधयितुं सुबोधतः ।।१३।।
प्रापञ्चिकं वाऽपि च पारमार्थिकं सदर्थकं चाप्यसदर्थमर्थकम् ॥
बाह्यं तथैवान्तरमप्यनर्थकं वाचैव साध्यं भवतीह सार्थकम् ।।१४।।
ब्रह्मादिसद्वस्तु परं परोक्षं स्वान्तश्चिदात्मा प्रथितोऽपरोक्षः ॥
इन्द्रादिचिद्दैवतमासमक्षं प्राप्तुं च वेत्तुं परमं स्वलक्ष्यम् ।।१५।।
तदन्यथा प्राप्तुमशक्यमिष्टं नामावशिष्टं परमं विशिष्टम् ॥
वाचैव वेदादिकया सुवेद्यं वाचा परेभ्योऽपि तथा निवेद्यम् ।।१६।।
धनुःस्वरूपं प्रणवाक्षरात्मकं शरोऽन्तरात्मा परलक्ष्यवेधकः ॥
ब्रह्मैव सद्वस्त्विह लक्ष्यमक्षरं पारावतं तत् खलु सर्वतः परम् ।।१७।।
वागेव सिद्धा प्रणवाक्षरात्मिका पारावतब्रह्मसुलक्ष्यवेधिका ॥
वाचं परां ब्रह्मपरार्थबोधिकां ब्रह्मात्मिकां धीभिरुपास्महेऽभिधाम् ।।१८।।

तस्मात् परां वाचमिमां सरस्वतीं पारावतघ्नीं च यथार्थतः सतीम् ॥
प्राहुर्विदुस्तां श्रुतितः परावतीं सरिद्वतीं तां रसतस्स्विरावतीम् ॥१९॥
पारावतघ्नीं परमां समर्थां वाचं परां विश्वसुरक्षणार्थाम् ॥
आवर्जकैरान्तरधीन्द्रियैः स्वैरुपास्महे नित्यमतन्द्रितैस्तैः ॥२०॥

॥ तृतीया ऋक् ॥

सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः ॥
उत क्षितिभ्योऽवनीराविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥३॥

॥ पदपाठः ॥

सरस्वति । देवऽनिदः । नि । बर्हय । प्रऽजाम् । विश्वस्य । बृसयस्य । मायिनः ॥ उत । क्षितिऽभ्यः । अवनीः। अविन्दः । विषम् । एभ्यः । अस्रवः । वाजिनीऽवति ॥३॥

॥ कल्पलता ॥

सरस्वति त्वं भुवि देवनिन्दकान् तान् मायिनः स्वार्थपरान् स्ववन्दकान् ॥
निबर्हया धातय तत्प्रजां पुनः सर्वस्य तस्यात्मनि गर्ववाहिनः ॥२१॥
त्वं मानवेभ्यो धृतये स्वशक्त्या ता भूर्भुवः स्वः पृथिवीरविन्दः ॥
संजीवनार्थं सुखसाधनार्थमास्रावयो दिव्यरसामृतं स्वम् ॥२२॥
वेदात्मिकात्वं भुवि मानवेभ्यः संविद्रसं स्रावयसि स्वमेभ्यः ॥
ब्रह्मात्मिका ब्रह्मरसं समेभ्यो ब्रह्मण्यसिद्ध्यर्थमिहाखिलेभ्यः ॥२३॥
संधारणायाखिलयज्ञसिध्यै त्वं भूर्भुवःस्वश्च पदान्यविद्यः ॥
ताभिः पुनर्व्याहृतिभिस्तदेभ्यः साऽविन्दयस्त्वं सकलं समेभ्यः ॥२४॥
स्ववाङ्मुखेनैव समस्तयज्ञैर्योगैश्च धर्मैः परसंविदाद्यैः ॥
साऽविन्दयस्त्वं सकलार्थसिद्धिं सत्सम्पदां सर्वगुणैः समृद्धिम् ॥२५॥

॥ चतुर्थी ऋक् ॥

प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती
धीनामवित्र्यवतु ॥४

॥ पदपाठः ॥

प्र । नः । देवी । सरस्वती । वाजेभिः । वाजिनीऽवती ॥
धीनाम् । अवित्री । अवतु ॥४॥

॥ कल्पलता ॥

देवीह दिव्या भुवि सा सरस्वती तेजस्वती सा परदेवता सती ॥
मातेव नः प्राणभृतां पयस्वती संविद्वती सा विदुषां मनस्वती ॥२६॥

वाजोऽन्नमेते न च साऽपि वाजिनी सा सोमसूर्यात्मकचेतसाऽऽश्विनी ॥
सा यज्ञकृद् यज्ञमयी स्वयं सती तद्योगतो वागिह वाजिनीवती ॥२७॥
सर्वासु धीषु स्वविदाऽनुविष्टा सैवान्तरात्मन्यपि संनिविष्टा ॥
धीनामवित्री स्वचिता विशिष्टा वाग्देवताऽस्मानवतु प्रविष्टा ॥२८॥
प्रापञ्चिकेऽर्थे च धियां प्रचोदिनी सा पारमार्थेऽपि विदां प्रबोधिनी ॥
वाग्ब्रह्मवादिन्युतवेदवादिनी सा ब्रह्मचोदिन्युदिताऽऽत्मसाधिनी ॥२९॥

॥ पञ्चमी ऋक् ॥

यस्त्वा देवि सरस्वत्युपब्रूते धने हिते ॥
इन्द्रं न वृत्रतूर्ये ॥५॥

॥ पदपाठः ॥

यः । त्वा । देवि । सरस्वति । उपऽब्रूते । धने । हिते ॥
इन्द्रम् । न । वृत्रऽतूर्ये ॥५॥

॥ कल्पलता ॥

यः संततं स्तौति सरस्वति त्वां धनादिके विश्वहिते समर्थाम् ॥
अज्ञानवृत्रावरणादिनाशे सद्रक्षणायेन्द्रमिव प्रकाशे ॥३०॥
तं ते सुतं वाङ्मनिरतं ह्युपासकं मातेव संभाव्य निजं सदाऽऽश्रितम् ॥
सुज्ञान संजीवनसत्त्वदानतः संरक्ष सद्यः फलसद्विधानतः ॥३१॥
सरस्वति त्वन्महसा सुरक्षितः त्वामेव नित्यं शरणं प्रपद्यते ॥
सर्वेश्वरं हीन्द्रमिवात्मरक्षणे तामिन्द्रशक्तिं च शचीं स्वमातरम् ॥३२॥
॥ इति अष्टादशी कला संपूर्णा ॥

## एकोनविंशी कला (१९)

॥ षष्ठी ऋक् ॥

त्वं देवि सरस्वत्यवा वाजेषु वाजिनि ॥
रदां पूषेव नः सनिम् ॥६॥

॥ पदपाठः ॥

त्वम् । देवि । सरस्वति । अव । वाजेषु । वाजिनि ॥
रद । पूषाऽइव । नः । सनिम् ॥६॥

॥ कल्पलता ॥

त्वं देवि देवेशि सरस्वति त्वं यज्ञेषु युद्धादिषु रक्ष भक्तम् ॥
पूषेव संपोषय सर्वथाऽस्मान् अस्माकमिष्टं प्रतिसाधय त्वम् ॥१॥

॥ सप्तमी ऋक् ॥

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः ॥
वृत्रघ्नी वष्टि सुष्टुतिम् ॥७॥

॥ पदपाठः ॥

उत । स्या । नः । सरस्वती । घोरा । हिरण्यऽवर्तनिः ।
वृत्रऽघ्नी । वष्टि । सुऽस्तुतिम् ॥७॥

॥ कल्पलता ॥

ज्योतिर्मयी सैव सरस्वती परा घोरा हिरण्योर्जितवर्तनिःस्वरा ॥
अज्ञानमोहावरणादिनाशिनी स्तुतिं च नः सेच्छति तत्प्रकाशिनी ॥२॥

॥ अष्टमी ऋक् ॥

यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः ॥
अमश्चरति रोरुवत् ॥८॥

॥ पदपाठः ॥

यस्याः । अनन्तः । अ तः । त्वेषः । चरिष्णुः । अर्णवः ॥
अमः । चरति । रोरुवत् ॥८॥

॥ कल्पलता ॥

यस्या अनन्तोऽकुटिलो महान्त्स्वरः स्वानन्दसच्छान्तिसुधारसार्णवः ॥
वाग् देवताशक्तिकचिन्महार्णवः चरत्यजस्रं जगति प्रभार्णवः ॥३॥
प्रज्ञानसंजीवनसद्रसार्णवः ज्योतिः प्रदीप्तः प्रचरन् महार्णवः ॥
सामस्वरः सत्त्वमयो रसार्णवः चरत्यजस्रेन्दुकला महारवः ॥४॥

॥ नवमी ऋक् ॥

सा नो विश्वा अति द्विषः स्वसॄरन्या ऋतावरी ॥
अतन्नहेव सूर्यः ॥९॥

॥ पदपाठः ॥

सा । नः । विश्वाः । अति । द्विषः । स्वसॄः । अन्याः । ऋतऽवरी ॥
अतन् । अहाऽइव । सूर्यः ॥९॥

॥ कल्पलता ॥

सा वाक् परा सत्यवती ऋतावरी नृणां प्रणेत्री प्रणयेन सूनरी ॥
अहान्यतन् सूर्य इवेहभास्वरी प्रभ्राजते पूर्णचिता विभावरी ॥५॥
साऽस्माकमन्याः सकला अपि द्विषः स्वसॄः सरन्तीः प्रतिसंविघातकाः ॥
शक्त्याऽभ्यतिक्रम्य समस्तबाधकाः वाग् भ्राजतां सूर्य इवार्थसाधकाः ॥६॥

॥ दशमी ऋक् ॥

उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ॥
सरस्वती स्तोम्या भूत् ॥१०॥

॥ पदपाठः ॥

उत । नः । प्रिया । प्रियासु । सप्तऽस्वसा । सुऽजुष्टा ॥
सरस्वती । स्तोम्या । भूत् ॥१०॥

॥ कल्पलता ॥

प्रियासु नः सैव सरस्वती प्रिया सप्तस्वसा सप्तसुधी गतीन्द्रिया ॥
सप्तेन्द्रियैस्तैः प्रतिसेविताऽनया स्तुत्या स्ववाचा हृदि सेव्यतां धिया ॥७॥
यत् सर्वतोऽस्माद् परमं हितं प्रियं प्रज्ञानतः प्रापयति प्रभाग्रियम् ॥
वागेव तस्माद् भवतीह संप्रिया सैवाखिलानां प्रियकृत् समाश्रया ॥८॥
सोमादियज्ञेषु च सूक्तमाप्रियं स्यादग्निदैवत्यमृगादिषु प्रियम् ॥
सरस्वतीळा खलु भारतीति याः तिस्रस्तु देव्यः प्रथिताः समाप्रियाः ॥९॥
वाग् देवता मूर्तय एव ताः समाः सरस्वतीदिव्यमुखाः समोत्तमाः ॥
तिस्रोऽपि ता मातर एव सत्तमाः लोकत्रयाग्नेयचिदन्वयादिमाः ॥१०॥

॥ एकादशी ऋक् ॥

आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् ॥
सरस्वता निदस्पातु ॥११॥

॥ पदपाठः ॥

आऽपप्रुषी । पार्थिवानि । उरु । रजः । अन्तरिक्षम् ॥
सरस्वती । निदः । पातु ॥११॥

दिवं च पृथ्वीं स्वचिताऽन्तरिक्षं व्याप्य स्थिता वाक् सकलं समक्षम् ॥
निन्दादितोऽस्मान् परिपातु नित्यं स्वीयं प्रतिज्ञावचनं च सत्यम् ॥११॥

॥ द्वादशी ऋक् ॥

त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती ॥
वाजेवाजे हव्या भूत् ॥१२॥

॥ पदपाठः ॥

त्रिऽसधस्था । सप्तऽधातुः । पञ्च । जाता । वर्धयन्ती ॥
वाजेऽवाजे । हव्या । भूत् ॥१२॥

॥ कल्पलता ॥

सा भूर्भुवः स्वस्त्रिपदे भवन्ती सा सप्तधामस्वपि संप्रयन्ती ॥
सा पञ्च भूतान्यभिवर्धयन्ती स्तुत्या प्रभूताऽभवदुज्ज्वलन्ती ॥१२॥
बाह्यान्तरेषु त्रिषु सँल्लसन्ती सप्तस्वथो पञ्चसु संवसन्ती ॥
त्रि-पञ्च-सप्तात्मसु बृंहयन्ती वाग् बृंहते ब्रह्म समर्थयन्ती ॥१३॥
तस्मात् परा सा सकलार्थसिध्यै यज्ञे तथान्नादिकृते च युद्धे ॥
वाग्देवतैवात्र समाश्रयार्हा बभूव सर्वत्र समर्थनार्हा ॥१४॥

॥ त्रयोदशी ऋक् ॥

प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा ॥
रथइव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥१३॥

॥ पदपाठः ॥

प्र । या । महिम्ना । महिना । आसु । चेकिते ।
द्युम्नेभिः । अन्याः । अपसाम् । अपःऽतमा ॥
रथःऽइव । बृहती । विऽभ्वने । कृता ।
उपऽस्तुत्या । चिकितुषा । सरस्वती ॥१३॥

॥ कल्पलता ॥

महामहिम्नाऽऽत्मनिसंविदाना संवेद्यते याऽखिलसन्निदाना ॥
बलैश्च याऽन्याकृतिचित्प्रधाना वाक्कर्मणां कर्मतमाऽऽनिधाना ॥१५॥
सरस्वती सा बृहतीह बृंहते वाग् विश्वभूत्यै सुकृता विभूयते ॥
श्रीर्भारती सा रथवत्सुमंहते समाश्रयार्हा भुवि वेत्तुमिच्छते ॥१६॥

॥ चतुर्दशी ऋक् ॥

सरस्वत्यभि नो नेषि वस्यो मार्प स्फरीः पर्यसा मा न आ धक् ॥
जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥१४॥

॥ पदपाठः ॥

सरस्वति । अभि । नः । नेषि । वस्यः ।
मा । अप । स्फरीः । पयसा । मा । नः । आ । धक् ॥
जुषस्व । नः । सख्या । वेश्या । च । मा ।
त्वत् । क्षेत्राणि । अरणानि । गन्म ॥१४॥

॥ कल्पलता ॥

सरस्वति त्वं वसतेः समान्त्स्वान् सन्मार्गतः संनयसि स्वतोऽस्मान् ॥
मानस्त्यजेथाः सममुक्षयान्ते मा कर्षयाधोऽभिभवादपार्थान् ॥१७॥
सेवस्व नः प्रेमहृदाऽन्वितानि सख्यानि भूयः प्रतिभावितानि ॥
त्वत्तो विशून्यानि तु नीरसानि क्षेत्राणि माऽगन्म सुदुस्तराणि ॥१८॥
वेदादिवाचां विगतस्वराणि ज्ञानेन शून्यानि निरक्षराणि ॥
सद्वाग्रसैस्त्वद्विरहात् क्षराणि रूक्षाणि माऽगन्म दुरक्षराणि ॥१९॥
तदान्तरं नाम सतां समेषां ज्ञानं स्वयं प्रेरयति स्वमेषाम् ॥
तद्वाङ्मुखात् सत्त्वमुदेति तेषां सवित्प्रकाशादिकृते परेषाम् ॥२०॥

"शं सरस्वती सह धीभिरस्तु"
(ऋ० ७।३५।११)

चिदात्मसत्त्वेन सरस्वती सा सर्वासु वै सप्तसु धीषु सिद्धा ॥
वागष्टमी स्वान्तरचेतना स्यात् संवित्प्रधानाऽऽत्मसु सामरस्यात् ॥२१॥
धीनां मुखेनात्मनि संगृहीतां तां संविदं सर्वजनाविगीताम् ॥
शृण्वीत जानीत विदार्पयन्तीं वाचोन्मुखेन स्वरतः प्रगीताम् ॥२२॥
ताभिः स्वधीभिः सह संविदाऽऽसा साऽमन्दसानन्दरसस्वरात्मा ॥
ज्ञानप्रदानादिह शंतमा सा सरस्वती नः सह धीभिरस्तु ॥२३॥
वाग्देवता साऽष्टपदी समग्रा प्राणैश्च धीभिः कृति-चिद्-विदग्रा ॥
धीर्योगसंविद्रससंप्रदानात् सरस्वती नः सति शं तनोतु ॥२४॥

॥ सरस्वतीवन्तौ इन्द्राग्नी ॥

आहं सरस्वतीवतोरिन्द्राग्न्योरवो वृणे ॥
याभ्यां गायत्रमृच्यते ॥ ऋ० ८।३८।१०

॥ पदपाठः ॥

आ । अहम् । सरस्वतीऽवतोः । इन्द्राग्न्योः । अवः । वृणे ॥
याभ्याम् । गायत्रम् । ऋच्यते ॥

पूर्णात्मनो वै पुरुषस्य चेतनात् कामात् सतः सन्मनसोऽत्र चन्द्रमाः ॥
दृक्छक्तितोऽसौ सविता च चाक्षुषः प्राणाच्च वायुर्जनिताः श्रुतेर्दिशः ॥२५॥
तेजोरसात्माक्षरसत्त्ववाङ्मुखाद् इन्द्रस्तथाऽग्निश्च सहोदितौ स्वरात् ॥
वाचा वृणे स्वस्ति सरस्वतीवतोरैन्द्राग्नितेजोमयदैवतात्मनोः ॥२६॥
चिदात्मवाक्सत्त्वमुखात्मनोस्तयोः सत्प्राण-वागात्मकयोः समस्तयोः ॥
चिज्ज्योतिषाऽन्तर्बहिराततात्मनोः विश्वस्य सद्रक्षणमावृणीमहे ॥२७॥
याभ्यां च गायत्रमिदं समृच्यते ऋगायते वाक् स्वरतः समर्च्यते ॥
ऋक्-सामसत्त्वेन परेण युज्यते वाक्-प्राणयोगेन स संसमिज्यते ॥२८॥
इन्द्रं प्रगायन्ति हि साम सुस्वराद् गायत्रनाम्नाऽसुरसस्वराक्षरात् ॥
अग्नेश्च तेजोमुखतश्चितोदगाद् गायत्रिनाम्नी परवाक् समाक्षरा ॥२९॥

सरस्वति त्वमस्माँ अविड्ढि मरुत्वती धृषती जेषि शत्रून् ॥
त्यं चिच्छर्धन्तं तविषीयमाणमिन्द्रो हन्ति वृषभं शण्डिकानाम् ॥
ऋ० २।३०।८

॥ पदपाठः ॥

सरस्वति । त्वम् । अस्मान् । अविड्ढि ।
मरुत्वती । धृषती । जेषि । शत्रून् ॥
त्यम् । चित् । शर्धन्तम् । तविषीऽयमाणम् ।
इन्द्रः । हन्ति । वृषभम् । शण्डिकानाम् ॥

मातासुनेत्रीह सरस्वती त्वमस्मानव प्राणभृतः समस्मान् ॥
मरुत्वती प्राण सरुत्स्वरात्मा जेत्री जगत्प्राणविहिंसकानाम् ॥३०॥
ब्रह्मद्विषां सा प्रतिधर्षयन्ती ब्राह्मीं स्वशक्तिं प्रतिवर्षयन्ती ॥
दुर्भावहृद्भेदनसुप्रचण्डा शत्रूञ्जयेदत्र भवेदखण्डा ॥३१॥
दुष्टान् प्रकृष्टान् प्रजहातु सर्वान् शिष्टान् विशिष्टान् परिपातु सुज्ञान् ॥
विश्वं स्वसत्त्वेन करोतु सत्यं वाचा विदाविष्टमिहास्तु नित्यम् ॥३२॥

॥ इति एकोनविंशी कला ॥

संपूर्णा

---

## ॥ विंशी कला ॥ (२०)

### ॥ बृहस्पतिः, ज्ञानस्तुतिः ॥

"बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव नवमी जगती", (सर्वा-सूत्रम्) ॥

"बृहस्पते प्रथमं" इत्येकादशर्चस्य सूक्तस्य बृहस्पतिः
आङ्गिरसः ऋषिः। वाग्, बृहस्पतिः ज्ञानं च देवता।
त्रिष्टुप् छन्दः, नवमी जगती" ॥

( ऋ० मं० १०, ७१, १—११ )

बृहस्पतिर्वाचिकशब्दशक्त्याः वाचो बृहत्याः पतिरादिशक्त्याः ॥
छन्दोमयीं तां तपसेशशक्त्या ददर्श स ब्रह्ममयीं स्वशक्त्या ॥१॥
स वाङ्मुखेनैव निजानुभावाद्-अविर्हितादब्रह्मचिदात्मभावात् ॥
स्वीयं सुविज्ञानमनन्तभावात् तुष्टाव विश्वाभ्युदयैकभावात् ॥२॥
स्वात्मानमन्तर्हितमात्मसाक्षिणं बृहस्पतिः स्तौति शिरोऽन्तरक्षिणम् ॥
स्वस्यैव संबोधनतः समाक्षिणं स्तुवन् ददर्शात्मनि सर्वसाक्षिणम् ॥३॥

### ॥ अथ प्रथमा ऋक् ॥

बृह॑स्पते प्रथ॒मं वा॒चो अग्रं॒ यत् प्रैर॑त नाम॒धेयं॒ दधा॑नाः ॥
यदे॑षां॒ श्रेष्ठं॒ यद॑रि॒प्रमासी॑त्प्रे॒णा तदे॑षां॒ निहि॑तं॒ गुहा॒विः ॥१॥

### ॥ पदपाठः ॥

बृह॑स्पते। प्र॒थमम्। वा॒चः। अग्र॑म्। यत्। प्र। ऐर॑त। ना॒म॒ऽधेय॑म्। दधा॑नाः ॥
यत्। ए॒षाम्। श्रेष्ठ॑म्। यत्। अ॒रि॒प्रम्। आसी॑त्। प्रे॒णा। तत्। ए॒षाम्।
निऽहि॑तम्। गुहा॑। आ॒विः ॥१॥

### ॥ कल्पलता ॥

॥ बृहस्पते प्रथमं वाचो अग्रम् ॥

बृहस्पते ते प्रथमं समग्रं वाचः पदं तत् परमं समाग्रम् ॥
तन्नामधेयं परवाग्रसाग्रं जाताः समे संदधते चिदग्रम् ॥४॥

॥ यत् प्रैरत नामधेयं दधानाः ॥

यत् प्रैरत प्राणभृतः समग्रान् वाग् अग्रतो नामभृतः समाग्रान् ॥
ब्रह्मात्मविद्वाग्रसत्त्वमग्रं बृहस्पतेस्तद्रसनाग्रमुग्रम् ॥५॥

॥ यदेषां श्रेष्ठम् ॥

श्रेष्ठं समस्तैः सुगुणैर्वरिष्ठं श्रेयो वरेण्यं परमं गरिष्ठम् ॥
ज्येष्ठं जगद्बीजकमात्मनिष्ठं निःश्रेयसे श्रेयसि सत्प्रतिष्ठम् ॥६॥

॥ यदरिप्रमासीत् ॥

रिप्रं दुरिष्टं दुरितं दुरुक्तं हिंसा-विनाशादिकदोषयुक्तम् ॥
अरिप्रमस्मात् सुविरुद्धमुक्तं दुर्भावनाप्ताखिलदोषमुक्तम् ॥७॥

॥ प्रेणा तदेषां निहितं गुहाऽऽविः ॥

प्रेणागति-ज्ञानचिताऽन्तरूढं प्रेम्णाऽखिलान्तर्हृदि मूर्ध्नि रूढम् ॥
प्रत्यक्तमं प्राणभृतां निगूढं प्रत्यक्षमाविर्हितमत्यगूढम् ॥८॥
अन्तर्बहिः संविततं सदेकं चिज्ज्योतिरात्मप्रकृतेरनेकम् ॥
अध्यात्ममन्तर्निहितं हि गुह्यं आविर्हितं दिव्यमहस्त्वगुह्यम् ॥९॥

॥ अधिभौतिकम् ॥

आकाशतन्मात्रगुणस्वरात्मकं वायव्यसंस्पर्शगति-क्रियात्मकम् ॥
प्राकाशतेजोगुणवित्प्रकाशकं प्राणात्मसत्त्वामृतसद्रसात्मकम् ॥१०॥
भौमाग्नितेजः स्वरशब्दशक्तिकं वाग्-ब्रह्मसत्त्वं भवतीह भौतिकम् ॥
अचेतनं चेतनसत्त्वभूतिकं वाग्-ब्रह्मतत्त्वं भुवि पाञ्चभौतिकम् ॥११॥

॥ अधिलोकम् ॥

भूमौ तदाग्नेयमथान्तरिक्षे तद्वैद्युतं नादमयं समक्षे ॥
दिव्यं तदादित्यमहः स्वराख्यं वाक्तत्त्वकं भौवनमाधिलोकम् ॥१२॥
सर्वे जनाः प्राणभृतश्चरन्ति यद्वै परं नामभृतः स्वरन्ति ॥
सद्यः प्रजाताः सह सोच्चरन्ति नामैव तद्गुह्यमनुस्वरन्ति ॥१३॥

॥ अधिदैवतम् ॥

बृहस्पते त्वं प्रथमं समाग्रं वागग्रकं वस्तु सबिन्दुसाग्रम् ॥
चराचराः प्राणभृतस्त्वदग्रास्त्वत्प्रेरितानामभृतश्चिदग्राः ॥१४॥
देवाः परे मन्त्रशरीरधारिणः परोक्षतश्चेतनकर्मकारिणः ॥
विद्युन्मरुत्तैजसदेहधारिणः प्रत्यक्षतो विश्वहितेष्टचारिणः ॥१५॥
ते प्रैरयन् विश्वहितार्थमर्थं वाच्यार्थ-सद्वाचकसंविदर्थम् ॥
तेषां यदन्तर्हितमात्मतत्त्वं वाचातदाविष्कृतमीशसत्त्वम् ॥१६॥

॥ अध्यात्मम् ॥

बृहस्पते त्वत् प्रथमं पुरस्ताद् वाचा समग्रं परमं परस्तात् ॥
अन्तर्हितं गुह्यतमं समस्ताद् आविष्कृतं ज्ञानमुदेत्यवस्यात् ॥१७॥

वाचैव तस्मात् सकलं सुवेद्यं तद्वाङ्मुखेनैव समं निवेद्यम् ॥
तद्वैदिकं तत्त्वमिहाधिविद्यं वाग्-वस्तुविज्ञानसुसत्त्वमाद्यम् ॥१८॥

॥ द्वितीया ऋक् ॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ॥
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥२॥

॥ पदपाठः ॥

सक्तुम्ऽइव । तितउना । पुनन्तः ।
यत्र । धीराः । मनसा । वाचम् । अक्रत ॥
अत्र । सखायः । सख्यानि । जानते ।
भद्रा । एषाम् । लक्ष्मीः । निऽहिता । अधि । वाचि ॥२॥

॥ कल्पलता ॥

॥ सक्तुमिव तितउना पुनन्तः ॥

सक्तुं यथा संप्रति चालनीमुखात् पुनन्ति यत्नेन तुषादिशोधनात् ॥
स्वान्तस्तथा सत्त्वविशुद्धिसंगमात् स्वान्ते यतेत स्वयमात्मसंयमात् ॥१९॥
आदौ निजान्तः सदसद्विमर्शनात् सत्यैकतत्त्वार्थगुणानुदर्शनात् ॥
वाग्वस्तुसत्प्रत्ययसंप्रकर्षणाद् यतेत वागात्ममनः प्रहर्षणात् ॥२०॥
मृषाभयाज्ञानतमः प्रणाशने स्वज्ञान-विज्ञानमहः प्रकाशने ॥
वाचाऽऽदिशन्ति प्रतिसन्निवेशने सत्यात्मनाऽन्तस्तु मनोऽधिवेशने ॥२१॥
यस्मिन् निजान्तःकरणात् समैकात् संशोधयन्तः सदसद्विवेकात् ॥
वाचं निजां तां परमान्तरङ्गां सत्यात्मिकां सत्त्वमनस्तरङ्गाम् ॥२२॥
यत्रोच्चरन्त्यत्र मनः प्रपूतां वाचंविदस्तां प्रवदन्ति सत्वाम् ॥
तत्सत्यवस्त्वाद्यनुवादिनीं तां शृण्वन्ति सद्बोधपरां पवित्राम् ॥२३॥
गृह्णन्ति गुह्यार्थविदे सदर्थां जानन्ति सत्यैकहृदे समर्थाम् ॥
वाचं च सत्यात्मकसंविदर्थां विन्दन्ति सत्येन विदन्ति सार्थाम् ॥२४॥
तस्मात् परा संविदि वाचि पूर्णा सत्यादिसर्वस्वकला प्रपूर्णा ॥
लक्ष्मीः सदाऽन्तर्निहिताऽभ्युदीर्णा संवित्सुसम्पत्सकलार्थपूर्णा ॥२५॥
यस्मिन्नुभे वाङ्मनसे यथार्थे सुज्ञानयोगाद् भवतः सदर्थे ॥
सत्यं हि तत्सर्वहिते समेऽर्थे सद्वस्तुबोधादिकृते समर्थे ॥२६॥
संवित्क्रियेच्छादिचिदप्रियाणि सर्वाणि वै धीप्रभृतीन्द्रियाणि ॥
शब्दादिकानां श्रवणादिवृत्या संग्राहकाण्येव समं विदाप्त्या ॥२७॥
सर्वेन्द्रियैर्वृत्तिमुखैर्गृहीतं सत्संविदाप्त्यैर्विषयैः प्रतीतम् ॥
बोद्धुं तथा बोधयितुं प्रगीतं ज्ञानं समं स्वात्मनि संविनीतम् ॥२८॥

ज्ञानप्रकाशैकगुणैकसत्त्वं वाचः प्रधानं परमैकतत्त्वम् ॥
ज्ञानस्य दाने ग्रहणे समानं वागेव विश्वार्थपरं सुमानम् ॥२९॥
सर्वत्र वागिन्द्रियमेकमानं सर्वार्थसंवित्करणं प्रधानम् ॥
सर्वेन्द्रियोदीरितवित्प्रदानं सत्यं हि वाग्वस्तुविदां निदानम् ॥३०॥
तद् भूत-देवात्मकवस्तुवाचकं वागक्षरात्मस्वरशब्दरूपकम् ॥
चिज्ज्योतिरात्मोच्छ्वसनादिरूपकं वाचः सुतत्त्वं परमार्थरूपकम् ॥३१॥
सद्वस्तुसत्त्वात्मकसंविदञ्चिता वागेव पूर्णाऽखिललक्षणोचिता ॥
संवित्क्रियेच्छाचितिशक्तिसंचिता लक्ष्मीः स्वलक्ष्यार्थपरा पराचिता ॥३२॥

॥ इति विंशी कला संपूर्णा ॥

---

## ॥ एकविंशी कला ॥

### ॥ तृतीया ऋक् ॥

यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् ॥
तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥३॥

### ॥ पदपाठः ॥

यज्ञेन । वाचः । पदऽवीयम् । आयन् ।
ताम् । अनु । अविन्दन् । ऋषिषु । प्रऽविष्टाम् ॥
ताम् । आऽभृत्य । वि । अदधुः । पुरुऽत्रा ।
ताम् । सप्त । रेभाः । अभि । सम् । नवन्ते ॥३॥

### ॥ कल्पलता ॥

॥ यज्ञेन वाचः पदवीयमायन् ॥

यज्ञेन धर्मेण निजेन कर्मणा योगेन चान्तस्तपसा समाधिना ॥
महर्षयोऽतीन्द्रियवस्तुसंदृशा वाचः परं मूलपदं समाविशन् ॥१॥
आत्मन्यनन्तामृषिषु प्रपूर्णां निर्वेदतो निर्विषयादुदीर्णाम् ॥
वाचं परां मूलपदात् स्वरन्तीं साहञ्चिता स्वां विविदुः स्फुरन्तीम् ॥२॥
या व्योमवाणीव हि नित्यसिद्धा वाक्छन्दसा मन्त्रमयी प्रसिद्धा ॥
योगाग्निजे मूर्धनि तामुदीर्णां स्वान्तः श्रुतेः शुश्रुवुरीशगीर्णाम् ॥३॥

॥ तामन्वविदन्नृषिषु प्रतिष्ठाम् ॥

तामन्वविन्दन् ऋषयः स्वगीर्णां तेषामृषीणां मुखतः प्रकीर्णाम् ॥
अन्येऽप्यनुप्रापुरनादिवर्णां छन्दोमयीं ब्रह्ममयीं चिदीर्णाम् ॥४॥

॥ तामाभृत्याव्यदधुः पुरुत्रा ॥

स्तुतां समाश्रुत्य ऋषेः श्रुतेर्मुखात् श्रुतां समाश्रित्य समानदृङ्मुखात् ॥
आश्रावयन् सर्वत एव वाङ्मुखात् सर्वात्मभावोदितसंविदुन्मुखात् ॥५॥

॥ तां सप्त रेभा अभि सन्नवन्ते ॥

तां सप्त सत्साधनसंविदर्थाः संपादनीयेष्टमहत्पदार्थाः ॥
प्रापुः फलद्रूपपराः पुमर्थाः प्राप्याः समाः सत्त्वमुखाः परार्थाः ॥६॥
संपत्तयः सप्त परार्थिकादयः स ज्ञान-संजीवनसत्सुखादयः ॥
मर्यादयाऽऽप्ता नियमात्मिकाः समाः सर्वेन्द्रियावृत्ति-निवृत्ति-संयमाः ॥७॥
ते वेदवाचि प्रतिपादिता इमे ग्राह्याः समैः सद्विषयार्थकाः समे ॥
त्याज्याः स्वतोऽसद्विषया अनर्थकाः सेव्यास्तु संविद्विषया हितार्थकाः ॥८॥

॥ चतुर्थी ऋक् ॥

उत त्वः पश्यन् न ददर्श वाचं-
मुत त्वः शृण्वन् न शृणोत्येनाम् ॥
उतो त्वस्मै तन्वं१ वि सस्रे
जायेव पत्य उशती सुवासाः ॥४॥

॥ पदपाठः ॥

उत । त्वः । पश्यन् । न । ददर्श । वाचम् ।
उत । त्वः । शृण्वन् । न शृणोति । एनाम् ॥
उतो इति । त्वस्मै । तन्वम् । वि । सस्रे ।
जायाऽइव । पत्ये । उशती । सुऽवासाः ॥४॥

॥ उत त्वः पश्यन् न ददर्श वाचम् ॥

एकः परां वाचमिहोपपश्यन् न पश्यति स्वां न तु वेत्ति सार्थाम् ॥
कश्चित् तथैको न शृणोति शृण्वन् सत्यात्मिकां नो मनुते यथार्थाम् ॥९॥

॥ उतो त्वस्मै तन्वं वि सस्रे ॥

कस्मैचिदेव स्वयमेव सा सती वाक् संविदा प्रेममयी प्रसीदती ॥
वाचं तनूं स्वां विवृणोति भास्वती स्वात्मानमेवार्पयति प्रशंसती ॥१०॥

॥जायेव पत्य उशती सुवासाः ॥

कस्मै परस्मै प्रयतात्मनेऽस्मै जिज्ञासवे प्रेमहृदे समस्मै ॥
जायेव पत्ये स्वतनूं चिदस्मै स्वात्मानमप्यर्पयतीह तस्मै ॥११॥

## ॥ अधिभूतम् ॥

विद्यां च केचिद्घनगर्जितां खगां श्रुत्वाऽपि वाचं विततां दिगन्तगाम् ॥
ध्वन्यात्मिकामेव विदुर्निरर्थकां जानन्ति नो बाह्यदृशा परार्थकाम् ॥१२॥
छन्दोमयीं ब्रह्ममयीं नितान्तां स्वान्तः स्वरन्तीं न विदुर्निजान्ताम् ॥
तां केवलां शब्दमयीमधीतां नित्यं पठन्तोऽपि वृथागतां ताम् ॥१३॥

## ॥ अधिदैवतम् ॥

ते ब्रह्मणा ब्रह्ममयीं समन्त्रां श्रुत्वाऽपि तां वाचमनाद्यनन्ताम् ॥
तामर्थसंविद्रहितां प्रमान्तां सर्वार्थपूर्णां न विदुः समान्ताम् ॥१४॥
सद्ब्रह्मणः केवल चेतनात्मनः सन्नामरूपादिविशून्यसत्त्वनः ॥
ब्रह्मेति वाचैव हि नाममात्रतः पश्यन् अपीष्टं न तु पश्यति स्वतः ॥१५॥
ब्रह्मादिनामश्रवणेन शब्दतः शृण्वन् अपीष्टं न शृणोति वस्तुतः ॥
दृक्-छ्रोत्रयोर्नामसरूपयोः परं तद्दर्शने च श्रवणेऽप्यगोचरम् ॥१६॥

॥ अध्यात्मम् ॥

मूले निजाधारपदे समाहिता हृदन्तरे मूर्धनि गुप्तसंहिता ॥
परा च पश्यन्त्यभिधा च मध्यमा न श्रूयते नाऽपि च दृश्यते समा ॥१७॥
तद्वन्मुखे श्वासगतेर्निरन्तरा तत्प्राणनापानसदात्मचित्स्वरा ॥
हंसात्मिका मन्त्रमुखाऽजपाक्षरा गायत्रिनाम्नी प्रथितेह वाक् परा ॥१८॥
सर्वान्तिरे मूर्धनि या समाहिता सोमामृतात्मस्वरवाग् अनाहता ॥
वक्त्रान्तरे या रसनाग्रगाऽऽहिता सेयं सुगुप्ताऽऽत्मनि चित्सुसंहिता ॥१९॥
स्वान्तस्स्फुरन्ती त्वहमाचिदात्मिका स्वात्मन्यहञ्चित्यखिलाक्षरात्मिका ॥
चित्तेरहंवित्परमा हृदात्मिका वागेव साऽहं मतिचेतनात्मिका ॥२०॥
स्वान्तस्स्फुरन्तीं न विदुर्निजात्मिकां आश्राविता वेदमुखाच्छ्रुतौ श्रिताम् ॥
आवेदितां वेदवचोऽभ्यनूदितां वाचं न शृण्वन्ति परात्मवाचकाम् ॥२१॥
परस्य वाचः श्रवणं परस्याः सत्यं स्वबोधे करणं समस्याः ॥
परस्य बोधे वचनं निजायाः वाचोऽत्र सत्त्वं द्विविधं परायाः ॥२२॥
वाचोऽत्र दिग्व्योमगुणैकसत्त्वकं सन्नादशब्दात्मकमेव भौतिकम् ॥
यद् विद्युदादेर्ध्वनितं निरर्थकं तत्संश्रुतेश्चानुकृतेश्च सार्थकम् ॥२३॥
सद्ब्रह्मणोनिःश्वसितं सदादिमं ब्रह्मात्मकं छान्दसमेव वाङ्मयम् ॥
चिज्ज्यौतिषं मन्त्रकवाक्छरीरकं वाग्देवताशक्तिकचित्यधिष्ठितम् ॥२४॥
अध्यात्ममान्तर्यतमं चिदात्मनो निःस्वासतोऽनुस्वरितं मुखोदितम् ॥
साक्षादिदं ज्ञानगुणप्रकाशकं श्राव्यं तथोच्चार्यमथोऽनुकारकम् ॥२५॥
सा नामरूपोभयसत्त्वरूपा वागर्थचिद्वाचक-वाच्यरूपा ॥
वाच्यार्थसद्वाचकशक्तिरूपा वाग्ब्रह्मचिन्नेमसमैकरूपा ॥२६॥
वाच्यार्थरूपाक्षरसत्यमाना ब्रह्मादिसत्त्वात्मकवाचकार्णा ॥
तन्नामरूपोभयचित्समाना वागेव विश्वात्मकवस्तुपूर्णा ॥२७॥
दृक्छक्तिपूर्णो मतिमान् अभिज्ञः पश्यन्नपि स्वार्थसरूपशून्याम् ॥
न चक्षुषा पश्यति केवलं तां शब्दात्मिकां वाचमिहार्थशून्याम् ॥२८॥
शृण्वन्नपीमां श्रुतिमानपीष्टां सद्वस्तुतस्तां न शृणोति सार्थाम् ॥
तद्दर्शनं च श्रवणं च तस्माद्वाच्यार्थ-तद्वाचकयोगतः स्यात् ॥२९॥
तेजोमयी वागिति संश्रुता सा वाच्यार्थरूपात्मकवस्तुभासा ॥
सा शब्दनादादिसुवर्णभूषा वाच्यार्थ-सद्वाचकसत्त्वभाषा ॥३०॥
सर्वान्तिरेऽहञ्चितिसत्त्वपूर्णा मूलात् समाधारपदादुदीर्णा ॥
सर्वात्मिका विश्वमुखा समीर्णा सा वाक् परात्मान्तरिताऽखिलार्णा ॥३१॥
वाचस्तु तस्याः पतिरन्तरात्मा वाच्यार्थरूपोऽन्तरितः परात्मा ॥
स्वात्मार्पणं तत् स्वरसेन तस्मै ब्रह्मार्पणं योगमुखात् परस्मै ॥३२॥

॥ इति एकविंशी कला ॥

संपूर्णा

———

## द्वाविंशी कला (२२)

॥ पञ्चमी ऋक् ॥

उत त्वं सख्ये स्थिरपीतमाहु-
नैनं हिन्वन्त्यपि वाजिनेषु ॥
अधेन्वा चरति माययैष
वाचं शुश्रुवाँ अफलामपुष्पाम् ॥५॥

॥ पदपाठः ॥

उत । त्वम् । सख्ये । स्थिरऽपीतम् । आहुः ।
न । एनम् । हिन्वन्ति । अपि । वाजिनेषु ॥
अधेन्वा । चरति । मायया । एषः ।
वाचम् । शुश्रुऽवान् । अफलाम् । अपुष्पाम् ॥५॥

एकं हि कञ्चित् सह संस्थितं चिरं वाचः सखित्वे स्थिरपीतमूचिरे ॥
स वाग्रसो येन चिरप्रतीतः स्थिरं प्रपीतः स्थिरहृत्प्रपायितः ॥१॥
एनं न हिन्वन्त्यपि वाजिनेषु युद्धेषु यज्ञेष्वपि जीवनेषु ॥
वागर्थविज्ञं न तु शक्नुवन्ति तं नीरसं कर्तुमिहेरयन्ति ॥२॥
वाचाऽप्यधेन्वा स्वरसादिहीनया वृथाऽऽप्तया तत्त्वविदाममान्यया ॥
सोऽयं सदा सञ्चरतीह मायया संवित्क्रियापुष्पफलादिशून्यया ॥३॥

॥ अधिभूतम् ॥

दिव्यध्वनेर्वाग्रसपानतृप्तो वर्षाद् रसाच्चातकवत् सुतप्तः ॥
स वै स्वतन्त्रो भुवि जीवनाप्तो यज्ञादिसत्कर्मकृतेऽखिलाप्तः ॥४॥
अन्योऽत्र कश्चित्तु वृथा श्रमाप्तः देवोदितैरन्नरसैरतृप्तः ॥
निरर्थया संचरति प्रतप्तः स्वमाययाऽज्ञानधियाऽऽत्मतृप्त्यै ॥५॥

॥ अधिदैवतम् ॥

एकः परो ब्रह्मणि वेदवाचा संवित्परानन्दसुधारसज्ञः ॥
स्थिरः स सर्वत्र समानदृष्ट्या सज्ज्ञानसज्जीवनसत्प्रहृष्ट्या ॥६॥
अन्यस्तदज्ञानभयादिमायया मिथ्याभिमानाश्रितया विशून्यया ॥
वाचा चरन् केवलयाऽर्थहीनया व्यर्थो भवेज्जीवनमात्रयात्रया ॥७॥

॥ अध्यात्मम् ॥

एकः स्ववागात्मरसादिपानतः संविद्रसादानगुणानुदानतः ॥
वाचः सखित्वात्मगुणादिगानतः परात्मतृप्त्योर्जति चिन्निदानतः ॥८॥

एनं न हिंसन्ति परे विरोधतः वृथा न हिन्वन्ति च हृन्निरोधतः ॥
सर्वस्वतन्त्रः प्रभवेत् प्रबोधतः संराजते स्वात्मनि पूर्णबोधतः ॥९॥
धियाऽप्यधेन्वाऽऽत्मरसादिशून्यया दुर्मेधया शान्तिसुखादिहीनया ॥
वाचा तया संश्रुतयाऽर्थशून्यया कश्चिच्चरेत् सोऽफलयाऽप्यपुष्पया ॥१०॥

॥ षष्ठी ऋक् ॥

यस्तित्याज सचिविदं सखायं
न तस्य वाच्यपि भागो अस्ति ॥
यदीं शृणोत्यलकं शृणोति
नहि प्रवेद सुकृतस्य पन्थाम् ॥६॥

॥ पदपाठः ॥

यः । तित्याज । सचिऽविदम् । सखायम् ।
न । तस्य । वाचि । अपि । भागः । अस्ति ॥
यत् । ईम् । शृणोति । अलकम् । शृणोति ।
नहि । प्रऽवेद । सुऽकृतस्य । पन्थाम् ॥६॥

॥ कल्पलता ॥

तन्नामरूपात्मकयोः समस्तयोः वागर्थयोर्वाचक-वाच्ययोस्तयोः ॥
परस्परं सख्यगुणात् सहाप्तयोः प्रेमादिसच्चेतनरस्य युक्तयोः ॥११॥
यो वै त्यजेत् तत्र तयोः सखायं वाचः पतिं प्रेममयं स्वकायम् ॥
सदर्थसत्त्वं परवस्तुनित्यं स्वं नित्यसिद्धं परमं सुसत्यम् ॥१२॥
वाचोविदं विश्वविदं प्रकृष्टं वाचः परं वेदयितारमिष्टम् ॥
यः संत्यजेदर्थसमार्थसत्त्वं तदर्थविज्ञानगुणादितत्त्वम् ॥१३॥
तस्येह तत्केवलशाब्दिकायामर्थैकदेशार्धनिरर्थिकायाम् ॥
संभावितायामपि वाचि तस्यां नास्त्येव संवित्फलभागिताऽस्याम् ॥१४॥
वाचं तथा यद्यपि संशृणोति तां प्रत्यक्षतः श्रोत्रमुखादुपाकृताम् ॥
निरर्थिकां केवलशब्दसंज्ञितां शृणोति तामन्ध इवाप्यरूपिताम् ॥१५॥
वाग्-वस्तुनोर्योगत एव गम्यं शब्दार्थसंवित्फलभागमार्गम् ॥
स वै न वेत्ति श्रवणादुपाप्यं वेद्यं च साक्षात् प्रतिदर्शनाप्यम् ॥१६॥
तद्भूत-देवात्मसुवस्तुमुख्यैः तत्त्वैस्त्रिभिः सामरसप्रमुख्यैः ॥
वागर्थयोगात् सकलार्थसत्त्वं वेद्यं निवेद्यं परमार्थतत्त्वम् ॥१७॥
भूतेषु तत् पञ्चसु खादिषु स्याद् दिव्येषु चेन्द्रादिषु दैवतेषु ॥
सर्वेषु जीवात्मसु सामरस्याद् वागर्थसत्त्वं सपराप्तकेषु ॥१८॥

आदौ तु शब्दं शृणुयाच्छ्रुतीन्द्रियाद् वाचा तथैवानुकृतेस्तमुच्चरेत् ॥
व्युत्पत्तितः शब्दसुरूपसंविदा शक्ति तदर्थे पुनराप्नुयाद्धृदा ॥१९॥
शब्दार्थतत्त्वान्वयसंविदा ततः प्रत्यक्षतो दर्शनभाक् तदन्ततः ॥
तत्प्राप्तिकृत् स्यादनुभूतियोगतो निरन्तराभ्यासमुखात् प्रयोगतः ॥२०॥
तस्यानुभावादिगुणेन भूयोभूयः परेभ्योऽप्युपदेशनीयः ॥
तद्वाङ्मुखेन प्रतिदर्शनीयो ध्येयः समस्तोऽपि सुसाधनीयः ॥२१॥
ब्रह्मेन्द्ररुद्रादिकनाममात्रतो रूपादिशून्यादपदादमात्रतः ॥
ज्ञानादिशून्याच्छ्रवणादिमात्रतः न वस्तुलाभो वचनादिमात्रतः ॥२२॥
तद्वस्तुतस्तु प्रथमोपदेशो वाचैव सद्वस्तुगुणप्रकाशः ॥
वाचः समालम्बनसन्निवेशः सत्संविदा स्यात् परमाधिवेशः ॥२३॥
परात्मनः शक्तिरियं तु वाक् परा संवित् क्रियेच्छाचितियुक् पराऽपरा ॥
तयोः सुसिद्धं सुददर्श वाक्पतिः दाम्पत्ययोगं तपसा बृहस्पतिः ॥२४॥
सा वाग् यतोऽर्धाङ्गसमात्मिका सती प्रज्ञानदानादिषु सङ्ग वा सखी ॥
स्वात्मानमेवोपकरोत्यतस्तयोः सख्यं स्वतः सिद्धमिहान्वयाद्द्वयोः ॥२५॥
वागात्मनोर्वाचक-वाच्यभावयो निसर्गतः सन्मिथुनस्वभावयोः ॥
स्यान्न्यायसिद्धाऽयुतसिद्धवृत्तिता तादात्म्यदाम्पत्यगुणक्रियात्मता ॥२६॥
एतेन वागर्थगतेन तत्त्वतो दाम्पत्ययोगेन परः कवीश्वरः ॥
दाम्पत्यसत्त्वंह्युपमीयपार्वतीपरेशयोर्वन्दनतः कवीयति ॥२७॥
एवं हि दाम्पत्यसरूपतत्त्वं वाग्-ब्रह्मणोर्यन्मिथुनत्वमुक्तम् ॥
परस्परं नेमसमात्मकत्वं तादात्म्ययोगादिति वस्तुतत्त्वम् ॥२८॥

॥ सप्तमी ऋक् ॥

अक्षण्वन्तः कर्णवन्तः सखायो
मनोजवेष्वसमा बभूवुः ॥
आदघ्नास उपकक्षास उ त्वे
ह्रदाइव स्नात्वा उ त्वे ददृश्रे ॥७॥

॥ पदपाठः ॥

अक्षण्ऽवन्तः । कर्णऽवन्तः । सखायः ।
मनःऽजवेषु । असमाः । बभूवुः ॥
आदघ्नासः । उपऽकक्षासः । ऊँइति । त्वे ।
ह्रदाःऽइव । स्नात्वाः । ऊंइति । त्वे । ददृश्रे ॥७॥

॥ कल्पलता ॥

ये नेत्रवन्तोऽपि च कर्णवन्तो मिथः सखायः सह सत्त्ववन्तः ॥
ते दर्शने च श्रवणे च सन्तः सद्यो गतः स्वानुभवेव सन्तः ॥२९॥

रूपे च शब्दे विषयेषु तेषु बाह्येषु सर्वेषु मनोजवेषु ॥
मूलस्थितौ ते तु समाः सखायो बहिः प्रवृत्तावसमा भवेयुः ॥३०॥
स्नातुं प्रवृत्ताश्च जले निमग्नाः स्नाताश्च केचित्तु यथाऽर्धमग्नाः ॥
तथैव तत्तद्विषयेषु दृष्टाः तद्दर्शनादेर्विविधा विशिष्टाः ॥३१॥
तन्नाम-रूपोदिततत्त्वयोगात् तच्छ्रोत्रनेत्रान्वयसंप्रयोगात् ॥
सर्वार्थसिध्या प्रभवेत् प्रपञ्चे प्रत्यग्दृशाऽऽत्मन्यपि पारमार्थ्ये ॥२२॥

( ॥ इति द्वाविंशी कला संपूर्णा ॥ )

---

# त्रयोविंशी कला (२३)

## अष्टमी ऋक्

हृदा तष्टेषु मनसो जवेषु
यद् ब्राह्मणाः संयजन्ते सखायः ॥
अत्राह त्वं वि जहुर्वेद्याभि-
रोहब्रह्माणो वि चरन्त्यु त्वे ॥८॥

॥ पदपाठः ॥

हृदा । तष्टेषु । मनसः । जवेषु ।
यत् । ब्राह्मणाः । सम्ऽयजन्ते । सखायः ।
अत्र । अह । त्वम् । वि । जहुः । वेद्याभिः ।
ओहऽब्रह्माणः । वि । चरन्ति । _ इति । त्वे ॥८॥

॥ कल्पलता ॥

लोकेऽत्र सर्वत्र यथाधिकारं नृणां प्रवृत्तिस्तु बहुप्रकारम् ।
प्रायेण तत्तत्प्रकृतेः स्वभावाद्भूयो यथोशक्ति यथामति स्यात् ॥१॥

वागर्थसत्त्वप्रतिपत्तिपूर्वं ध्येयं सुसिध्येत जगत्यपूर्वम् ।
संवित्क्रियेच्छावयमेव पूर्णं विनैव तेनात्र भवेदपूर्णम् ॥२॥

तथैव वागर्थसुसंविदे स्वयं केचित् स्वतन्त्राः श्रुतिशासनान्वयम् ॥
केचित्त्वन्त्राः परवाङ्मुखे क्षणात् तत्पारतन्त्र्यादनुतत्पराश्रयात् ॥३॥

शब्दार्थरूपादिषु भौतिकेषु सूक्ष्मादिवृत्या मनसो जवेषु ॥
हृदा निजान्तः सममूहितेषु सन्नामरूपादिमुखाततेषु ॥४॥

परोक्षसद्ब्रह्मविदः समानाः ते ब्राह्मणाः स्वानुभवैकमानाः ॥
यत्संयजन्ते सदसद्विवेकात् सत्यैकतत्त्वार्थकवाग्विमर्शात् ॥५॥

परस्परं ते च समानविद्याः समानवाचोऽनुविदः सुहृद्याः ॥
सत्यं विदुर्वस्तुपरं समर्थाः संपादयन्ति प्रतिपादितार्थाः ॥६॥

एकं तदन्यं विजहुर्विशेषाद् वाग्भिश्च विद्याभिरतोऽविशेषात् ॥
संवेदितव्याभिरनूदिताभिः सम्पादिताभिस्त्ववशेषिताभिः ॥७॥

यो वा अनूचान इतीष्ट उक्तेः नाऽन्योदितां वाचमनुप्रवक्ते ॥
वाक्सत्त्वमिच्छन् स च वेत्ति सार्थं वदन्ति शिष्यं तमुपानुशास्यम् ॥८॥

॥ ओह ब्रह्माणो विचरन्त्यु त्वे ॥

[1]एके त्वनूचानमुखाश्चरन्ति ते नान्योदितां वाचमनूच्चरन्ति ते ॥
स्वात्मानुभावोदितमादिशन्ति ते येऽतीन्द्रियार्थान् प्रतिदर्शयन्ति ते ॥९॥
अन्तर्हृदाऽहञ्चिति मूलसत्पदाच्चिदात्मनो वाङ्मतिसंविदास्पदात् ॥
सर्वेन्द्रियावृत्तिनिवृत्तिसंयमात् परात्मनोऽन्तस्तपसा स्वसङ्गमात् ॥१०॥
स्वान्तःस्वयं स्फूर्तिचिता सदाप्तया वाचाऽप्यहं स्फूर्तिहृदाऽऽत्मसत्तया ॥
ब्रह्मात्मवाचः श्रवणाद् विदाऽऽप्तया सत्यं परं सन्ददृशुर्निजाप्तया ॥११॥
प्रत्यञ्चिपूर्णे परमे समाधौ प्रत्यग्दृशाऽन्तस्तपसा रसाग्नौ ॥
यां शुश्रुवुर्वाचममूं चिदाप्तां सद्वस्तुसद्दर्शनसंविदाप्ताम् ॥१२॥
ब्रह्मात्मसद्वाचकमन्त्रदर्शनं वाच्यार्थसद्ब्रह्मपरार्थदर्शनम् ॥
तेनैव ते मन्त्रदृशो महर्षयः सत्सामरस्येन परात्मदृष्टयः ॥१३॥
सर्वज्ञकल्पाः परामात्मसन्दृशः स्वयंप्रभं सर्वविदं सुसन्दृशम् ॥
सन्दर्शयन्ति स्वयमीशसन्दृशा सर्वात्मसत्त्वप्रतिपत्तिसन्दृशा ॥१४॥
तेऽभ्यूहितब्रह्मसुवाक्सुमन्त्राः सर्वार्थसत्संविदि सुस्वतन्त्राः ॥
एकेऽत्र सर्वत्र समावसन्तः सर्वात्मसत्त्वाद्विचरन्ति सन्तः ॥१५॥
इन्द्रादयः सर्वपरात्मदेवताः यत्राधितस्थुर्निजनीडभावतः ॥
तान् मन्त्रवर्णाननुगायति स्वयं बृहस्पतिर्ब्रह्मण एव सन् पतिः ॥१६॥
सद्ब्रह्मणः केवलचेतनात्मनः वागग्निवक्त्रात् पुरुषात् परात्मनः ॥
ब्रह्मात्मकान्येव हि मन्त्ररूपकान्याविर्बभूवुस्तपसा परेऽम्बरे ॥१७॥
तां व्योमवाणीमिव नादयन्तीं पूर्णे निजे व्योमनि सन्नदन्तीम् ॥
श्रोत्रेण दिव्येन च शुश्रुवुस्तां महर्षयो मन्त्रदृशः समस्ताम् ॥१८॥
स्वान्तर्यसत्सूक्ष्मचिदाततेन दिव्येन चान्तस्तपसाशितेन ॥
शीर्षण्यसच्छ्रोत्रमुखेन तेन शीर्षान्तरेवान्तरनाहतेन ॥१९॥
शीर्षे समाधौ प्रतिशुश्रुवुस्तां छन्दोमयीं ब्रह्ममयीं स्वराप्ताम् ॥
वाचं परामात्मनि संश्रुतां तां आश्राविता तां श्रुतिमाहुराप्ताम् ॥२०॥
वाग्ब्रह्मणस्पत्युदिता स्वरात्मिका स्फूर्त्यात्मिका फूत्कृतिशब्दशक्तिका ॥
निःश्वाससत्त्वाऽखिलवस्तुवाचकाजगत्सवित्री जगतां पराम्बिका ॥२१॥
ऋतं स्वमात्मानमुपस्पृशन्ती साऽष्टापदीन्द्राद्युदगात् स्वरन्ती ॥
चिदात्मनः सा परिनिर्मितात्मा तनूः परा वाक् पतिमापरात्मा ॥२२॥
सप्तर्षयो दर्शनचित्कलेष्टाः प्राणाः परा धीन्द्रियचित्प्रकृष्टाः ॥
वागष्टमी तैः सपदा प्रधाना ब्रह्मात्मना सोर्जति संविदाना ॥२३॥
छन्दोमयी चित्तिमयी च वाक् कृतेः प्राज्ञात्मने सत्पुरुषाय सत्कृतेः ॥
स्वात्मानमर्थात्मिकमात्मसात्कृतेः जायेव पत्ये विवृणोति संस्कृतेः ॥२४॥

---

[1] एकेऽननूचानमुखाश्चरन्ति ते ।

ब्रह्माणि तच्छान्दस्वाङ्मयानि येषां मुखे चात्मनि संस्थितानि ॥
वाचा विदाऽन्तः परमात्मनिष्ठाः ते ब्राह्मणा ब्रह्मणि सत्प्रतिष्ठाः ॥२५॥

॥ नवमी ऋक् ॥

इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ॥
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥९॥

॥ पदपाठः ॥

इमे । ये । न । अर्वाक् । न । परः । चरन्ति ।
न । ब्राह्मणासः । न । सुतेऽकरासः ॥
ते । एते । वाचम् । अभिऽपद्य । पापया । सिरीः ।
तन्त्रम् । तन्वते । अप्रऽजज्ञयः ॥९॥

॥ कल्पलता ॥

नार्वाङमुखा भौतिकतत्त्ववादिनो वैज्ञानिकास्त्वाधुनिकाः सुवेदिनः ॥
पराङमुखा ये विषयानुरागिणः प्रवृत्तियोगान्न परात्मवेदिनः ॥२६॥
न ब्राह्मणा ब्रह्मविदोऽनुचारिणः न यज्ञकर्मादिशुभानुकारिणः ॥
ते केवलं वाक्चतुराः प्रचारिणः फलप्रलोभेन परप्रतारिणः ॥२७॥
ते वै स्वतन्त्रं कुटिलं वितन्वते तेऽल्पाः स्वयं स्वल्पधियोऽभिमन्वते ॥
सर्वज्ञकल्पा इव संवदन्ति ते जलपन्ति वाचैव वृथा वसन्ति ते ॥२८॥
तेषां न लोकेऽत्र भवेत् समिष्टदं न किञ्चिदप्यस्त्यपरं सुखास्पदम् ॥
तथा परत्रापि पुनः परार्थदं प्रायेण न स्यात् परमार्थदं पदम् ॥२९॥

॥ दशमी ऋक् ॥

सर्वे नन्दन्ति यशसागतेन
सभासाहेन सख्या सखायः ॥
किल्बिषस्पृत्पितुषणिर्ह्येषा-
मरं हितो भवति वाजिनाय ॥१०॥

॥ पदपाठः ॥

सर्वे । नन्दन्ति । यशसा । आऽगतेन
सभाऽसहेन । सख्या । सखायः ।
किल्बिषऽस्पृत् । पितुऽसनिः । हि । एषाम् ।
अरम् । हितः । भवति । वाजिनाय ॥१०॥

॥ कल्पलता ॥

नन्दन्ति सर्वे यशसाऽऽगतेन सभासु सख्येव सहान्वितेन ॥
लोके प्रतिष्ठादिमुखाततेन मानाभिमानादिसुसंहितेन ॥३०॥
प्राप्तं यशस्तद्भयकृत् प्रशस्तिकं प्रायेण नीचैः पतनादिहेतुकम् ॥
प्रत्यक्षतः किल्बिषकृत् प्रमादकं परोक्षतः स्यात् सुकृतादिनाशकम् ॥३१॥
लोकेऽत्र यत्केवलवाङ्मुखाततं ज्ञानक्रियाभ्यां रहितं वृथागतम् ॥
अलं भवेत् केवलजीवनेऽर्थितं धनान्नलाभादिसुखे समर्थितम् ॥३२॥

॥ इति त्रयोविंशी कला संपूर्णा ॥

---

# चतुर्विंशी कला (२४)

॥ एकादशी ऋक् ॥

ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ॥
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां वि मिमीत उ त्वः ॥११॥

॥ पदपाठः ॥

ऋचाम् । त्वः । पोषम् । आस्ते । पुपुष्वान् ।
गायत्रम् । त्वः । गायति । शक्वरीषु ॥
ब्रह्मा । त्वः । वदति । जातऽविद्याम् ।
यज्ञस्य । मात्राम् । वि । मिमीते । ऊँ इति । त्वः ॥११॥

॥ कल्पलता ॥

(ऋचां त्वः पोषमास्ते पुपुष्वान्)

एकः समास्ते स ऋचां समाश्रयात् प्राणेन वाचा मनसा स्वराश्रयात् ॥
एकं स्वरात्मानमनुस्वरन् रसात् प्रत्यङ्मुखं पोषयति स्ववाग्रसात् ॥१॥

स्वान्तर्ऋचं वाचमनुस्वरञ्जपन् स्वसंविदा स्वां रसनामधिस्वपन् ॥
तां संविदानामृचमेव संवदन् शान्त्या रसैः पोषयति स्वयं विदन् ॥२॥

वेदात्मनि ब्रह्मणि संविदा चरन् सद्ब्रह्मकर्माणि सदा समाचरन् ॥
तद्ब्रह्मयज्ञेन ऋचः सुपोषयन् एकः समास्ते तपसा प्रतोषयन् ॥३॥

वाग् ब्रह्मणा ब्रह्मविदा सुसाधयन् आराधयन् वाचमृचं सदाधयन् ॥
एकः परानन्दरसामृतं पिबन् आस्ते परे ब्रह्मणि संविदा लसन् ॥४॥

ब्रह्मात्मनो ज्ञानरसं धिया धयन् वाचा विदा विश्वविदं प्रबोधयन् ॥
निजानुभावेन समं बिभावयन् आस्ते जनान् स्वात्मरसेन पावयन् ॥५॥

अग्निः स वाचोऽधिपतिर्बृहस्पतिर्वैश्वानरः प्राणपतिर्मनः पतिः ॥
वाचामृचां पोषणमात्मसात्कृतेः करोति साक्षात्कृतितः सुसंस्कृतेः ॥६॥

योऽग्निः स होता प्रथमः पुरोहितो यो देवताह्वानकृते क्रतौ वृतः ॥
वाचाऽन्वितो वाचिककर्मणि स्थितः स वै षट्कारकृते ऋचार्हितः ॥७॥

स वाङ्मुखः सोऽग्निमुखः स ऋङ्मुखः स प्राङ्मुखो यज्ञमुखोऽग्निसम्मुखः ॥
हविः प्रदाने हवने हविर्मुखो होता वषट्कारमुखः स्वरोन्मुखः ॥८॥

ऋग्भिः पुनः शंसति यज्ञदेवताः तत्प्रीतये सन्मनसा समाहितः ॥
एकः स आस्तेऽखिलयज्ञकर्मणामृत्विङ्मुखः सन् प्रतिषोषणादृचाम् ॥९॥
स ब्रह्मणा यज्ञहृदा समीक्षितः सोमात्मना सन्मनसा समीरितः ॥
ऋग्भिः स वागग्निमुखाभिरन्वितो यज्ञं परं पोषयति प्रतिष्ठितः ॥१०॥

॥ गायत्रं त्वो गायति शक्वरीषु ॥

वाचामृचां सस्वरवाग्रसेन सौम्येन साम्ना सरसस्वरेण ॥
वागात्मसंवित्परसद्रसेन विश्वस्य पुष्टिः परवाक् स्वरेण ॥११॥
एकोऽत्र गायत्रमुखेन साम्ना सच्छन्दसा गायति सामनाम्ना ॥
वाचा निजेनाग्निमुखेन धाम्ना स्वान्तः समास्ते महसा महिम्ना ॥१२॥
साम्ना समं गायति शाक्वरेण गायत्रनाम्ना स्वरसाक्षरेण ॥
आस्ते सदा सामरसस्वरेण तत्सामरस्येन सता परेण ॥१३॥
उद्गातृनामा भुवि सामगायकः स सामवेदो दिवि सूर्यदैवतः ॥
यज्ञे तु स प्राणमयोऽत्र गायकः सन् गायतां त्राणगुणादिदायकः ॥१४॥
उद्गीथमन्त्रानधितिष्ठति स्वयं प्राणः स्वरं गायति सद्रसान्वयम् ॥
ओमित्यनुज्ञाक्षरमास्वरन् अयं यज्ञं समं पोषयति स्वरान्वयम् ॥१५॥

॥ ब्रह्मा त्वो वदति जातविद्याम् ॥

ब्रह्माऽध्वरे साक्षिमुखः समाश्रुतः सन् सोमसत्त्वः सकलैः समाश्रितः ॥
सदैव सन् यज्ञमनाः समीक्षकः स ऋत्विजां कर्मणि सन् समीरकः ॥१६॥
यज्ञस्य संचालनकर्मणि स्थितः यज्ञादिसाक्षित्वपदे प्रतिष्ठितः ॥
यज्ञे सदा मानसवर्तनीभृतः वाचंयमो यज्ञनिरीक्षको धृतः ॥१७॥
एकस्त्रयीवित् समनाः समीक्षणः सन् ऋत्विजां स प्रथमः समेक्षणः ॥
आस्ते स्वयं यज्ञमहः सुरक्षणे सोऽध्यक्षपीठेऽखिलकर्मशिक्षणे ॥१८॥
ब्रह्मैव वाचां परमं समास्पदं त्रयीमयीनां समसंविदां पदम् ॥
एकः स आस्तेऽखिलवेदसंविदं वदन् हृदा वाङ्मुखतः स्वसंपदम् ॥१९॥

॥ यज्ञस्य मात्रां वि मिमीत उ त्वः ॥

अध्वर्युरेकोऽखिलयज्ञकर्मणां कर्ता स्वयं सन् यजमानकर्मणाम् ॥
यज्ञं समस्तं यजते स्वकर्मणा तद्देवतार्थे हवनादिकर्मणा ॥२०॥
द्रष्टा जगच्चक्षुरसौ स्वरात्मकः सूर्यो दृशां दर्शयिता चिदात्मकः ॥
स वै मिमीतेऽखिलयज्ञमात्रां वाचा विदा याजुषमन्त्रमात्रः ॥२१॥
यज्ञस्य धर्मस्य समस्तकर्मणो मात्रां मिमीते परमस्य मर्मणः ॥
सर्वस्य सत्कर्मफलस्य शर्मणः विश्वस्य कल्याणकृतिप्रभर्मणः ॥२२॥

अध्यात्मयज्ञेऽपि च ऋत्विजस्ते ब्रह्मात्मविज्ञानमुखाद् यजन्ते ।।
त्रयीमुखाद् वै विदुषां स यज्ञो धीयोगतः सिध्यति सार्वभौमः ।।२३।।

तद्विश्वसृष्टिस्थितिसंहृतीष्टेः संवित्क्रियोपासनयौगिकेष्टेः ।।
पूर्णात्मनः सर्वहुतः समिष्टेः यज्ञस्य मात्रां विमिमीत एकः ।।२४।।

।।यज्ञरथः।।

यज्ञः परोऽस्मिन् भुवने महारथः तस्यात्र लोकत्रितये महापथः ।।
योगेन तद्याजक-यज्ञयोर्मिथः सद्यः फलेद्यज्ञकृतां मनोरथः ।।२५।।

यज्ञस्य वै वाङ्मनसे सुवर्तनी चक्रे इवान्तर्निहिते सुवर्त्मनी ।।
ताभ्यां युतेयं जनता सनातनी प्रवर्तते सन्नियता सदातनी ।।२६।।

होता तथाऽध्वर्युरथायमग्नीद् उग्दातृनामा च भवन् स ऋत्विक् ।।
वाग्वर्तनीं संस्कुरुते स्ववाचा ऋगादिवेदैर्निजयज्ञकृत्या ।।२७।।

ब्रह्मा त्रयीवित् समनोमयः सन् यज्ञे मनोवर्तनिमाश्रितः सन् ।।
वाक् संयमान्मानसकर्म कुर्वन् आस्ते स्वयं यज्ञममुं वितन्वन् ।।२८।।

न्यूने तदेकेन तयोः सुयुक्तयोर्वियोगतो यज्ञरथः पतेत् स्वतः ।।
एकेन पादेन नरो व्रजन् यथा यथैकचक्रेण यतो रथस्तथा ।।२९।।

तद्वत् सदा विश्वरथोऽयमास्ते तद्वर्तनी वाङ्मनसे समस्ते ।।
सत्यात्मना विश्वसुचालके स्तः संवित्क्रिये तत्परिचारके स्तः ।।३०।।

विश्वं जगद् विश्वविभूतिपूर्णं सत्यात्मसद्वाङ्मनसप्रपूर्णम् ।।
सद्विश्वविद्यारससत्त्वपूर्णं बृहस्पतेर्वाग्रसचित्प्रपूर्णम् ।।३१।।

श्रीः शब्दशक्तिः परमात्मनः परा श्रेयः सनिःश्रेयससत्त्ववित्परा ।।
पूर्णे परे ब्रह्मणि संहिताऽक्षरा पूर्णात्मिका पूरुषवाक्सुधा परा ।।३२।।

।। इति चतुर्विंशी कला संपूर्णा ।।

# पञ्चविंशी कला (२५)

॥ ब्रह्मणस्पतेः सत्ता ॥

श्रीब्रह्मणस्पतिरनन्तकलासुपूर्णः संचेष्टतेऽत्र पुरुषः सकलेषु पूर्णः ॥
ब्रह्मात्मपूर्णपुरुषेण जगत् सुपूर्णं ब्रह्मैव वाक् सकलवाचकशक्तिपूर्णम् ॥१॥

स ब्रह्मणस्पतिरजोनिजसत्तयाऽऽस्ते सत्यामृतात्मककलाभिरिहात्मशक्तेः ॥
ब्रह्मात्मवाचमधितिष्ठति सोऽमृतात्मा ब्रह्मात्मसंविदुदितोऽतति विश्ववर्त्मा ॥२॥

इन्द्रः स एव परमैश्वरभूतिपूर्णः ईष्टे समग्रजगतां परशक्तिपूर्णः ॥
संविद्रसं परमजीवनशान्तिपूर्णं वाचा ददाति सकलं परमार्थपूर्णम् ॥३॥

छन्दःपरोऽग्निवदनः परवस्तुसत्त्वः छन्दो रसं जगति वर्षयति स्वसत्त्वम् ॥
सद्ब्रह्मवाचकचितिं निजवाचमाप्तः स ब्रह्मणस्पतिरिति श्रुतिवागुपात्तः ॥४॥

वागेव तत्र भवती बृहती प्रवृद्धा ब्रह्मैव सा प्रभवति प्रकृतिः प्रसिद्धा ॥
तस्याः पतिः परमपूरुष एव सिद्धः तस्माद्बृहस्पतिरिति सगुणैः समृद्धः ॥५॥

॥ बृहस्पतिः लौक्यः ऋषिः ॥

लौक्यो बृहस्पतिरिदं प्रददर्श तत्त्वं लोके प्रकाशयितुमेव परात्मसत्त्वम् ॥
लीलापरेण निजशान्तिरसेन नित्यं लेलायते सकलभूतिषु वस्तु सत्यम् ॥६॥

॥ अदितिः दाक्षायणी ऋषिका ॥

दाक्षायणी त्वदितिरत्र वियत्स्वरूपा दक्षात्मसूर्यदुहिताऽपि भवत्यरूपा ॥
देवादिविश्वजननी स्वर-शब्दमात्रा सर्वार्थवाचकचितेः प्रभवेदमात्रा ॥७॥

माता परेयमदितिर्निजभावरूपमाविर्हितं स्वपतिना प्रथमं स्वरूपम् ॥
योगाद् ददर्श तपसा परमार्थरूपं वाचाऽऽदिदेश महसा निजमन्त्ररूपम् ॥८॥

"ब्रह्मणस्पतिरेता" इति लौक्यो बृहस्पतिः ऋषिः। दाक्षायणी अदितिर्वा ऋषिका। ब्रह्मणस्पतिर्देवता। अनुष्टुप् छन्दः॥

ब्रह्मणस्पतिरेता सं कर्मार इवाधमत् ॥
देवानां पूर्व्ये युगेऽसतः सदजायत ॥

(ऋ० मं० १०, ७२, २)

॥ पदपाठः ॥

ब्रह्मणः। पतिः। एता। सम्। कर्मारःऽइव। अधमत् ॥
देवानाम्। पूर्व्ये। युगे। असतः। सत्। अजायत ॥

॥ कल्पलता ॥

स ब्रह्मणस्पतिरनादिरसन्निवासः सन् आदितः स्वयमसत्त्वगुणावभावः ॥
सोऽनुन्मिषन् सकलवृत्तिगुणैर्विशून्यः सिद्धोऽत्र बिन्दुरिव सर्वगणैः प्रपूर्णः ॥९॥

सञ्चेतनात्मककलान्तरितः स सत्यः संवित्सभावकृतिशक्तिकपूर्णसत्त्वः ॥
सोऽचिन्त्यशक्तिकलयोर्जतिसत्यमन्त्रः सर्वार्थसाधनकृतेऽस्ति सदा स्वतन्त्रः ॥१०॥

प्राक् सृष्टितः प्रथमतश्चितिमात्रयाऽऽसीद् वाक्सृष्टितः स्वरणतस्तपसा स आनीत् ॥
व्योम्न्यन्तरे निजपदे स्वधया स्वरासीत्कारेण यत् समधमत् परसत्त्वमावीत् ॥११॥

स ब्रह्मणस्पतिरखण्डसमाधिनिष्ठः सद्यो जगार निजबोधनिधिप्रतिष्ठः ॥
स्वान्तर्यचित्स्फुरणसोच्छ्वसनप्रभासः स ब्रह्मवाक्स्वरणतः सहसाऽधमत् सः ॥१२॥

कर्मप्रधानपरचेतनसत्त्वधर्मा सत्वानुगुण्यसमभावनसर्वकर्मा ॥
संवित्प्रपूर्णनिजचित्परदिव्यधर्मा कर्मारवत् समधमत् स चिदात्मधर्मा ॥१३॥

चिन्मात्रसंस्फुरणतस्तपसा तदाऽग्रे वाचस्पतेः स्वरणतस्तदिदं समग्रम् ॥
फूत्कारतः प्रथमतः प्रतिभूतमग्र्यं साक्षात्कृतं सकलसत्त्वपदं समाग्रम् ॥१४॥

आदौ सदप्यसदिव स्वयमेव गुह्यमन्तर्हितं परमनुन्मिषदित्यपोह्यम् ॥
आविर्बभूव सहसत्करणैः समूह्यमाद्यन्तमध्यसकलं सदिति प्रगृह्यम् ॥१५॥

तद्ब्रह्मणस्पतिकृताद् धमनात् परस्मात् सद्ब्रह्मवाक्समुदगादसतः समस्मात् ॥
सर्वार्थसंविदमृतात्मरसेन कस्मात् साक्षात्कृतेः सदनुभावरसादकस्मात् ॥१६॥

वागेव सा सकलवाचकशक्तिमूर्तिः वाचस्पतेः परमपुरुषपूर्णकीर्तिः ॥
सद्योगतः पुरुषचित्स्वरसामरस्यात् स्त्रीसत्त्वकाऽपि पुरुषीति मता रहस्यात् ॥१७॥

सा ज्ञान-काम-कृतिशक्तिकचित्सुपूर्णा तत्त्वत्रयैकरससत्त्वचिदभ्युदीर्णा ॥
सत्यैकतत्त्वरसतोऽततिविश्वरूपा नित्यैव काचिदिव साऽस्ति पराऽप्यरूपा ॥१८॥

वेदात्मिकैव भवतीयमनाद्यनन्ता वेद्यार्थपूर्णरसगर्भितसंविदन्ता ॥
विद्यां परापरगुणार्थपरां परान्तां विद्यात् समस्तरससंविदनुस्वरान्ताम् ॥१९॥

स्वान्तः सुगुप्तकलयाऽन्तरितार्थपूर्णां सर्वज्ञसत्त्वकृतिशक्तिचितिप्रपूर्णाम् ॥
संवित्प्रकाशनमुखेन परात्मसत्त्वां साक्षात्कृतेः समनुभावयितुं समर्थाम् ॥२०॥

कर्माविचेतनविदाऽमृतभूतिमिच्छन् मर्मादिसत्त्वविशदीकरणं सुगच्छन् ॥
कर्मारवत् स निजफूत्कृतितः प्रयच्छन् शर्मात्मना समधमत् स्वयमासमुच्छन् ॥२१॥

छन्दोरसेन परमेण सुसंहितात्मा छन्दोमयेन सुरवेण समाहितात्मा ॥
छन्दोमुखेन पुरुषेण समूहितात्मा छन्दोमयी विजयते जगतां हितात्मा ॥२२॥

वाचा चिदात्मनि विदाऽसु-हृदादियोगाद् वेदानुवादधमनैर्निनदाभियोगात् ॥
आविर्बभूव सकलं जगदादिभावात् तस्माद् बभौ तदसतोऽपि तु सत्स्वभावात् ॥२३॥

तत्रादितेर्जगति दक्ष इह प्रजातः आदित्य इत्यभिहितः प्रबलप्रभावः ॥
आदित्यतस्तवदितिः प्रबभूव दक्षात् स्वर्ज्योतिषः स्वर-रसादिगुणेन साक्षात् ॥२४॥

अन्योऽन्यजन्मपरया निजसत्तयाऽऽप्तौ आदित्य आदिपुरुषोऽप्यदितिर्मिथस्तौ ॥
तद्वत्परौ प्रभवतः प्रभयाऽऽत्मसक्तौ वाग् ब्रह्मणस्पतिरिमौ मिथुनत्वयुक्तौ ॥२५॥

तद्ब्रह्मणश्चितिपरात् पुरुषात् परस्माद्इन्द्राग्नितैजसमुखात् परमात् समस्मात् ॥
आविर्बभूव दिवि वाग् भवतः सकाशाद्ब्रह्मात्मवाङ्मुखत एव हि तत्प्रकाशः ॥२६॥

यश्छन्दसां समभिवर्धक एव इन्दो वाग् ब्रह्मतत्त्वगुणमात्रविभासकेन्द्रः ॥
तद्वाङ्मुखेन हि तदिन्द्रगुणप्रकाशः तत्संविदाऽनुभवतः श्रुतिवाग्विकासः ॥२७॥

"प्र नूनं ब्रह्मणस्पतिः" इति

ब्रह्मणस्पतिर्देवता । अनुष्टुप् छन्दः ॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ॥
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥

(ऋ० मं० १।४०।५)

॥ पदपाठः ॥

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् ।
यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ॥

मन्त्रात्मिकां निजसतीमिह वाचमाद्यां मानार्थकां निगमनामपरामनाद्याम् ॥
स ब्रह्मणस्पतिरनुप्रवदत्यजस्रं सद्ब्रह्मपूर्णसमताक्षरचित्सहस्राम् ॥२८॥

इन्द्रादयः परतराः सकलाश्च देवाः मन्त्रेषु मन्त्रसदनेष्वपि मन्त्रगेहाः ॥
मन्त्रार्थसत्त्वमुदिताः परमन्त्रदेहाः मन्त्रांश्चिताऽऽत्मनि च बिभ्रति मन्त्रवाहाः ॥२९॥

तद्ब्रह्मवेदमुखमन्त्रसुवाग्रसेन स ब्रह्मणस्पतिरनूदितसुस्वरेण ॥
प्राणेन सत्त्वमनसा प्रतिशंसनीयः श्रद्धात्मभावनधियाऽन्तरुपासनीयः ॥३०॥

सद्ब्रह्मसत्त्वपरया कलया सुपूर्णा संविन्मयी परमसत्त्वगुणाभ्युदीर्णा ॥
छन्दोमयी परमवैदिकमन्त्रवर्णा संवित्सुधां जगति वर्षयतु प्रकीर्णा ॥३१॥

प्रीत्या विदा करुणया भवती प्रसन्ना नीत्या सदा सकलमूर्धनि राजमाना ॥
शक्त्या हृदा प्रबलसत्त्वरसेन पूर्णा शान्त्या मुदा लसतु "कल्पलता"ऽनुवर्णा ॥३२॥

॥ इति पञ्चविंशी कला ॥

संपूर्णा

———

## षड्विंशी कला (२६)

।। ब्रह्मणस्पतिः ।।

श्रीब्रह्मणस्पतिचिदात्मकलाविभूते हे ब्रह्मचोदनि परात्मकविश्वमूर्ते ।।
वागात्मसत्त्वसमभूतिसुपूर्णशक्ते वाग्ब्रह्मणे भवतु वाक्पतये नमस्ते ।।१।।

।। गृत्समदः ऋषिः ।।

प्राणात्मको जगति गृत्समदो महर्षिः वाग्ब्रह्मणा पतिममुं परमं महान्तम् ।।
प्राज्ञात्मकं रहसि मन्त्रदृशं महर्षिं वाचा स्तुवँस्तपसि मन्त्रदृग् आददर्श ।।२।।

स ब्रह्मणस्पतिरनादिरनन्तसत्त्वः सद्ब्रह्मवस्तुपरमं चिदनन्यसत्त्वम् ।।
सद्भावचित्समवबोधसुपूर्णतत्त्वात् सद्बिन्दुवत् प्रभवतीह महोऽर्णसत्त्वात् ।।३।।

तद्ब्रह्मणस्पतिपरा चितिमात्रसत्ता तत्त्वत्रयात् त्रिगुणतोऽपि पराऽतिमात्रा ।।
प्रज्ञानसत्त्वरसपूर्णकलाऽऽत्मतत्त्वात् प्राज्ञात्मना विजयतेऽखिलसामरस्यात् ।।४।।

"गणानां त्वा" इति गृत्समदः ऋषिः । ब्रह्मणस्पतिः देवता । जगती छन्दः ।।

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्न् ऊतिभिः सीद सादनम् ।।१।।
(ऋ० मं० २, २३, १)

### ।। पदपाठः ।।

गणानाम् । त्वा । गणऽपतिम् । हवामहे ।
कविम् । कवीनाम् । उपमश्रवःऽतमम् ।
ज्येष्ठऽराजम् । ब्रह्मणाम् । ब्रह्मणः । पते ।
आ । नः । शृण्वन् । ऊतिऽभिः । सीद । सदनम् ।।१।।

### ।। कल्पलता ।।

।। सामान्यतः समग्रमन्त्रार्थः ।।

वन्दामहे गणपतिं प्रथमं कवीन्द्रं विश्वोपमानयशसं पुनराह्वयामः ।।
तं ज्येष्ठराजमचिराद् उपवेशयामः श्रीब्रह्मणस्पतिममुं परमर्थयामः ।।५।।

ध्यायामहे गणपतिं प्रमथं गणानां विश्वात्मनां दिविषदां जगतां त्रयाणाम् ।।
प्राणात्मनां निजधियां सकलेन्द्रियाणां मुख्यं चिदात्मकमिमं सकलान्तराणाम् ।।६।।

श्रेष्ठं कविं कवितया परमं कवीनां छन्दः सुकाव्यरचनानिरतं श्रुतीनाम् ।।
छन्दः सुदर्शनमुखादुदितं समानं छन्दोमुखेन सदसस्पतिमाह्वयामः ।।७।।

विश्वोपमानगुणसुश्रवसं सुकीर्ति विश्वाधिनिष्ठगुणशक्तिकशब्दमूर्तिम् ॥
विश्वोदयेष्टपरमस्वरवाग्विभूतिं तं विश्वरूपमखिलाधिपतिं नमामः ॥८॥

ज्येष्ठं गुणेन हि तदास जगत्सुपूर्वं ज्यायान् महान् महिमतः पुरुषः स पूर्णः ॥
राजा समस्तभुवनेषु विराजमानः सन् विश्वभूतिगतितोभगवान्त्सइन्द्रः ॥९॥

छन्दः सुमन्त्रवचसां पतिरादिदेवः सन् ब्रह्मणां जनयिता परमानुभावः ॥
ब्रह्मात्मसत्त्वकचिताऽऽप्रतिमप्रभावः स ब्रह्मणस्पतिरिति श्रुतिहृद्विभावः ॥१०॥

तद्ब्रह्मणां पतिरसौ पुरुषः परात्मा वाचस्पतिर्गणपतिः समभूतिपूर्णः ॥
ज्येष्ठो जयत्यधिपतिर्जगतां स राजा श्रेष्ठः स इन्द्र उदितो महसाऽधिरेजे ॥११॥

॥ अध्यात्मम् ॥

अध्यात्ममान्तरतमः सकलेन्द्रियाणां अध्यक्ष आश्रयतमो जगतां त्रयाणाम् ॥
प्राणः परो भवति चित्पतिरिन्द्र आत्मा प्रामुख्यतोऽभ्यतति तिष्ठति चेतनात्मा ॥१२॥

वाग् ब्रह्मतत्पतिरयं परमोऽन्तरात्मा स ब्रह्मणस्पतिरिति प्रथितः परात्मा ॥
वाक् तत्सतीह बृहती पतिरेव तस्याः वेद्यो बृहस्पतिरिति श्रवणाद् बृहत्याः ॥१३॥

देवाश्चित् ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः ॥
उस्राइव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥२॥

ऋ० मं०, २।२३।२

॥ पदपाठः ॥

देवाः । चित् । ते । असुर्य । प्रऽचेतसः ।
बृहस्पते । यज्ञियम् । भागम् । आनशुः ।
उस्राःऽइव । सूर्यः । ज्योतिषा । महः ।
विश्वेषाम् । इत् । जनिता । ब्रह्मणाम् । असि ॥२।

सूर्यो यथाऽऽत्मतपसा गगनेऽवकाशे रश्मीन् निजान् त्सृजति सर्वजगत्प्रकाशे ॥
स ब्रह्मणस्पतिरपीह तथाऽऽत्मवाचा ब्रह्मात्मिकाः प्रजनयत्यनुमन्त्रवाचा ॥१४॥

देवा अपि प्रथमजाश्चितिमात्रसत्त्वाः वेदाधिपस्य परमस्य बृहस्पतेस्ते ॥
तद्ब्रह्मणैव परमन्त्रमुखेन सिद्धाः तद्यज्ञियं प्रथमभागमुपाधितस्थुः ॥१५॥

॥ तृतीया ऋक् ॥

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ॥
आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥३॥

(ऋ० मं०, २।२३।१६)

॥ पदपाठः ॥

मा । नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे
निरामिणः । रिपवः । अन्नेषु । जगृधुः ॥
आ । देवानाम् । ओहते । वि । व्रयः । हृदि ।
बृहस्पते । न । परः । साम्नः । विदुः ॥३॥

अन्नार्थलोभमदजीवनकामुकेभ्यः स्तेनेभ्य ईशमुनिसद्वचनं द्विषद्भ्यः ॥
वेदानिमान् परमसत्स्वरहस्यकार्थान् माऽस्मान् ब्रुवीत सहसाऽनृजुमानसेभ्यः ॥१६॥
सद्भ्यो विदां विविदिषद्भ्य उदारधीभ्यः श्रद्धावतां समधियां शुभसन्मतिभ्यः ॥
वेदान् समान् उपदिशेत् समदृक् सुवाचा साम्नः परं न तु विदुर्न च तत् सुवाच्यम् ॥१७॥
एवं वदन्त्युपदिशन्ति महानुभावाः पूर्वर्षयः सदसि वेदविदश्च देवाः ॥
ब्रह्मात्मवेदमुखशासनमेव सर्वं सन्माननीयमनुभावसमास पूर्वम् ॥१८॥

॥ चतुर्थी ऋक् ॥

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ॥
ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत् ते महित्वनम् ॥४॥
(ऋ०, मं० २।२३।४)

॥ पदपाठः ॥

सुनीतिऽभिः । नयसि । त्रायसे । जनम् ।
यः । तुभ्यम् । दाशात् । न । तम् । अंहः । अश्नवत् ।
ब्रह्मऽद्विषः । तपनः । मन्युऽमीः । असि ।
बृहस्पते । महि । तत् । ते । महिऽत्वनम् ॥४॥

॥ कल्पलता ॥

वेदात्मको जगति वेदविदेव नित्यः वेदात्मदृग् जयति वेदहृदेव सत्यः ॥
वेदाक्षर प्रतिमसस्वरसद्रसाप्यः वेदैकवेद्य इह वेदवचः समाप्यः ॥१९॥
वेदो विदात्मक इहात्मनि संविदानः वेदात्ममन्त्रवचसामपि सन्निदानः ॥
वेदात्मकेन वचसाऽखिलवित्प्रमाता वेदार्थसंविदुदये सुमतिप्रदाता ॥२०॥
वेद्यो बृहस्पतिरसौ जगतां प्रशास्ता वेत्ता नृणां सुनियमात् सति संप्रणेता ॥
त्राणाय वेदविधिना सुहिते नियोक्ता प्राणाय पुण्यकृतिषु प्रणतार्तिहन्ता ॥२१॥
ब्रह्मद्विषां मनसि तादृगेव हन्ता क्रोधादिवृत्तिशमने सुधियां नियन्ता ॥
पापात्मनामपि विमोचनकृत् प्रशान्त्या पुण्यात्मनां निजपदे स्थितयेऽनुमन्ता ॥२२॥
श्रद्धावतां श्रुतिमतामहितासहत्वं श्रेयःसुसाधनकृते ममतापरत्वम् ॥
विश्वस्य रक्षणकृते सततं समत्वं वेदे बृहस्पतिपदे निहितं महत्त्वम् ॥२३॥

"ब्रह्मचारी चरति वेविषद् द्विषः" इति

ब्रह्मचारी चरति वेविषद् द्विषः स देवानां भवत्येकमङ्गम् ॥
तेन जायामन्वविन्दद् बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ॥

(ऋ०, मं० १०।१०९।५)

॥ पदपाठः ॥

ब्रह्मऽचारी । चरति । वेविषत् । विषः ।
सः । देवानाम् । भवति । एकम् । अङ्गम् ।
तेन । जायाम् । अनु । अविन्दत् । बृहस्पतिः ।
सोमेन । नीताम् । जुह्वम् । न । देवाः ॥

॥ कल्पलता ॥

यद् ब्रह्मचर्यममृतात्मनि सार्वभौमं सद्ब्रह्मसंविदुदये व्रतमत्युदग्रम् ॥
सन्निष्ठया भुवि सुसाध्यमिहानिवार्यं तन्निष्क्रियं परमवीर्यकृतेऽनुधार्यम् ॥२४॥

सोमेन तां सुमनसा दिवि सत्त्वनीतां कामेन योगमहसाऽखिलमानभूताम् ॥
वाचं जुहूं दिविषदः पुनरन्वविन्दन् साह्वानकां हवनकृत्युचितामवन्दन् ॥२५॥

ब्रह्मा बृहस्पतिरखण्डसमाधियोगात् तद्ब्रह्मचर्यमुखतस्तपसाऽऽत्मयज्ञात् ॥
सौम्येन सत्त्वमनसाऽऽत्मगुणां स्वजायां भूयोऽन्वविन्ददिह वाचमिमां स्वमायाम् ॥२६॥

सा वाक् पराभगवती भुवि वह्निजाया स्वाहा हविः सुहवनेऽखिलयज्ञपत्नी ॥
त्यागादिहाखिलसमर्पणकृत् प्रशास्त्री योगात् परात्मनि सुदर्पणवत् प्रमात्री ॥२७॥

वाग्देवते सकलवाचकशक्तिमूर्ते वाच्यार्थरूपविततोर्जितविश्वकीर्ते ।
पूर्णात्मनि स्वपुरुषे निरते समस्ते संज्ञात्मशक्तिगुणसत्प्रकृते नमस्ते ॥२८॥

पूर्णात्मिके परमपूरुषसत्त्वनीते वेदात्मिके विततविश्वविभूतिगीते ।
नित्यं प्रसीद मयि संप्रणते मनस्ते सत्यं प्रसादय समस्तहिते नमस्ते ॥२९॥

वाचे त्वया परमपूरुषहार्दयोगाद् यत् स्वानुभूतममृतात्मसुपूर्णसत्त्वम् ॥
तत्त्वं प्रगाय सरसं परमं प्रशान्त्यै पीतं च पायय पुनः सुतमात्मनोमाम् ॥३०॥

तद्वाक्सुधारसमयं निजसत्त्वमाद्यं तद्गायनेन सह मां प्रति धापयन्ती ॥
वाचाऽनुकारयकृतेरनुकारिणं मां संवेदय स्वकृतिनं प्रतिगाययन्ती ॥३१॥

सच्छ्रद्धया समुदितां भगवत्प्रसाप्तां वाचं रसाय जनता-जगदीशतुष्ट्यै ।
भक्त्याऽर्पयामि भगवच्चरणारविन्दे स्वात्मार्पणेन करणत्रितयेन वन्दे ॥३२॥

॥ इति षड्विंशी कला ॥

संपूर्णा

---

# सप्तविंशी कला

## ॥ वेदाविर्भावः ॥

"तस्माद् यज्ञात् सर्वहुतः" इति नारायणः ऋषिः, पुरुषो देवता, अनुष्टुप् छन्दः ॥

तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ ६ ॥

(ऋ., मं. १०। ९०। ९)

## ॥ पदपाठः ॥

तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे ।
छन्दांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥ ६ ॥

## ॥ कल्पलता ॥

पूर्णात्मा पूरुषोऽसौ प्रभुरिह भगवान् सर्वहुद्यज्ञयोगात्
सन्नाम्नैवावशिष्टो निजचितिकलया ज्योतिषाऽऽविर्बभूव ॥
नित्यं सोऽजायमानः स्वयमिह बहुधा जायतेऽत्र स्वतन्त्रः
सर्वच्छन्दाँसि सोऽन्तर्ज्वलदनल इव स्वार्चिषा संदधार ॥१॥

स्वान्तर्योगात् प्रबुद्धो जगदुदयकृते स्वेच्छयैवेक्षमाणः
वस्तूनां वाचकास्ताः स्वरदमृतकला ब्रह्मचिद्रूपसंज्ञाः ॥
छन्दोबद्धाः स्ववाचः स्वरदनलमुखा "ऋग्-यजुः-सामसंज्ञाः"
चिद्योगादुन्मिषँस्ताः परिचितिधमनादुच्छ्वसन् उत्ससर्ज ॥२॥

ताभिर्ब्रह्मात्मिकाभिः स्वर-रस-चितिभिर्दिव्यविद्युन्मयीभिः
वाग्भिश्छन्दोमयीभिर्निजपरमहसा मन्त्रचिद्विन्मयीभिः ॥
ब्रह्मात्मा स्वीयसंवित्सुनिनदततया पूर्वया वेदमात्रा
वाचा विश्वादिमात्रा जगदिदमखिलं सर्वथा संजजान ॥३॥

गीतं ब्रह्मात्मनेदं श्रुतिनिगदमुखादिन्द्रवागग्निवक्त्रात्
सोद्गीता वेदवाणी निजपरमपदं ब्रह्मणाऽऽविश्चकार ॥
तस्माद् ब्रह्मात्मतत्त्वप्रकटनकृतये संविदे तत्प्रकाशे
तद्वागेव प्रमाणं प्रति भवितुमलं ब्रह्म सत्त्वानुयोगात् ॥४॥

वाग् वै सैवादिमाता परमपुरुषहृच्चेतनाऽऽधारशक्तिः
प्रत्यक्षा ब्रह्मरूपा परमरसमयी सा परेशात्मशक्तिः ॥
गौरी श्री ज्योतिरात्मा भगवति निरता सर्वहुद्यज्ञपत्नी
ब्राह्मी श्रद्धा प्रमात्री जयति भगवती सर्वभूताधिराज्ञी ॥५॥

पूर्णं सद्ब्रह्म सत्यं जगति परतमं तत् परोक्षं प्रसिद्धं
ज्योतिर्विश्वादिबीजं परमरसमयं चेतनाहृत्समृद्धम् ॥
तस्माद् ब्रह्मात्मनः सा परमचितिकला पूर्णसत्त्वाभ्युदीर्णा
गौरी वाग्देवतात्मा स्वपदि विजयते व्यापका वाचकार्णा ॥६॥

युग्मं तच्चैकसंज्ञं पृथगभिधमथाप्येकरूपं विरूपं
नानाभेदादिशून्यं बहुविधमुदितं तद्विभेदाद्यरूपम् ॥
सत्तातत्त्वाद्यभिन्नं क्वचिदिह गुणतो नामरूपादिभिन्नं
भेदाभेदोपनद्धं सममपि विषमं वस्त्वशेषादभिन्नम् ॥७॥

ब्रह्मासन्निर्विशेषः पुरुष इति नुतो नामरूपाद्यतीतः
पूर्णः सत्त्वादणीयान् सुविततमहिमा शक्तितः सन्महीयान् ॥
वाचा सन् एक एव प्रथितबहुविधः सन् सहस्रात्मकोऽसौ
वाचं विश्वादिशक्तिं सकलगुणचितिं विश्वरूपो बिभर्ति ॥८॥

माता ज्योतीरसात्मा परमचितिमयी चेतनात्मप्रभूत्यै
मूर्धन्यन्तःस्वराप्ता प्रतिचितिलषिता सर्वभूतप्रसूत्यै ॥
ब्रह्मात्मानं स्वबीजं निजपतिममृतं पूरुषं स्वस्वरूपं
स्वात्मन्यन्तर्दधाना प्रभवति जगतां वाक्प्रपञ्चाधिराज्ञी ॥९॥

वाच्यार्थात्मस्वरूपं रसतमममृतं ब्रह्म सर्वस्वपूर्णं
तच्छक्तिर्वाचकात्मा समरसकलिता सा परा वागुदीर्णा ॥
माता ब्रह्मादिमात्री स्वररसकलया ब्रह्मनाम्ना मिमाना
माया मा प्रेममूर्तिर्जयति भगवती ब्रह्मणा संविदाना ॥१०॥

यावद्भावैर्महिम्ना चिति-गुण-कृतिभिः संस्थितं ब्रह्म पूर्णं
माता ब्रह्मात्मना सा सममनुसमिता तावती वाक् प्रपूर्णा ॥
ते अन्योऽन्यात्मके स्तः सकलविधतया नामरूपादिसिद्धे
तादात्म्याप्तं तदेकं परमिह मिथुनं सर्वथाऽनादिसिद्धम् ॥११॥

सत्यं वस्त्वक्षरं तत् स्वयमिह परमे व्योमनि ब्रह्म पूर्णं
सत्यात्मा ब्रह्मसंज्ञा भवति परसती साऽऽदिमात्राऽक्षरा वाक् ॥
तत्त्वैक्यात् ते समाने मिथुनगुणमये नामरूपादियोगात्
तादात्म्यात् साम्यसत्त्वादपि सकलविधैर्निर्विशेषाद् विशेषात् ॥१२॥

सत्त्वं प्रत्नं परोक्षं पुरुषतनुगतं स्वात्मबीजं सुवीर्यं
तच्चैकानेकभावाद् बहुजगदुदये वस्तुसिद्धं निदानम् ॥
सिद्धोऽप्याद्यः परोक्षो जगति खलु पिता बीजलिङ्गैकमेयः
माता प्रत्यक्षसिद्धा भवति भगवती गर्भधात्री सवित्री ॥१३॥

मातुर्वाचैव वेद्यस्त्विह जगति पिता सन् स्वयं सुप्रसिद्धः
प्रत्यक्षोऽपि प्रपञ्चे नियतगुणकृते सर्वथाऽऽस्ते परोक्षः ॥

पुत्रः सोऽयं स्वयं वै यदि भवति तथा सन् पिता स्वप्रजानां
साक्षात् स्यात् तत्पितृत्वं निजमनुभवतस्तत्सुतस्यापरोक्षम् ॥१४॥

तद्वद्विश्वादिबीजं प्रथितमपि जगत्कारणैकानुमेयं
चित्सत्तामात्रसिद्धं जगति परमदो नाममात्रानुवेद्यम् ॥
सत्यं पूर्णं तदेकं परिविततततमं ब्रह्म नित्यं परोक्षं
हृद्यं वेदैकवेद्यं परमविदुदयात् स्वानुभावैकगम्यम् ॥१५॥

स्वात्मा ब्रह्मैव सिद्धोऽप्यनुपदमुदितो बोधितोऽपीह वाचा
सर्वेषां सोऽपरोक्षः स्वयमनुभवतः प्रत्यहम्प्रत्ययेष्टः ॥
प्राग्दृष्टेः स्वप्रमादाद् बहिरिह विषयात् तत्स्वरूपाप्रबोधात्
सिद्धोऽपि स्यात् परोक्षो निधिरिव परमो गुह्यसंस्थास्वभावात् ॥१६॥

व्योम्नि ब्रह्म स्वचित्या परमभिविततं ब्रह्मणि व्योमसिद्धं
व्योम ब्रह्मात्मकं तच्छ्रुतिमुखगदितं ब्रह्म तत् स्वःशरीरम् ॥
तद्वद् वाच्याक्षरं सन्निजपरमपदं ब्रह्म तस्मिन्नमात्रे
वाग्रूपं चाक्षरं तत् प्रतिनिहितमदो व्योम तन्मात्रमात्रम् ॥१७॥

एवं ब्रह्मात्मकं तत् प्रथमपदमगाद् अक्षरं ब्रह्म सत्यं
सिद्धं वागक्षरं सत् प्रणवनिनदकं ब्रह्मणस्तच्छरीरम् ॥
सत्या ब्रह्मात्मिका वाक् परमचिततनूर्ब्रह्मसद्वाचकात्मा
तद्वाचि स्वाक्षरात्मन्यपि समनिहितं ब्रह्मनित्यं प्रपूर्णम् ॥१८॥

नाम्ना रूपैर्महिम्ना सकलगुणगणैरन्वयाच्चातिरेकाद्
वागात्मानौ समानौ मिथ इह भवतो ब्रह्म-सत्याक्षराख्यौ ॥
वाच्ये ध्वन्ये च लक्ष्येऽप्यमितमितपरे वाक्परब्रह्मणी ते
सिद्धौ वाक्पूरुषौ तौ समरसलसितौ दम्पती सत्त्वपूर्णौ ॥१९॥

तस्माद् ब्रह्माद्यशेषप्रकृतिकजगतां वस्तुतत्त्वप्रकाशे
सत्यासत्यप्रपञ्चप्रभृतिसकलकेऽत्यन्तगे पारमार्थे ॥
ज्ञाने विज्ञानसत्त्वे वचनमिह परं वस्तुबोधे परेभ्यः
प्रत्यक्षं वाक्प्रमाणं प्रतिपदमुदगादादिमाताऽखिलानाम् ॥२०॥

आशाऽऽकाशप्रकाशाक्षरमुखविततं शब्दतन्मात्ररूपं
वाग्-ब्रह्मैकात्मतत्त्वं प्रतिपदनियतं तच्छचीन्द्रात्मरूपम् ॥
मूर्धन्यानाहतं तत् परनिनदमयं सस्वरं सद्रसाप्तं
सर्वान्तश्चेतनाप्तं सकलमतिततं ब्रह्मवागक्षराप्तम् ॥२१॥

तद्वद् भूतेषु देवेष्वपि सकलजनेष्वन्तरात्मस्वपीष्टं
सर्वान्तर्यामिसत्त्वं समविततततमं चेतनैकात्मशिष्टम् ॥
चिज्ज्योतीरूपयाऽऽप्तं समरसपरया सत्तयाऽन्तेऽवशिष्टं
तद्वाचा पूर्णयाऽऽप्तं श्रुतिनुतममृतं वस्तु किञ्चिद् विशिष्टम् ॥२२॥

अग्निर्ज्योतिः समिद्धं ज्वलति निजचिता यच्च साक्षात् परोक्षं
तद्भूमावन्तरिक्षे दिवि च निजपदं स्वाश्रयीभूतमाप्तः ।।
भूतं काष्ठादिकं तद् दहति परिचरन् आत्मसात् कर्तुमन्तः
साक्षादग्निं करोति प्रकृतिगुणकृतेरत्र सिद्धः समान्तः ।।२३।।

दिव्यो ज्योतिर्मयोऽग्निर्जगति परितपन् यद्यपि स्यात् स रूपः
गुप्तः सर्वत्र भूते त्रिभुवनजठरे सूक्ष्मतेजास्स्वरूपः ।।
काष्ठं भौमं रजस्तद्रसमयममृतं स्वःपदं स्वाश्रयेष्टं
प्रत्यक्षो नैव स स्यादिह निजगुणतस्तद्विनाऽऽलम्बनेन ।।२४।।

तद्वत् सँश्चेतनात्मा प्रभवति जगतां चेतनायाः परोक्षः
दृष्टेर्नो गोचरः स्यात् सकलकरणभृत् स्वानुभूत्यैकवेद्यः ।।
धीभिर्व्याप्तं शरीरं प्रकृतिकरणकं तद्विना नो भवेत् सः
प्रत्यक्षश्चापरोक्षः सततमहमिति स्फूर्तये चेतनार्हः ।।२५।।

ब्रह्मेन्द्रात्मा परेशः प्रभुरिह पुरुषः सर्वहुद्यज्ञसिध्यै
स्वान्तःसर्वाणि भूतान्यपि निजतपसा सोऽजुहोच्चेतनाग्नौ ।।
स्वात्मानं चाजुहाव प्रतिकृतिरहितश्चित्प्रदीप्ते तपोऽग्नौ
सद्यः सन् नामशेषादसदिव हि वसन् निर्विशेषो बभूव ।।२६।।

निर्वेदेतत्समाधौ मति-गतिरहितो निर्गुणो निर्विशेषः
स ब्रह्मात्मा स इन्द्रो निजपरतपसा नाममात्रावशिष्टः ।।
श्रद्धां तामात्मपत्नीमपि निजलसितां सर्वहुद्यज्ञपत्नीं
नाम्नैवाविश्चकार प्रभुरिह भगवान् वाक्परां स्फूर्तिमन्तः ।।२७।।

वाचं देवीं सतीं तामनलवदर्विनं भूमभावानुभूतां
संवित्कामक्रियाप्तां त्रिगुणचितिमयीं सर्वथा नामशेषाम् ।।
प्रत्यक्षीकर्तुमात्मप्रकृतिगुणमयीमात्मसात्कर्तुमिष्टां
ब्रह्मीभूतां चकार प्रतिविमिततनूं स्वाश्रयीभूतसत्त्वाम् ।।२८।।

स ब्रह्मात्मेन्द्रसत्त्वो गुणकृतिरहितो निर्विशिष्टोऽवशिष्टः
वाचं पूर्णात्मशक्तिं निजपरमचितेरात्मसात् संचकार ।।
तस्माद्वागेव पूर्णा परमचितिमयी पारमैश्वर्यसत्त्वा
चिद्योगादभ्युदीर्णा परमपुरुषहृच्छासनी शक्तिपूर्णा ।।२९।।

तस्माद् ब्रह्मात्मनः सा परनिनदमयी ब्रह्म साक्षाद् बभूव
प्रत्यक्षा ब्रह्मसत्त्वा चितिरिह बृहती सैव भूमात्मिका वाक् ।।
ब्रह्मात्मा नामरूपैः कृति-गति-चितिभिः सा शचीन्द्रात्मशक्तिः
तत्साक्षात्कारसिद्ध्यै प्रभवति भवती सर्वथाऽऽलम्बनार्हा ।।३०।।

तस्माद् वै वेदवाचा सुविहिततपसा ब्रह्मभावानुभावात्
तत्साक्षात्कारसिद्धिर्भवितुमिह विदां शक्यमेवेति युक्तम् ।।
प्रत्यक्षब्रह्मसरवा प्रभवति जगतामीशवाक्छासनात्मा
सिद्धा ब्रह्मात्मभावे जयति भगवती वाक् परब्रह्मशक्तिः ।।३१।।

ब्रह्माणी व्याप्ति-वृद्धि-प्रतिचितिबृहतीचेतना(ऽ)हंसरूपा
सेन्द्राणी चिच्छची वाक् परमपुरुषचित् पारमैश्वर्यपूर्णा ।।
शक्ता प्रापञ्चिकेऽर्थे जगति परतमा संविदा पारमार्थे
प्रत्यक्षात्मा परेशा प्रभवति परवाक् पूरुषात्माऽऽदिमाता ।।३२।।

।। इति सप्तविंशी कला संपूर्णा ।।

## ॥ अष्टाविंशी कला ॥

### ॥ वेदमाता ॥

अध्यक्षात्माऽधिवेदाद्यखिलरसनिधिः सर्वसत्त्वप्रपूर्णः
सत्यज्ञानामृतात्मा परमगुणनिधिः संविदिच्छाक्रियार्णः ॥
प्रज्ञानानन्दविद्यारसमभिवितरन् भद्रकृद्भर्गमूर्तिः
भक्त्यै भुक्त्यै विमुक्त्यै प्रभवतु भगवाञ्छान्ति-शक्त्यादिभूत्यै ॥१॥

सत्यं तद्वस्तुतत्त्वं भगवति लसितं को(ऽ)नुवक्तुं समर्थः
यस्मिन् वाग्देवताऽपि प्रतिपदवचनान्मौनमुद्रोपपन्ना ॥
वागीशो वेदवक्त्रात् प्रतिनदति यथा तत्स्वयं मूर्धनि स्वे
प्राणैर्नित्यं नियुक्तः प्रणिहितमनसा सत्यवाचाऽनुवक्ष्ये ॥२॥

को अद्धा वेद क इह प्र वोचत्
कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग् देवा अस्य विसर्जनेनाथा
को वेद यत आबभूव ॥ ६ ॥

(ऋ० मं. १०।१२९।६)

### ॥ पदपाठः ॥

कः । अद्धा । वेद । कः । इह । प्र । वोचत् ।
कुतः । आऽजाता । कुतः । इयम् । विऽसृष्टिः ॥
अर्वाक् । देवाः । अस्य । विऽसर्जनेन ।
अथ । कः । वेद । यतः । आऽबभूव ॥ ६ ॥

कः सत्येन च निश्चयेन परमां वेदादिसृष्टेः स्थितिं
कस्माद्वा कुत आप्रजातमखिलं वेदादिविश्वं जगत् ॥
ते देवास्तदनन्तरं समुदिता अर्वाञ्च एवासते
तत् को वेद तदेतदेवमखिलं चित्रं विचित्रं महत् ॥३॥

इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ॥ ७ ॥

(ऋ० मं. १०।१२९।७)

॥ पदपाठः ॥

इयम् । विऽसृष्टिः । यतः । आऽबभूव ।
यदि । वा । दधे । यदि । वा । न ।
यः । अस्य । अधिऽअक्षः । परमे । विऽओमन् ।
सः । अङ्ग । वेद । यदि । वा । न । वेद ॥ ७ ॥

॥ कल्पलता ॥

येयं वेदादिसृष्टिर्निजयजनमुखादादितः सम्बभूव
वेदाद् विश्वादिसृष्टिः श्रुतिवचनपदैः श्रूयतेऽनादिसिद्धा ॥
यस्मात् कस्मात् कुतः साऽभवदिति सहसाऽभूतपूर्वाऽनुभूता
सोऽस्याध्यक्षोऽपि पूर्णं श्रुतिरवददिदं वेत्ति वा नेति वेति ॥४॥

मूले पूर्णा पराग्रा स्वरसविदुदिता चित्कला संस्फुरन्ती
मध्ये हृद्यभ्युदीर्णा स्वररसमुदिता मूर्ध्नि विज्ञानसत्त्वा ॥
वक्त्रे शब्दाक्षरात्मा सुवचनरसना सद्रसाग्रेऽवतीर्णा
साक्षाद् वाग्देवतेयं वितरतु भवती सत्यमीशात्मसत्त्वम् ॥५॥

यश्छन्दसामृषभो विश्वरूपः छन्दोभ्योऽध्यमृतात् संबभूव ।
स मेन्द्रो मेधया स्पृणोतु अमृतस्य देव धारणो भूयासम् ॥
(शिक्षोपनिषत् ४।१)

॥ पदपाठः ॥

यः । छन्दसाम् । ऋषभः । विश्वरूप इति विश्वरूपः ।
छन्दोभ्यः । अमृतात् । सम् । बभूव ॥
सः । मा । इन्द्रः । मेधया । स्पृणोतु ।
अमृतस्य । देव । धारणः । भूयासम् ॥

"इन्द्र" श्छन्दोऽन्तरात्मा प्रणवपरतनुश्छन्दसां वर्षकः सन्
ईशानः सर्वविद्यानिधिरिह परमो मन्त्रदृक् सन् महर्षिः ॥
सर्वज्ञश्छन्दसैव प्रतिवितरति तत् पूर्णसर्वात्मसत्त्वं
छन्दोवाचाऽभ्युदीर्णः स्वयमपि तपसा छन्दसा सञ्चकास्ते ॥६॥

"प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो-अर्यमा देवा ओकाँसि चक्रिरे" ॥
(ऋ० १।४०।५)

॥ पदपाठः ॥

प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् ।
यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे" ॥

इन्द्रात्मान्तर्यवाचश्चिदुदितकिरणं ब्रह्मणस्पत्युदीर्णं
सर्वासां देवतानां परमधिकरणं छान्दसं मन्त्रवर्णम् ॥
छन्दोबद्धाश्च वाचः परमपुरुषहृद्देवतामूर्तयस्ताः
प्रत्यक्षब्रह्मरूपाः स्वर-रसललिता मन्त्रमय्योऽग्निवक्त्राः ॥७॥

मन्त्रात्मा सेन्द्रचित्तेः स्फुरणकिरणतः सूक्ष्मनादानुबद्धा
मूर्धन्याऽनाहतेव श्रुतिमयचितिवाग् व्योमवाणीव सिद्धा ॥
दृष्टा पूर्वर्षिभिः सा श्रुति-नयनमुखात् संश्रुता ज्योतिषाऽऽप्ता
शब्दानुश्रावकेऽन्तर्ऋषिहृदि परमे दिव्ययन्त्रेऽभ्युपात्ता ॥८॥

यज्ञेन वाचः पदवीयमायन्
तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा
तां सप्तरेभा अभिसन्नवन्ते ॥

(ऋ० १०।७१।३)

॥ पदपाठः ॥

यज्ञेन । वाचः । पदवीयम् । आयन् ।
ताम् । अनु । अविन्दन् । ऋषिषु । प्रऽविष्टाम् ॥
ताम् । आऽभृत्य । वि । अदधुः । पुरुऽत्रा ।
। सप्त । रेभाः । अभि । सम् । नवन्ते ॥

यज्ञेन स्वात्मनोऽन्तः सुविहिततपसा तत्र पूर्वर्षयस्ते
यज्ञेष्टं वाक्पदव्यं निजहृदि दहरे ब्रह्म योगादुपायन् ॥
वाचं तां ब्रह्मसत्त्वां विदुरिह परमां संविदैवान्वविन्दन्
छन्दोवाचाऽभ्युदीर्णामृषिवचनमुखादत्र सर्वेऽप्यविन्दन् ॥९॥

छन्दोमय्योऽवतीर्णाः क्रतुमयतपसाऽऽभ्यन्तरे शुद्धसत्त्वे
स्वान्तर्मूर्धन्ययन्त्रे श्रवणचितिमुखात् संविदाऽन्तःश्रुतास्ताः ॥
वाचा चोच्चारितास्तास्तदनुकृतिपरैरीशचित्प्रेरितैस्तैः
मन्त्रद्रष्टृत्वमाप्तं परतरमृषिभिस्तद्ध्यृषीणामृषित्वम् ॥१०॥

वेदे प्राचामृषीणामनुभवनिहितं भूत-देवात्मतत्त्वं
ब्रह्माद्येऽतीन्द्रियार्थेष्वपि परिविशतां नित्यमन्तर्मुखानाम् ॥

सृष्टेः प्राक्सिद्धमाद्यं गुण-कृतिरहितं नामरूपाद्यतीतं
सत्यं कालत्रयेऽपि प्रतिकृतिविरहादादिसृष्टौ प्रवृत्तम् ॥११॥

वेदाभावे तदानीन्तनमखिलमदो निर्विशेषं विशिष्टं
बुद्धेर्भावादिदानीन्तनजनमनसा कल्पनातीतमेव ॥
वृत्त्या तत्कल्पनायां गजमुखरचने वानरः सन् बभौ सः
इत्येवाभाणिकेव प्रतिपदमुदितं तत्तु हास्यास्पदं स्यात् ॥१२॥

सर्वेषां सुप्रसिद्धे जगति निजपितुर्ज्ञानलाभे नराणां
प्रत्यक्षं सत्प्रमाणं वचनमभिमतं मातृवक्त्रादुदीर्णम् ॥
तद्वद्वाच्यार्थसत्त्वादपि परमपदे ब्रह्मणि स्वे परोक्षे
सामर्थ्याद् वाचकात्मा प्रभवति भवती वेदवागेव सत्या ॥१३॥

यद्वद् ब्रह्माहमस्मीत्युदितमपि वचो वामदेवादिगीतं
प्रामाण्याच्छास्त्रदृष्ट्या स्वनुभवमुखतो ब्रह्मतत्त्वोपदेशात् ॥
सर्वत्रैतत् समानं सकलजनमतं तत्तदात्मानुभूतेः
प्राकाश्ये सद्विशिष्टं वचनमिह परं तत्तदभ्युक्तमेव ॥१४॥

सद्वस्तुज्ञानसिद्ध्यै परवचनमदः सत्प्रमाणं समेषां
तद्वद्वस्तूपदेशे निजवचनमिदं स्यात् प्रबोधे परेषाम् ॥
न्याय्यात् प्रत्यक्षसिद्धात् सममुदितमिदं बीज-वृक्षादिरूपात्
स्वज्ञानेऽन्यप्रबोधेऽप्युचितमनुपदं वाक्पदालम्बनं स्यात् ॥१५॥

तस्माद् वाग्-वस्तुनोस्तन्मिथुनमभिमतं नित्यतादात्म्ययोगात्
तस्मात् सञ्ज्ञादिपूर्वं सममुदितमलं ज्ञानमेव प्रपूर्णम् ॥
अर्थे दृष्टेऽपि तत्त्वादनुवचनमपि प्रत्ययादेरभावे
सञ्ज्ञाज्ञानादिशून्ये विदितमपि परं प्रत्यशक्यं प्रवक्तुम् ॥१६॥

एकस्यैवोपयुक्तं सकलमिह भवेदेकदेशानुभूतं
नाम्नो वा रूपतो वा विरहितमदसो ज्ञानमप्यस्त्यपूर्णम् ॥
तस्मात् सञ्ज्ञादिशून्यं सुविदितमपि तन्नान्यबोधे समर्थं
मूकानां मौनिनां वा प्रवचनत ऋते ज्ञानवत् स्यादपाथम् ॥१७॥

"वेदः" सर्वज्ञकल्पः परमपुरुषहृच्छासनं वाग्विभूतिः
मन्त्रश्छन्दः प्रबद्धो जगति विजयते ऋग्-यजुः-साममूर्तिः ॥
प्रत्यक्षब्रह्मरूपः स्ववगमयति तद् ब्रह्म पूर्णं परोक्षं
तद्वाचा वेदमात्रा प्रभवति भगवान् विश्वभूतप्रशास्ता ॥१८॥

"वेदो" विज्ञानरूपः स्वर-रस-निनदैश्छन्दसा वाचि सिद्धा
पूर्णेऽन्तःस्वे परेशे स्वरदमृतचिता दिव्यवाचा निबद्धः ॥
निर्वेदात् सद्विमर्शाद् ऋषिहृदि तपसा निर्विकल्पे समाधौ
सर्वेशानुग्रहाप्तैर्ऋषिभिरधिगतः पूर्णसंविद्रसाब्धौ ॥१९॥

"वेदो"ऽसौ संविदात्मा परमरसनिधिः सन् सुविज्ञानपूर्णः
सर्वज्ञः सर्वशक्तिस्त्रिजगदधिपतिः पूरुषः सन् परात्मा ॥
वेदात्मा सार्वभौमः सकलभुवनभृद् भूर्भुवःस्वःस्वधामा
विश्वात्मा विश्वविद्यो विलसति भगवान् सच्चिदानन्दभूमा ॥२०॥

वेदेऽस्मिन् वाक्स्वरूपे परमपुरुषहृद्योगतश्चर्षिदृष्टे
प्रज्ञानं वस्तुसत्त्वं स्वनुभवनिहितं पूर्णसर्वात्मतत्त्वम् ॥
आर्षेयं योगदृष्टेरपुरुषकृतिकं बुद्धिक्लृप्त्याद्यभावात्
प्रत्यक्षं सत्प्रमाणं ह्यकृतकनिगदाद् ईशवाक्छासनं स्यात् ॥२१॥

वेदानां तच्चतुष्ट्वे त्रितयमभिहितं भूत-दैवात्मतत्त्वं
प्रत्यक्षं तत् परोक्षं सकलहृदिहितं चिन्मयं चापरोक्षम् ॥
तेषां योगाश्च यज्ञास्त्रिगुणकृतिपरा ज्ञान-भाव-क्रियाप्ताः
सर्वे धर्माः सुसिद्धास्त्रिकरणपरकाः पूर्णनैर्गुण्यविद्याः ॥२२॥

प्रत्यक्षं भूतजातं जगदिदमखिलं स्वेन्द्रियैरत्र दृश्यं
पूर्णं ब्रह्माधिदैवं परमपि तु जगत्कारणं स्वानुमेयम् ॥
जीवः सर्वान्तरः सन् अहमिति विदितः स्वीयसर्वानुभूतेः
एकैकस्यैव बोधे न तु भवति परं वेदशास्त्रैकमानम् ॥२३॥

द्वि-त्रैस्तत्त्वैश्च योगात् सममुदितमदो वस्तुपूर्णं तदेकं
प्रत्यक्षाद्यैरगम्यं परतममपि तद् वेदशास्त्रैकगम्यम् ॥
तस्मात् तत्त्वत्रयाप्तं सकलमिदमदस्तत्समस्तं समानं
तादात्म्यात् सामरस्यात् समुचितमदसो ज्ञानमेवात्र पूर्णम् ॥२४॥

तेजोऽबन्नैश्च भूतैस्त्रिभुवनसदनैः सूर्यशक्राग्निदेवैः
स्वान्तर्वाक्-प्राण-चित्तैस्त्रिवृदितकरणैर्भूत-दैवात्मतत्त्वैः ॥
पूर्णं ज्ञानं तदेतत् सकलमुनिमतं सत्प्रमाणैः समस्तं
सिद्धं सर्वात्मना तत् प्रतिपदविदितं शास्त्रतश्चानुभूतेः ॥२५॥

बाह्यो ज्योतिर्मयोऽसौ दिविरविरुदितो यो जगच्चक्षुरिष्टः
स्वान्तस्तद्दर्शने स्यात् करणमिदमदश्चक्षुरस्माकमिष्टम् ॥
दिव्यं दृक्छक्तिरूपं परतरमुभयात् तद्द्वयोरप्यभीष्टं
पूर्णं तत्त्वैस्त्रिभिस्तैर्नयनमिह परं तत्त्रियोगाद् विशिष्टम् ॥२६॥

द्रष्टा दृष्टिश्च दृश्यं त्रिपुटिमतिमयं साम्यतः सर्वमान्यं
पूर्णं त्रिभ्योऽप्यतीतं त्रिषु समविततं वस्तुतत्त्वाधिगम्यम् ॥
एकैकं स्यादपूर्णं समरसविदितं सर्वथा तत् समानं
प्रत्यक्षं वस्तुसिद्धं जगति समुदितं तत् पृथक्त्वात् स्वमानम् ॥२७॥

एवं सर्वेषु भूतेष्वपि निजकरणेष्वत्र देवेषु भूयः
ब्रह्माण्डेऽप्यत्र पिण्डे परतमपुरुषे सर्वसत्त्वप्रपूर्णे ॥

ज्ञानोपास्तिक्रियादौ सुर-मुनिचरिते देव-दैत्यादियुद्धे
तत्त्वैक्येनैव बोधः परमहितकरः सामरस्यात् त्रयाणाम् ॥२८॥

ये च पूर्वे ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः ।
अस्मे ते सन्तु सख्या शिवानि यूयं पात स्वस्तिभिः सदा नः ॥

(ऋ० मं० ७, २२, ९)

॥ पदपाठः ॥

ये । च । पूर्वे । ऋषयः । ये । च । नूत्नाः ।
इन्द्र । ब्रह्माणि । जनयन्त । विप्राः ॥
अस्मे इति । ते । सन्तु । सख्या । शिवानि ।
यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥

दिव्यास्ते वेदमन्त्रा ऋषिभिरधिगता ब्रह्मभावानुभूत्या
गीताः पूर्णानुभावाज्जगदुपकृतये शक्तये विश्वशान्त्यै ॥
छन्दोवाचस्तदानीमिव निशितधिया दिव्यमूर्धन्यधाम्नि
चिद्यन्त्राप्तेरिदानीमपि परतपसा श्रोतुमर्हन्ति सन्तः ॥२९॥

पूर्वत्रेवैव शास्त्रात् सुविहिततपसा तत्त्वदृष्ट्याऽऽत्मभावाद्
अद्यत्वेऽप्यत्र साक्षाद् यदि भवति परब्रह्मवस्तुप्रबोधः ॥
नोचेच्छास्त्रप्रवृत्तिस्तदनुजनमनोभाव-धर्मानुवृत्तिः
सा सर्वाऽपार्थिकैवेत्युपरतिमुखतः कामचारोन्मतिः स्यात् ॥३०॥

यद्वद्ब्रह्मात्मभावात् तदवगतिदृशा वस्तुसद्दर्शनं स्यात्
तुल्यं तत् सिद्धवस्तुप्रकृतिकरणके साधनेऽपीह साध्ये ॥
तद्वद्योगादिदानीमपि निजतपसा दर्शनं छन्दसोऽपि
प्रत्यक्षब्रह्मणस्तद् भवितुमिह पुनः शक्यमेवेति सिद्धम् ॥३१॥

तस्मात् सम्पादनीयं तपसि सुनिशितं श्रोत्रमान्तर्यमाद्यं
तत्पात्रत्वं पवित्रं चितिमतिविशदं हृद्य-मूर्धन्ययन्त्रम् ॥
स्वात्मानन्दामृताब्धौ निजपरमपदे ज्ञानपूर्णे समाधौ
मन्त्राणां दर्शने च प्रतिनिधिकरणं ब्रह्मतत्त्वानुभावात् ॥३२॥

॥ इति अष्टाविंशी कला सम्पूर्णा ॥

## ॥ एकोनत्रिंशी कला ॥

### ॥ एतस्मिन् विषये आक्षेपः ॥

प्राचां तेषां विशेषप्रगतिविरहतः संविदोब ालभावाद्
अत्यन्तन्त्वप्रबुद्धं शिशुहृदिव लघुज्ञानमाद्यं हृदय्यम् ॥
मूर्धन्यं चाप्यसीमं परमतिविततं तत् सुविज्ञानमान्त्यम्
इत्याहुस्तत् प्रशस्यं निजहृदयवशाद्भूतविज्ञानवादात् ॥१॥

### ॥ समाधानम् ॥

तेषां बालस्वभावेऽप्यतिविमलधियां संविदामप्यभीष्टे
तेऽल्पज्ञास्तेऽज्ञकल्पा इति विषमदृशा तत् प्रवक्तुं न शक्यम् ॥
सत्य-श्रद्धात्मभावादृजुतमहृदयास्ते तपोयोगनिष्ठाः
सिद्धाः सर्वज्ञकल्पाः प्रणिहितमनसस्ते स्वयम्प्रज्ञसत्त्वाः ॥२॥

वैशेष्यान्निर्विशेषाद् विषमविषयकैर्मानगर्वादिदोषैः
निर्लिप्ता ज्ञानपूर्वं बहिरिह विषये बालभावत्वमाप्ताः ॥
सद्योजातस्वरूपा भगवदुपमिता ज्ञानविज्ञानपूर्णाः
पूर्णे ब्रह्मात्मभावे समरसलसिताः प्रत्यगात्मप्रलीनाः ॥३॥

पूर्णे तत्सामरस्ये स्थिति-मति-गतितो मौनमुद्राप्रसन्नाः
साक्षात्कारैकयोगादवगतिमुखतस्ते स्वयं स्फूर्तिसत्त्वाः ॥
छन्दोद्रष्टार आद्याः परमपदविदस्ते त्वनूचानविद्याः
वाग्भिस्तद्वेदमन्त्रैरिह सकलनृणां मार्गदर्शित्वमाप्ताः ॥४॥

तस्माद् बालस्वभावात् सममतिमुखतो ज्ञानविज्ञानपूर्वं
छन्दोवाचां विकासादृषिमुखवचनात् सर्वसंवित्प्रकाशः ॥
तन्नाज्ञानप्रयुक्तं न पुनरनुचितं न प्रमादादियुक्तं
प्रत्यक्षं तत् प्रमाणं सकलविषयके वैदिके लौकिकेऽपि ॥५॥

लोके प्रामाण्यभाजः कपटविरहिताः बालवाचः सुरस्याः
सत्याः सर्वप्रियास्ताः सममतिमुदिताः सात्त्विकाः सौमनस्याः ॥
दिव्ये पूर्णे परोक्षे परहृदयगते भूत-भाव्यादिकेऽर्थे
देवाद्यावेशगीतं वचनमभयदं सत्प्रमाणं हितार्थम् ॥६॥

### ॥ पुनरवान्तराक्षेपः ॥

छन्दःशिक्षादिसद्व्याकरणनियमतः शून्यमर्थादिहीनं
सोन्मत्तालापवत् तत् स्तुति-नति-गतिकं मान-लोभादिपूर्णम् ॥
विज्ञानासङ्गतेस्तत् सरलसुललितप्रौढसाहित्यशून्यं
अज्ञानादिप्रयुक्तं शिशुवचनमिव श्राव्यमास्तामपार्थम् ॥७॥

॥ तत्र समाधानम् ॥

शुद्धाऽन्तर्हृत्सुवाचा सममतिनदितं तत्सुविज्ञानसत्त्वं
सिद्धान्तैकार्थपूर्णं सुविशदमखिलं सत्यपूर्णार्थितत्त्वम् ॥
वाच्ये तद्वाचकेऽपि प्रतिहितनियमाद्वस्तुसङ्केतपूर्वं
श्राव्यं ज्ञेयं सुभाव्यं गुरुमुखवचनात् तत् स्ववाचाऽनुवाच्यम् ॥८॥

आचार्यादेव वेदाध्ययनविधिमुखादादितः सम्प्रवृत्त्या
सार्थज्ञानान्तमेवाध्ययनविधिरसौ सार्थकः स्यात् समाप्तः ॥
धर्मानुष्ठानयोगात् तदुदितसकलस्वार्थसिद्धिः परार्था
वेदाद्यध्यापनेन प्रतिफलति परं सर्वथा स्वेष्टसिद्धिः ॥९॥

अर्थज्ञानाद्यभावेऽप्यनुजपपठनैर्ब्रह्मयज्ञादिसिद्धिः
श्रद्धाप्तात् कर्मयोगात् फलति सुतपसा वाङ्मुखान्मन्त्रसिद्धिः ॥
भूयः सा भक्तियोगात् स्तुति-नतिमुखतो देवतासम्प्रसादात्
सार्थज्ञानाद् विशेषात् परमसुखपदं प्रापयेत् स्वप्रसादात् ॥१०॥

मन्त्राणां जाप-पाठ-प्रवचनतपसा वाङ्मनःप्राणयोगात्
तत्राप्यर्थान्वयेन प्रतिपदमुदितैर्ज्ञान-भाव-क्रियाद्यैः ॥
वाक्छक्तिर्मन्त्रयोगात् सह जयति महासिद्धिदात्री समर्था
श्रेयो-निःश्रेयसाप्त्यै प्रभवति जगतां निग्रहेऽनुग्रहेऽपि ॥११॥

वेदेऽन्तः सन्निगूढाः सकलरसकलाः सप्तसङ्केतपूर्णाः
दिव्या वाग्देवतात्मा स्वर-रसविमला रूपकार्थाभ्युदीर्णा ॥
बिंदू रेखा च सङ्ख्याऽक्षरमपि लिपिभाक् चित्र-वर्णादिमुद्राः
तत्सङ्केतार्थसत्त्वं सहसममुदितं तत्त्वसंशोधनाप्तम् ॥१२॥

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥
(ऋ० मं० १, १०, १)

॥ पदपाठः ॥

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ।
ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥

गायन्ति त्वां महेन्द्रं परतममृषयस्तत्र गायत्रिणस्ते
तेऽर्चन्ति स्वीयमर्कं रुचितरविमृचा तेऽर्किणस्त्वार्चवाचः ॥
ब्रह्माणस्ते समन्त्राः श्रुतिशतविनुतं तं च शातक्रतूच्चं
श्रेष्ठं सर्वोच्चसत्त्वं ध्वजमिव रुचितं सन्दधुर्भूतिपूर्णम् ॥१३॥

गायत्री मन्त्रवाचा प्रणिहितमनसा स्वं चिदात्मानमिन्द्रं
मुख्यं प्राज्ञात्मकं तं चितिवचनमुखं प्राणमैन्द्राग्नसत्त्वम् ॥

गायन्तीति प्रगीता स्वर-रसनिगमा छन्दसा सत्यमन्त्रा
गायत्रीति प्रसिद्धा निजपरमहसा गायतां त्राणनार्था ॥१४॥

गायत्री वाक् सवित्री त्रिभुवनजननी सर्वभूतादियोनिः
प्रत्यक्षा ब्रह्मरूपा परमगुणमयी सर्वशक्त्यादिभूमिः ॥
गेया छन्दःस्वरूपा स्वरसमरसगा छन्दसा संहितात्मा
प्रज्ञानेन प्रपूर्णा जयति भगवती प्रत्यगात्माधिराज्ञी ॥१५॥

गायत्र्याः सोऽन्तरात्मा प्रभवति भगवान् प्राणिनां सन् पिता नः
गायत्री तत्सती सा जगति भगवती चेतना विश्वमाता ॥
तादात्म्यात् संहितौ तौ त्रिभुवनपितरौ दम्पती सत्त्वपूर्णौ
सत्यौ वाग्-ब्रह्मसत्त्वौ जगदिदमवतां प्राणसन्त्राणदौ स्ताम् ॥१६॥

ब्रह्माण्डे सर्वतोऽन्तर्बहिरपि च चिता व्योम्नि दिक्षु स्वरन्तौ
वागात्मानौ समानौ समरसकलया साहचर्योच्चरन्तौ ॥
सर्वान्तः संस्फुरन्तौ श्रुति-नयन-मनः प्राण-वाक्-चित्तियोगात्
गायत्री-ब्रह्मरूपौ सुनियतकरणैः संविदोपासनीयौ ॥१७॥

भूतात्मा ब्रह्मशक्तिः सकलभुवनभृद्भूर्भुवः स्वर्विभूतिः
विश्वाधाराऽऽदिशक्तिः सुविततपरमव्योमतन्मात्रकाण्डा ॥
विश्वाद्या शब्दशक्तिर्दिगिह समुदगादादिमाताऽदितिः सा
वेद्या गायत्रिसत्त्वाक्षरपरमरसब्रह्मचिद्भूरखण्डा ॥१८॥

पूर्णे प्रापञ्चिकेऽस्मिन् सकलविधसुखे पारमार्थे परस्मिन्
सर्वार्थानां विधात्री शुभविजयकरी पूर्णसौभाग्यमूर्तिः ॥
सर्वाङ्गैः सम्प्रपूर्णा प्रणतभयहरा ऋग्यजुःसाममूर्तिः
गायत्री वेदमाता जयति भगवती भारती भूमकीर्तिः ॥१९॥

पूर्णात् सर्वात्मनः सा स्वयमियमुदगाद् ब्रह्मणो वाक् परात्मा
प्रत्यक्षा तत्समाना चिति-कृति-करणैः सद्गुणैः शक्तिसत्त्वैः ॥
नाम्नो रूपादतीतं परममधिपतिं पूरुषं तं स्वमिन्द्रं
गायत्रीयं स्वशक्त्या स्वर-रसमुखतो गायति ब्रह्म पूर्णम् ॥२०॥

नित्यं गायत्रि मातः परमपुरुषहृत्प्रेमचिद्योगपूर्णं
सत्यं तत् स्वानुभूतं निजममृतरसं स्वात्मसत्त्वप्रसादम् ॥
मह्यं देहि प्रसन्ना परमसुखरसं पूर्णसंवित्प्रकाशात्
प्रज्ञानानन्दयोगाद्धृदि निजरसदे स्वात्मनः सम्प्रशान्त्यै ॥२१॥

मातर्मां धापय स्वं परममृतरसं ब्रह्मयोगानुभूतं
हृद्यं तत् सम्प्रगाय स्वयमभयकरं हृत्प्रहर्षाय गीतम् ॥
गायन्ती गायय स्वं स्वनुकरणपरं पूर्णभावात् सुतं ते
प्रेम्णा मां पालयास्मिन् निजपरमपदे लीलया लालयान्ते ॥२२॥

"इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे" ॥
( ऋ० ८।९८।१ )

॥ पदपाठः ॥

"इन्द्राय । साम । गायत । विप्राय । बृहते । बृहत् ।
ब्रह्मऽकृते । विपःऽचिते । पनस्यवे ॥

इन्द्रायैवेन्दुसत्त्वं परममृतसमं गीयतां सामरस्यं
विप्राय व्यापकाय श्रुतिकृतिबृहते बार्हतं सद्रहस्यम् ॥
प्राज्ञाय ब्रह्मकर्त्रे परतरतपसा छन्दसां वर्षकाय
प्रज्ञानादिप्रदात्रे त्रिकरणमुखतः साम गायत्रमाद्यम् ॥२३॥

गीतं तत् सामवेदे स्वर-रससमता-योगतो गायनार्हे
गान्धर्वाख्योपवेदे जन-जगदधिप-प्रत्यगात्मप्रसादे ॥
सिद्धाः सप्तस्वरास्ते त्रिषवणगुणतो मन्द्रमध्योच्चताराः
बद्धाः सोपानरूपाः प्रतिपदमुदिताः स्थूल-सूक्ष्मातिसूक्ष्माः ॥२४॥

वाण्या प्राणेन नादे प्रणिहितमनसा गायने तत्स्वराणां
क्लृप्ताः षड्जादिसञ्ज्ञाः श्रुतिमधुररसास्ता उदात्तादिरूपाः ॥
तद्गानात् स्वात्मनादश्रवणरसमुखाद् वाग्रसस्यानुभावे
वेदे लोके च भूयः प्रकृतिगणपराः सौमनस्यप्रसादे ॥२५॥

शास्त्रैः षड्जादिभेदात् स्वरनिरतमनःप्राणवाक्संविदाऽन्तः
वाचोपांशुस्वरेऽन्तःसुनिशितमहसा सूक्ष्मसन्मानसेन ॥
सानुस्वारेण तूष्णीं प्रतिपिहितमुखान्नासिकानुस्वरेण
मौनेनान्तःस्वनादश्रवणपरतया गायनं सामरस्यात् ॥२६॥

नित्याभ्यासादियोगात् समरकलया बाह्यवीणादिनादैः
स्वान्तर्वाक्संस्वरेण प्रतिनिशितहृदा प्राणनोच्छ्वासनेन ॥
साध्या सङ्गीतशास्त्रात् सकलगुणगणैः संहिता सत्त्वपूर्णा
लोके वेदे च साम्ना स्वररसमधुरा वाक्परा चित्समाना ॥२७॥

गायत्री दिव्यवीणा चिदनलवदना वाक् चतुष्पादपूर्णा
वेदानां सा चतुर्णां सुचतुरवचना दिक्चतुर्वक्त्रवर्णा ॥
जिह्वाग्रे साम्युदीर्णा स्वररसवचना वाङ्मनःप्राणगुण्या
सौम्या शीर्षण्यरस्या समरसरसनाऽभ्येति सर्वाग्रगण्या ॥२८॥

ओमित्येकाक्षरात्मा प्रणवपरतरा ब्रह्मसन्मात्रभूता
साक्षाद् ब्रह्मात्ममूर्तिः परमपुरुषहृद्ब्रह्मसद्वाचकात्मा ॥

सत्यज्ञानामृतात्मा स्वररसकलिता विश्वरूपात्मशक्तिः
दैवी गायत्रसत्त्वा जगति विजयते देवमिन्द्रं प्रपन्ना ॥२९॥

तारो ज्योतिस्त्रयीयुक् करणभुवनभृद् व्याहृतीष्टत्रिमात्रः
तद्वाच्यार्थात्मने ते भवतु मम नमो रुद्रताराय नित्यम् ॥
तारा तद्वाचकात्मा प्रणवमनुतनुः शब्दशक्तिस्वरूपा
तारायै ते मनो मे प्रथितसकलहृद्देवतामन्त्रमय्यै ॥३०॥

इन्द्राय स्वात्मने तत् प्रियतममुदितं सामगायत्रमाद्यं
सर्वान्तर्धीन्द्रियोद्यं श्रुतिनयनमनःप्राणवाक् सत्त्वहृद्यम् ॥
गायत्र्या वेदवाचा स्वररसमहसा छन्दसा सामरस्याद्
गायन्तीन्द्रं स्वमीशं परतमपुरुषं पारमैश्वर्यपूर्णम् ॥३१॥

गायत्री वेदमाता स्वररससहिता गायति ब्रह्म पूर्णं
प्रत्यक्षं स्वात्मसत्त्वं वितरति सरसं ब्रह्मणस्पत्युदीर्णम् ॥
गायन्तं त्रायते सा स्वरदमृतरसैः पूर्णसंवित्प्रदानाद्
विद्युज्ज्योतिश्चितैन्द्री निजनिखिलजगत्संसवित्री प्रमात्री ॥३२॥

॥ इति एकोनत्रिंशी कला सम्पूर्णा ॥

## ॥ त्रिंशी कला ॥

### ॥ वेदविद्या ॥

"यद् वाग् वदन्त्यविचेतनानि" इति नेमो भार्गवः ऋषिः। वाग्देवता, त्रिष्टुप् छन्दः ॥

यद् वाग् वदन्त्यविचेतनानि ।
राष्ट्री देवानां निषसाद मन्द्रा ॥
चतस्र ऊर्जं दुदुहे पयाँसि
क्वस्विदस्याः परमं जगाम ॥

(ऋ० मं० ८।१००।१०)

### ॥ पदपाठः ॥

यत् । वाक् । वदन्ती । अविऽचेतनानि ।
राष्ट्री । देवानाम् । नि । ससाद । मन्द्रा ॥
चतस्रः । ऊर्जम् । दुदुहे । पयाँसि ।
क्वस्वित् । अस्याः । परमम् । जगाम ॥

वाग्देवी परमात्मनश्चितिमुखादाविर्भवन्ती सती
प्राग्विश्वबोदयतः सुपूर्णपुरुषं सत्यं वदन्ती स्वयम् ॥
चित्त्या सेयमचेतनानि सकलान्यूर्जोच्चरन्ती सदा
राष्ट्री सा निषसाद सा दिविषदां मन्द्रा प्रहर्षप्रदा ॥१॥

वाग् वै धेनुरियं स्तनैश्च वदनैर्दिव्यैश्च वेदैः पदैः
चिद्योगेन चतुर्भिरान्तरतनैः पूर्णैः पुमर्थप्रदैः ॥
ज्ञानं जीवनसद्रसं समरसैरूर्जं दुहाना मुदा
तस्यास्तत् परमं हि धाम चरमं क्वस्वित् समास्ते सदा ॥२॥

वेदो विश्वविदात्मशक्तिकपरावाक्चिद्विकासात्मकः
संविद्रूपक एव सन् समुदगात् सच्छब्दतन्मात्रकः ॥
शक्त्या शब्दमुखादनूदितमदः सर्वं सदर्थात्मकं
तादात्म्यादिह वाच्य-वाचकचितेः सर्वार्थबोधार्थकम् ॥३॥

छन्दोवाग् ऋषिभिः श्रुताऽऽत्मतपसा सिद्धाऽऽप्यनूचानगा
मन्त्र-ब्राह्मणरूपका श्रुतिरिति प्राप्ता ऋगाद्या त्रयी ॥
ग्राह्याऽनुश्रवणाद् गुरोर्निजमुखाद् वाचाऽनुवाच्या मता
साऽनूचानमुखागता श्रुतिमुखा वेद्येह वेदात्मिका ॥४॥

तस्मात् तल्लिखितादिवेदपठनं प्रायो निषिद्धं श्रुतेः
मात्रा-सस्वरमन्त्रवर्णवचनं नाप्यं विना संश्रुतेः ॥
ह्रस्वादिप्लुतदीर्घवर्णवदनं मात्रादिकालान्वयं
सोदात्त-स्वरितानुदात्तसदनं शास्त्रादिशिक्षान्वयम् ॥५॥

सङ्गीतेऽपि समं स्वरानुवचनं तज्ज्ञस्वरानुश्रुतेः
षड्जादिस्वरवर्णकानुकरणं नैवेह शक्यं लिपेः ॥
तन्मात्रादिगुणानुवादनमपि प्रायोऽत्र भाषान्तरे
तद्विद्यादिषु वाक्-तदर्थविषये लोकेऽखिलं तत्समम् ॥६॥

तद्वेदादिकतन्त्रमन्त्रवचने सर्वात्मना तद्विधौ
मन्त्राणां तु गुरूपदेशमुखतः संश्रावणोच्चारणे ॥
तद्वेदोदितमेव सर्वविदितं लोकेऽपि संसाध्यते
सर्वत्राचरणेऽपि शास्त्रविहितं नित्यादनुष्ठीयते ॥७॥

वेदार्थस्त्रिविधो मतः श्रुतिपरैर्भूतादितत्त्वैस्त्रिभिः
प्रत्यक्षं सदचेतनं जगदिदं बाह्यं भवेद् भौतिकम् ॥
दिव्यं केवलमेव चेतनमतस्तत् स्यात् परोक्षं परं
ह्यध्यात्मं तु सचेतनं स्फुरणतस्तच्चापरोक्षं स्वयम् ॥८॥

आदावीश्वरवाङ्मुखेन नियतं तच्छब्दसङ्केतकं
सञ्ज्ञारूपगुणक्रियादिमुखतो वाच्यार्थसद्वाचकम् ॥
तद्वन्मन्त्रदृशां महःसुमनसां प्राचामृषीणां हृदा
बुद्ध्याऽतीन्द्रियवस्तुदर्शनविदा छन्दोवचोऽनूदितम् ॥९॥

तत्सङ्केतमुखेन दैविकदृशा तत्सर्वशब्दार्थयोः
याथार्थ्येन समस्तवस्तुविषये तन्नामरूपात्मनोः ॥
सन्धेयं करणत्रयेण सकलं ज्ञान-क्रिया-भावनैः
सत्यं तत्त्वमदोविमर्शनपरैर्वेदे च लोकेऽखिलैः ॥१०॥

प्रत्यक्षं प्रथितं ह्यचेतनमिदं विश्वं जगद् भौतिकं
ब्रह्मेशादिपदं प्रचेतनपरं दिव्यं परोक्षार्थकम् ॥
अध्यात्मं हि सचेतनं स्फुरदहञ्चित्याऽपरोक्षं निजं
तत्त्वैक्येन समस्तसत्त्वगमकं सङ्केतभाषात्मकम् ॥११॥

एवं केवलतत्त्व-वस्त्ववगतौ वागर्थरूपादिकं
सङ्केतेन समर्थितं लिपिमुखाद् रूपादिसंल्लेखनात् ॥
गूढार्थं तदलौकिकं हि सकलं तद्वत्पुनर्लौकिकं
प्रत्यक्षं च परोक्षमप्यनुनयेत् तेनापरोक्षं निजम् ॥१२॥

यद्वाचाऽभ्युदितं परं श्रुतिमुखाच्छ्रुत्वैव शब्दादिकं
स्वाश्रित्य स्वहृदन्तरेऽनुकृतितस्तद्रेखया मुद्रितम् ॥

तस्यार्थं प्रतिशक्तिसङ्ग्रहणतो विद्यात् स्वतोऽर्थात्मना
हृद्रेखामुखतः समस्तविषये सिद्धा लिपेः कल्पना ॥१३॥

तद्वाचश्चिरकालसंस्थितिकृते ताम्रे शिलायां पटे
सद्रूपाल्लिपिरूपतोऽनुकरणात् सा ताडपत्रादिके ॥
क्लृप्ता चिह्नसरूपकाऽऽकृतिमयी रेखादिरूपाकृतेः
सङ्केतात् प्रतिकर्षणात् सुलिखिता पत्रे तु मष्यादिभिः ॥१४॥

रेखाऽङ्काक्षरचित्रवर्णलिपितो हस्तादिमुद्राकृतेः
सर्वं बिन्दुमुखेन तल्लिपिकृतेर्मानं च वाचो विदाम् ॥
सङ्केतात्मकसप्तसाधनयुता सा गुप्तभाषात्मिका
सर्वार्थविगतौ प्रमाणवदना वागष्टमी स्यात् स्वयम् ॥१४॥

पूर्णेऽह्न्युदिते विशिष्टसमये सूर्येन्दुयोगे निधिः
प्राप्यः श्रीहरिमन्दिरस्य शिखरादित्याप्तलेखाद् विधेः ॥
केचित् तच्छिखरं विभेद्य सहसा भ्रान्तेरपार्थं जगुः
दुर्दैवापहतेश्च केवलमदः शब्दार्थसम्प्रत्ययात् ॥१६॥

कश्चित् सूक्ष्मदृशा कृती च सुकृती ज्ञात्वा रहस्यं विधिं
तच्छायाप्रतिबिम्बभूमिशिखरं खात्वाऽऽपदिव्यं निधिम् ॥
तद्वद् वेदवचःसुगूढमखिलं सत्त्वार्थकं संविदा
प्राप्यं तात्त्विकयौगिकेन तपसा तद्वस्तु सत्यं हृदा ॥१७॥

तत्सङ्केतविशिष्टतत्त्वविषयज्ञानाद्यभावे यथा
भेदात् तच्छिखरस्य मोहविकृतेर्लोभान्मृषा सर्वथा ॥
लाभे प्रत्युत हानिरेव भविता लोकेऽपवादो वृथा
तत् सङ्केतकमेव "वेद[1]-हृदयं" ज्ञात्वेष्टभाक् स्यात् तथा ॥१८॥

लोकेऽपीह विशिष्टवस्तुगमकं सम्पद्यते साधकं
तत्सङ्केतमुखात् प्रमाणपरकं सत्यं त्वसद्बाधकम् ॥
लभ्यं तच्च गुरोर्मुखेन तपसा साध्यं सुधीयोगतः
तत्सङ्केतकृतः प्रधानपुरुषात् पूर्णानुभावोदितम् ॥१९॥

वेदेऽस्मिञ्जगद्-ईश-जीवपरकं तत् तात्त्विकं रूपकं
चक्रं यन्त्रमथो रथश्च रथिकः साश्वः कशा सारथिः ॥
संवादो विविधैतिहासिककथाः सन्मार्गसन्दर्शकाः
सङ्ग्रामोऽदितिजादितेयचरिताः शिक्षाविशिष्टार्थकाः ॥२०॥

देवानां पशुदेवमानववपुः स्त्रीपुन्नपुंसात्मकं
सैकानेकशिरः शरीरकरणं तत्पाणिपादादिकम् ॥

---

[1] वेदरहस्यं उपनिषत्प्रतिपादितम् ।
वेदहृदयनामको ग्रन्थः कश्चित् सप्तसङ्केतार्थप्रतिपादकः मयैव प्रणीतः ।

वज्रं पाशधनुःशराङ्कुशमयं तद्बाहुशक्त्यात्मकं
स्याद् दिव्यायुधरूपकं विजयकृद् युद्धे विवादादिषु ।।२१।।

पन्थाः प्राप्य पदं गतिः प्रगतयः स्वेष्टव्यमिष्टं फलं
तत् सत्यं परमार्थकं सविषयं प्रापञ्चिकं सार्थकम् ।।
अर्थे सत्यहिते प्रवृत्तिरसतोऽनर्थान्निवृत्तिः सतां
निष्ठाऽन्तः परमात्मनि प्रतिरतिः शान्तिश्च शक्तिः स्थितिः ।।२२।।

नैर्गुण्यं सगुणात्मकं त्रिगुणकं व्यस्तं समस्तं समं
तत्त्वं तत् त्रितयं परात्मपरकं तद् भूतदेवात्मकम् ।।
सत्सृष्टि-स्थिति-संहृतिप्रकृतिकं सच्छक्तिसत्त्वात्मकं
श्रद्धाप्यं परसत्यवस्तुनिहितं श्रेयश्च निःश्रेयसम् ।।२३।।

ज्ञानोपासनकर्मयोगपरकं सज्ञान-भाव-क्रियं
ज्ञानेच्छाकृतिशक्तिवृत्तिकरणं तद् वाङ्मनःप्राणगम् ।।
यज्ञा योग-तपः-स्वधर्मपरकास्ते सार्वभौमाः समाः
युक्तायुक्तपरं गुणादिसदसत् तद्भूतविज्ञानकम् ।।२४।।

ज्ञेयं प्राप्यमथानुभाव्यमखिलं सद्भूतिसम्पत्तिकं
ग्राह्यं स्वस्वगुणप्रकृत्यनुगुणं तद्योग्यताद्यन्वयम् ।।
श्रद्धाभक्त्यनुरूपमात्मबलधीवाक्प्राणचित्तान्वयं
श्रद्धेयं स्वमनुश्रयीत परमं वर्णाश्रमाद्युच्छ्रयम् ।।२५।।

दुष्टं दुर्व्यसनं दुरुक्तमनृतं तद्दौर्मनस्यादिकं
रागद्वेषदुरिष्टदुष्कृतिपरं दुर्दानवीर्यादिकम् ।।
पापं तापदमन्ततः पतनकृद् दुःखाद्यनर्थार्थकं
वेद्यं त्यक्तुमिहात्मनो हितकृते त्याज्यं निषिद्धार्थकम् ।।२६।।

वेदे गुप्तसदर्थसंविदुदये रूपादिसङ्केततः
सिद्धं साध्यमुखेन सर्वमुदितं बिन्द्वादिसद्रूपकम् ।।
रेखाङ्काक्षरचित्रवर्णपरकैः सन्मुद्रया बिन्दुना
सङ्केतैरिह सप्तभिः सहितया वाचाऽन्वियाद् वस्तु सत् ।।२७।।

ज्ञातं सिंहगजादिशब्दमुखतः साक्षान्न दृष्टं यथा
तच्छक्तिग्रहमन्तरा न तु भवेत् तस्यावबोधः स्वतः ।।
दिष्टात् तन्मिलितं सुदृष्टमपि सत् तत् स्यात् तदाऽपार्थकं
तस्माद्धेतुरदृष्टवस्त्वधिगमे तस्यैव चित्रादिकम् ।।२८।।

एवं सिद्धसमस्तवस्तुविषये तन्नामरूपादिकं
वेद्यावेद्यतरे(ऽ)परे परतरे साक्षात् प्रमाणात्मकम् ।।
तत्सङ्केतगुणक्रियादिपरकं रेखाङ्कचित्रादिकं
शब्दाद्याकृतिकं क्रियाद्यविकृतं तन् मौनमुद्रादिकम् ।।२९।।

भूगोलं प्रथितं खगोलमुदितं शारीरकं स्वान्तरं
स्वाप्रत्यक्षवनौषधादिसकलं सद्रूपतश्चित्रितम् ।।
तद्रेखामुखतोऽखिलाकृतिमयं सल्लेखविस्तारितं
सर्वं वस्तु भवेत् सतां विदुदये सन्नामरूपाहितम् ।।३०।।

"या मृषयो मन्त्रकृतो मनीषिणः
अन्वैच्छन् देवा स्तपसा श्रमेण ।।
तां देवीं वाच ँ हविषा यजामहे
सा नो दधातु सुकृतस्य लोके ।।
।। तै० ब्रा० २, ८, ८, ५ ।।

॥ पदपाठः ॥

"याम् । ऋषयः । मन्त्रकृत इति मन्त्रकृतः । मनीषिणः
अन्विति ऐच्छन् । देवाः । तपसा श्रमेण ।।
ताम् । देवीम् । वाचम् । हविषा । यजामहे ।
सा । नः । दधातु । सुकृतस्येति सुकृतस्य । लोके ।।

पूर्वे मन्त्रदृशः समे च मुनयो देवाः सदन्वेषिणः
तेऽन्वैच्छन् सुमनीषिणः सुतपसा यामेव देवीं पराम् ।।
तां वाचं सुयजामहे सुमनसा हव्येन सत्सन्दृशा
साऽस्मान् सम्प्रति सन्दधातु सुकृते लोके स्वनाकेऽन्तिके ।।३१।।

वेदात्मा परसत्यमन्त्रवदना ब्रह्मात्मसत्त्वानना
वागदेवी परमार्थ-सत्त्ववचना सौम्यात्मरस्यायना ।।
सिद्धार्था सकलार्थसिद्धिसदना सर्वात्मयोगायते
सर्वार्थेषु विराजते सुनयना सा सार्वभौमायते ।।३२।।
।। इति त्रिंशी कला सम्पूर्णा ।।

# एकत्रिंशी कला

"देवीं वाचमजनयन्त देवाः" इति नेमो भार्गवः ऋषिः
वाग्देवता त्रिष्टुप्छन्दः ॥

देवीं वाचं मजनयन्त देवा—
स्तां विश्वरूपाः पशवो वदन्ति ॥
सा नो मन्द्रेष मूर्जं दुहाना
धेनु वाग् अस्मानुपसुष्टुतैतु ॥
( ऋ० मं० ८, १००, ११ )

॥ पदपाठः ॥

"देवीम् । वाचम् । अजनयन्त । देवाः
ताम् । विश्वऽरूपाः । पशवः । वदन्ति ॥
सा । नः । मन्द्रा । इषम् । ऊर्जम् । दुहाना
धेनुः । वाक् । अस्मान् । उप । सुऽस्तुता । आ । एतु ॥

॥ कल्पलता ॥

देवीं वाचममूमनादिनिधनां ब्रह्मात्मतेजोमुखात्
प्रादुर्भूतरसस्वरादिनिनदां देवाः समापुः समे ॥
देवेभ्यः परभावचित्समुदितां तां विश्वरूपा इमे
भूमौ ते मुनयो नराश्च पशवः सर्वे वदन्त्यर्थतः ॥१॥

दिव्या वागिह साऽवनौ दिविषदां नित्यं प्रहर्षप्रदा
वेदात्माऽखिललोकजीवनरसैर्ज्ञानोदयैकार्थदा ॥
धेनुर्वागुदिता चतुःस्तनमुखैः पूर्णा पुमर्थप्रदा
साऽस्माभिः प्रतिसंस्तुता स्वनिरतानस्मानुपैतु स्वयम् ॥२॥

॥ अक्षरमातृका ॥

प्रत्यक्षं परमक्षरं मतिमतां सर्वार्थसंवित्प्रदं
वाच्यार्थस्य च वाचकं श्रुतिमतां तत्संश्रुतेः सत्पदम् ॥
स्वान्तः संविदितार्थकस्य विदुषां तत्त्वोपदेशास्तरं
सर्वार्थप्रतिसम्प्रकाशनपरं वाङ्मूलमाद्याक्षरम् ॥३॥

॥ इन्द्रस्य छन्दोवर्षणादक्षरोदयः ॥

इन्द्रो विश्वविभूतिपूर्णपुरुषो यश्छन्दसां वर्षकः
छन्दोभ्यो निजवाङ्मुखाच्छ्रुतिमुखादाविर्बभूवार्षकः ॥
यज्ञात् सर्वहुतश्चितेः परतमः सर्वाऽन्तरात्माऽन्वयं
सोऽहञ्चित्स्फुरणात्मवाक्पतिरयं सञ्चेततेऽसौ स्वयम् ॥४॥

॥ परब्रह्मणः सकाशाद् वागक्षरोदयः ॥

॥ अहम् ॥

पूर्णं ब्रह्म हि नामरूपरहितं शब्दाद्यतीताहितं
प्रत्नं सत्यपराक्षरात्मकचिता सत्तैकतत्त्वोहितम् ॥
प्रज्ञानात्मकसत्यवस्तुपरमं तत् प्रत्यगात्मोत्कलं
सञ्जज्ञे निजसंविदोऽक्षरपरं "ब्रह्माहमस्मी"त्यलम् ॥५॥

॥ प्रत्यक्षब्रह्मरूपायाः वाचः सर्वाक्षराणामाविर्भावः ॥

साक्षाद्ब्रह्मचिदात्मशक्तिपरया वाचा विदा चित्पतेः
सद्योगेन बृहस्पतेः सुरपतेः सत्त्वेन वाचस्पतेः ॥
वाचोऽहं स्फुरणात् परात्मकचितेर्वाग्ब्रह्मणः सत्पतेः
पूर्णात्माक्षरवाङ्मुखात् स्वरणतो यज्ञेक्षरं भूपतेः ॥६॥

॥ सगुणब्रह्मणो वाङ्मुखात् सर्वाक्षराविर्भावः ॥

ब्रह्मा सन् सगुणो रजोगुणमुखस्तेजःसुवेदान्वयाद्
ब्रह्माणीं निजवाचमात्मनि परां चित्त्याऽधितिष्ठन्नयम् ॥
विश्वस्यास्य विसृष्टये प्रणिहितः सोऽहञ्चितेः प्रत्ययात्
स्वाग्नेर्वाङ्मुखतोऽक्षराणि धमनात् सन्निर्मिमाय स्वयम् ॥७॥

॥ विष्णोः शङ्खनादादक्षरोदयः ॥

विष्णुः सत्त्वगुणप्रधान उदगात्सञ्चेतनः स्वार्चिषा
शङ्खेनात्मनिनादचित्प्रणवतश्चक्रेण सज्ज्योतिषा ॥
विश्वस्य स्थितये निजस्वररसैर्ज्ञाने च सञ्जीवने
श्रीर्लक्ष्मीचितिशक्तितोऽहमिकया वाचाऽक्षरं निर्ममे ॥८॥

॥ रुद्रस्य डमरुध्वनेः सर्वाक्षराविर्भावः ॥

श्रीरुद्राड्डमरोर्मुखेन तपसा नादात्मवाग्ज्योतिषा
शब्दब्रह्मपराक्षराणि सकलान्याविर्बभूवुस्त्विषा ॥
गौरी वाग् अनलेन्द्रवैद्युतचितेः साऽहं स्वराम्नायकं
वाच्यार्थान्वितवाचकाहपुटितैर्वर्णैः समाम्नायकम् ॥९॥

व्योम्नो विद्युदुदीरितेन महसा सोऽव्यक्तनादाक्षरः
सूक्ष्माणुध्वनिरूपतः समुदगात् प्राग्विश्वसृष्टेः स्वरः ॥
तस्मादक्षरमालिका स्वरकला प्रादुर्बभूवाद्यया
मूलाग्राखिलवाक्सुबीजपरया सद्व्योमतन्मात्रया ॥१०॥

रुद्रात् तड्डमरोर्मुखात् मुनिनदाज्जातेऽर्थसद्वाचके
सूत्रेष्वेव चतुर्दशस्वइउणित्याद्ये हलन्तेऽक्षरे ॥
आद्यन्तेन सहेतमित्यनुनयादाद्यन्तवर्णद्वयं
तद्योगाप्तमहेत्यदः पदमिदं सर्वाक्षरैकास्पदम् ॥११॥

आद्ये वेदमुखेऽपि मन्त्रवचने यद्वा अहेति द्वयं
साद्यन्तं प्रतिसंहितं पदमिदं कण्ठ्यं भवेदव्ययम् ॥
सामर्थ्यादभिलक्ष्यकं ह्यभिहितं भूतादिसद्वस्तुनः
तादर्थ्यात् प्रतिबोधकं श्रुतिमतामान्तर्यमर्थात्मनः ॥१२॥

वेदे व्याकरणे तु वर्णपरकेऽप्याद्ये समाम्नायके
सूत्रेष्वेव चतुर्दशस्वखिलवाङ्मूलेऽखिलाम्नायके ॥
प्रत्याहारपरे पदे त्वलि पुनर्यद्वा अहेत्याश्रुतं
तत् सर्वव्यवहारसिद्धिकरणं भाषादिबीजं श्रितम् ॥१३॥

तस्मिन्नेव हिताः समा अहपदे सर्वार्थसद्वाचिकाः
वाचो वस्तुगुणार्थबोधपरका वर्णाः परा वाचकाः ॥
तत्सर्वाक्षरमूलबीजगुणतो युक्तं शिरोबिन्दुना
पूर्णार्थात्मकबीजसत्त्वकमहं सर्वार्थबोधावहम् ॥१४॥

तस्मिन्नेव विसर्गशक्तिमुखतस्तत्तेजसा स्यादहः
नित्यार्थेन दिवा भवेदहरहः प्रत्यर्थतः प्रत्यहम् ॥
लिङ्गेषु त्रिषु सत् समं मतमहं तत् सर्वनामात्मकं
तत्राहस्तु नपुंसकं हि तदह स्यात् प्रत्यहं चाव्ययम् ॥१५॥

आद्यां पूर्णकलात्मिकाक्षरपरां "वाचं"[1] चतुःषष्टिकां
विद्यां विश्वविभूतिसत्त्वनिलयां संवित्प्रकाशार्थकाम् ॥
देवास्तेऽजनयन्त सर्ववचसामाद्ये समाम्नायके
सङ्केताङ्कसुगुप्तपूर्णकलया वाचाऽन्वियात् सङ्ख्यया ॥१६॥

चत्वारो दशका द्वयाधिकयुता वर्णाः समाम्नायके
पश्चात् संस्कृतवाङ्मये सुविहिता एकोनपञ्चाशता ॥
सानुस्वारविसर्गकावपि यमा ᳵक ᳶपौ च दुस्पृष्टळः
दीर्घ-ह्रस्वयुत-प्लुतैश्च मिलिताः क्लप्ताश्चतुःषष्टिकाः ॥१७॥

---

[1] अत्र "वाचं" इत्येतत् पदं सङ्केतेन सङ्ख्यावाचकम् । "याद्यष्टौ" इतिसङ्केते "वा" इति चतुःसङ्ख्याबोधकम् "कादिनव" इति चकारः षट्सङ्ख्याबोधकः "अङ्कानां वामतो गतिः" इति वाचम् इतिपदेन चतुःषष्टिसङ्ख्याका वागुच्यते ।

ते सर्वेऽप्यहमात्मकेऽप्यहरिति ज्ञेया अहेत्यव्यये
सिद्धास्तत्र समन्वयात् प्रतिहिता अन्तर्हिताः स्वान्वये ।।
विश्वस्मिन्निह देव-मानव-मुनि-प्राज्ञादिसम्प्रत्ययात्
सर्वेष्टार्थसमस्तवाङ्मयचयास्ते सर्वभाषामयाः ।।१८।।

वर्णाः षोडश ते स्वराः समुदिता आद्या विसर्गान्तगाः
स्पर्शाः कादय एव मान्तविततः पञ्चाधिका विंशतिः ।।
अन्तःस्था अपि यादयः शषसहाश्चत्वार ऊष्माभिधाः
संसिद्धाऽक्षरमालिकाऽखिलमतादेकोनपञ्चाशता ।।१९।।

तस्मात्स्यात् तदहेति वर्णगणनादेकोनपञ्चाशता
क्षंबीजात्मकमेरुवर्णमिलिता पञ्चाशदर्णाऽऽहिता ।।
आदि-क्षान्तगमातृकाक्षरमयी सैवाक्षमाला मता
रुद्रादभ्युदिता सुवाक्स्वरमयी रुद्राक्षमाला मिता ।।२०।।

लोम्ना तत्र विलोमतश्च गणनाद्वर्णैस्तु पञ्चाशता
तद्योगादुदियात् परा शतमणिः सा वर्णमाला मता ।।
पश्चात् साऽकचटैस्तथा तपयशैर्वर्गादिमैकाक्षरैः
सैवाष्टोत्तरयुक्छताक्षरमणिर्वर्णात्मिका मालिका ।।२१।।

केचित् सङ्कुचितात्मनैव मुदिते वर्गादिमैकाक्षरे
वर्गाद्यैरकचादिवर्णगणनादष्टाक्षराण्यूचिरे ।।
तत्सङ्केतवचोमुखात् समविधेर्वर्गीयवर्णाः समाः
श्रेयाः षोडश पञ्चपञ्चकयुताः पश्चाच्चतुष्कद्वयम् ।।२२।।

ऋङ्मन्त्रेत्वधिको ळकार उदितो दुस्पृष्टवर्णाभिधः
सोऽडज्मध्यस्थडकारसत्प्रतिनिधिः स्याद्"अग्निमीळे" पदे ।।
तेनैवाक्षरमालिका मणिमयी स्यादेकपञ्चाशता
क्षंबीजात्मकमेरुणा स्मृतिनुता प्रायोऽत्र तन्त्रे श्रिता ।।२३।।

एते सम्प्रति वेदिताः सुविधिना सर्वेऽपि वर्णाः पुनः
ते सर्वाक्षरमूलबिन्दुमनु[1]-ना युक्ताः शिरोबिन्दुना ।।
तद्योगेन हि मातृका मनुमयास्तन्त्रे प्रसिद्धाः समे
न्यस्याः शक्ति-शिवादिदैवतपराः स्वाङ्गेषु सर्वेष्वमी ।।२४।।

रुद्राद् विद्युत आत्मनः श्वसनतो वागग्नितेजोमुखान्
मूलेऽन्तःस्फुरणात्मचेतनपरा वाक्पूर्णबिन्द्वग्रकात् ।।
आदि-क्षान्तसमाक्षराणि परमे व्योमन्युदीर्णान्यतः
पञ्चाशत्परमातृकाक्षरमयी रुद्राक्षमालोदिता ।।२५।।

---

[1] मनुशब्दः तन्त्रशास्त्रे मन्त्रपर्यायः ।।

तन्त्रे ब्रह्मसुपूर्णशक्तिककला बिन्द्वन्विता मातृकाः
मन्त्रा बीजमया भवन्ति परमाः सर्वेऽपि वर्णात्मकाः ॥
सानुस्वारमथो विसर्गसहितं मन्त्रैकबीजाक्षरं
तच्छक्त्यादिकदेवतातनुमयं यन्त्रे तनौ न्यस्यते ॥२६॥

वेदे तत्त्वविशिष्टसत्त्वलषिताः वर्णैश्चतुःषष्टिकैः
सा पूर्णात्मकलात्मिका चितिपरा वाङ्मातृका वर्णकैः ॥
प्रत्ना साऽक्षसुमालिकाऽखिलगुणैः सर्वस्वसत्त्वोत्तमा
सर्वेषामपि मूर्ध्नि दिव्यमहिमा सन्धार्यतां सत्तमा ॥२७॥

सर्वेषां पशुपक्षिणामपि नृणां प्रज्ञावतां प्राणिनां
भाषाणां वचने तथाऽनुकरणे वीणादितन्त्रीस्वने ॥
वाद्ये वादनतः स्वरे श्वसनतश्छन्दःसु तद्गायने
सङ्केतेन समासतो नियमिता वर्णाश्चतुःषष्टिकाः ॥२८॥

एवं तत्र समस्तसस्वरयुतास्ते ह्रस्वदीर्घप्लुताः
सर्वे पूर्णकलान्विताः परिमिता वर्णाश्चतुःषष्टिकाः ॥
भाषाणामिह देवमानवकृते तत्संस्कृते प्राकृते
सर्वासामपि सङ्ग्रहेण नियता वेदेऽनुभावोदिताः ॥२९॥

वक्त्रेऽन्तःप्रतिसंस्थितैः सुनियतैः स्थानैश्च कण्ठादिभिः
वर्णोच्चारणमत्र यावदुचितं तद्वेदशास्त्रादिभिः ॥
यावत् कल्पयितुं हि शक्यमखिलं तावत् पुरा कल्पितं
शिक्षा-व्याकरणादिशास्त्रमुखतः सर्वानुभावोदितम् ॥३०॥

एवं निर्णयतः समासमुखतः प्रायश्चतुःषष्टितः
वर्णेभ्योऽप्यधिकाक्षरादिकथने योगेन विज्ञानतः ॥
इष्टं चेदिह संस्कृतेऽपि सकले भाषान्तरे प्राकृते
सम्पाद्यं पृथगिन्द्रियान्तरमपि स्यान्नूतनाविष्कृतेः ॥३१॥

तस्मादेव समग्रभूतलगतास्वन्यासु भाषास्वपि
प्रत्नास्तेऽत्र भवन्ति वक्तुमुचिताः शक्याश्च सर्वात्मना ॥
नेतः कल्पयितुं हि शक्यमपरं नाप्यस्ति तत् कल्पितं
भाषावाङ्मयमेव लीनमखिलं वर्णे चतुःषष्टिके ॥३२॥

॥ इति एकत्रिंशी कला सम्पूर्णा ॥

## ॥ द्वात्रिंशी कला ॥ (३२)

### ॥ वाग्धेनुः ॥

"उपह्वये सुदुघां धेनुमेता" इति दीर्घतमाः ऋषिः ।
वाग्धेनुर्देवता त्रिष्टुप् छन्दः ॥

उपह्वये सुदुघां धेनुमेतां
सुहस्तो गोधुगुत दोहदेनाम् ॥
श्रेष्ठं सवं सविता साविषन्नो-
ऽभीद्धो घर्मस्तदुषु प्रवोचम् ॥

(ऋ० मं० १।६४।२६।)

### ॥ पदपाठः ॥

उपह्वये । सुऽदुघाम् । धेनुम् । एताम् ।
सुऽहस्तः । गोऽधुक् । उत । दोहत् । एनाम् ॥
श्रेष्ठम् । सवम् । सविता । साविषत् । नः ।
अभिऽइद्धः । घर्मः । तत् । ऊम् इति । सु । प्र । वोचम् ॥

### ॥ कल्पलता ॥

वाचं धेनुमिमां सुदोग्धुममृतं दोग्धा सुहस्तोऽन्वहं
सत्यां तां समुपह्वये रसवतीं विश्वस्य संरक्षणे ॥
श्रेष्ठं तत्परिदोहनं समरसं सद्यः स्तुतः साधयेत्
स्वर्ज्योतिः सविता समिद्ध इह तं सम्प्रार्थये सादरम् ॥१॥

वाचो दोहनमत्र वेदमुखतः संविद्रसप्रापकं
ब्रह्मानन्दरसानुभावकरणं स्वान्तः प्रशान्तिप्रदम् ॥
विश्वस्यैव हिताय शक्तिरसदं तन्मन्त्रयोगाश्रयात्
सद्यः सिध्यति सामराज्यमचिरादध्यात्मसत्त्वोर्जितम् ॥२॥

प्राक्सृष्टेरपि संस्थितां श्रुतिमयीं तां व्योमवाणीमिव
श्रुत्यास्वर्दिगुपात्तयाऽभ्यश्रृणवञ्छन्दःसुमन्त्रात्मिकाम् ॥
तस्माद् वै श्रुतिरेव साऽभवदिति श्रोत्रेण संश्रूयते
सा वाक् कर्णपरम्परोर्मिकलया सर्वैः समाश्रीयते ॥३॥

प्रत्नो मानवजातिमूलपुरुषो मान्यो महर्षिर्मनुः
प्राज्ञो मन्त्रदृगेव सोऽयमुदगात् सन् आदिमो मानवः ॥

प्रायस्तद्वदयोनिजास्तु पुरुषाः सप्तर्षयोऽन्याः स्त्रियः
प्रादुर्भूतमहामहः प्रकृतयः पूर्वे प्रसिद्धिं ययुः ॥४॥

तेषां वागिह मूलतः समुदगात् सा वेदभाषाऽऽदिमा
पश्चात् सद्व्यवहारसाधनकृते तैः संस्कृता सत्तमा ॥
सैवाद्यापि सदा भुवि प्रचलिता या देवभाषा समा
सर्वेषामिह भाषिकादिवचसां सा मातृभाषोत्तमा ॥५॥

नृणां याऽखिलभूतले निवसतां सर्वासु भाषास्वपि
प्रत्ना सेयमनाद्यनन्तवितता स्याद् देवभाषा परा ॥
सृष्टेः पूर्वमपि स्थिता स्थिरतमा सा नामशेषाक्षरा
सर्वेभ्योऽप्यजरामरा परतमा सर्वस्वभावोत्तरा ॥६॥

सिद्धा व्याकरणादिशास्त्रनियमाद् वेदाङ्गसत्त्वोन्मुखा
सर्वार्थेषु सुसंस्कृता सुविशदा भाषा श्रुता संस्कृता ॥
विश्वस्यादिविसृष्टिसत्त्ववितता नित्यैव सत्याक्षरा
सङ्केतेन निसर्गशक्तिनियता सर्वार्थसत्प्रत्यया ॥७॥

वेदव्याकरणोन्मुखात् प्रथमतः सा पाणिनेः संस्कृता
पश्चाद् वैदिकसंस्कृतादिवचसां सोच्चारणा शिक्षिता ॥
भूयस्तत्त्वविमर्शनेन सुचिरादाद्यात् समाम्नायतः
सूक्ष्मार्थेन समुद्धृताः सुकृतिना वर्णाश्चतुःषष्टिकाः ॥८॥

वेदे विश्वविभूतिपूर्णमुदितं यावत् सुविज्ञानदं
मन्त्रब्राह्मणरूपवाग्रसनिधौ सत्त्वं समस्तार्थदम् ॥
तावन्नास्ति हि वाङ्मयेऽपि निखिले तत् कल्पनातीतगं
नेतः कल्पयितुं च शक्यमखिलैर्वेद्यं गभीरार्थकम् ॥९॥

एतैः पूर्णकलाहितैः श्रुतिमतैर्वर्णैश्चतुःषष्टिकैः
न्यूनाः प्राकृतवाङ्मयप्रभृतयो भाषास्त्वपूर्णाः समाः ॥
तद्भाषान्तरवाङ्मये तु निखिलं सद्वेदमन्त्राक्षरं
वक्तुं सल्लिखितुं न शक्यमखिलैश्छन्दोमयं सस्वरम् ॥१०॥

"किं स्विदासीदधिष्ठानं" इति,

किंस्विदासीदधिष्ठानमारम्भणं
कतमः स्वित् कथाऽऽसीत् ॥
यतो भूमिं जनयन् विश्वकर्मा
विद्या मौर्णोन्महिना विश्वचक्षाः ॥

( ऋ० १०, ८१, २ )

॥ पदपाठः ॥

"किम्ऽस्वित्। आसीत्। अधिऽस्थानम्।
आऽरम्भणम्। कतमःऽस्वित्। कथा। आसीत्॥
यतः। भूमिम्। जनयन्। विश्वऽकर्मा।
वि। द्याम्। और्णोत्। महिना। विश्वऽचक्षाः॥

किंस्वित् पूर्णमिहाद्यमास परमं विश्वाद्यधिष्ठानकं
ब्रह्मात्मा कतमः कथं सुखतमो मूलं तदारम्भणम्॥
यस्माद् भूमिमिमां रसेन जनयन् सन् विश्वकर्माऽऽदिमः
यश्चौर्णोन्महसा दिवं च परमां सन् विश्वचक्षुः समः॥११॥

सृष्टेः प्राग् जगदेतदास सकलं बिन्द्वात्मकं केवलं
शून्यं तत् सदसद्विशून्यमखिलं प्रज्ञानिषेधास्पदम्॥
नेतीत्येव सतो निषेधमुखतः पूर्णं विरामात्मकं
तत्रान्तेऽपि नञाऽवशिष्टमपदं वाचाऽप्यमित्यात्मकम्॥१२॥

सद्विन्दोरुदितानि वस्तुवचने सर्वाक्षराण्यादितः
पूर्णं ब्रह्म सदक्षरं तदपदं सर्वाक्षरैकास्पदम्॥
येनानुस्वरितं तदुच्छ्वसनतः स्वार्थावबोधार्थके
सोऽनुस्वार इति प्रसिद्धिमुदगात् सर्वाक्षरेष्वर्थभाक्॥१३॥

ओङ्कारे प्रणवाक्षरे स्वरपरे तद्ब्रह्मणो वाचके
योऽनुस्वार इति स्वरः समुदितो बिन्दुः स पूर्णात्मकः॥
पादः सोऽत्र तुरीय इत्यभिहितो वेदेऽप्यमात्राश्चितः
साक्षादात्मसरूपकोऽक्षरमयः सत्यः प्रतीकः श्रुतः॥१४॥

ईङ्कारेऽपि स बिन्दुरेव परमः पूर्णः स्वरैकात्मकः
वाग्बीजं परमन्त्रबीजमुदितं ब्रह्मैतदेकाक्षरम्॥
गायत्रीति सुसञ्ज्ञया श्रुतिनुतं सद्ब्रह्मणा सम्मितं
गेयं साम गुणेन सस्वरपदं सत्साभरस्यान्वयम्॥१५॥

तद्बिन्दुद्वययोगतः पुनरयं सिद्धो विसर्गः परः
सामर्थ्यात् स समानबिन्दुयुगलात् तच्छक्तितत्त्वस्वरः॥
एकस्यैवमनेकभावगुणतस्तस्माद् विसर्गार्थतः
प्रादुर्भावगुणक्रियादिपरकः सृष्टिक्रियाशक्तिकः॥१६॥

सोऽनुस्वार-विसर्गवर्णयुगले बिन्द्वात्मकः केवलः
सन्नन्याक्षरसंहितः प्रतिभवेत् सर्वार्थसम्बोधकः॥
शून्यं सत् स्वरवर्णयोगरहितं तत् सर्वथाऽपार्थकं
स्यात् सर्वाक्षरमूलमेव परमं वर्णात् परं सार्थकम्॥१७॥

एकं शून्यमिदं नपुंसकपरं तच्छब्दसत्त्वात्मकं
स्त्रीः-पुंसोस्तु विसर्ग एव विहितः सन् बिन्दुयुग्मात्मकः ॥
आख्यातेऽपि तु तत्क्रियापदगतः स्यात् तत्क्रियाद्यर्थकः
सोऽप्यन्याक्षरशब्दनामरहितस्तत्तद्विभक्त्यर्थकः ॥१८॥

नित्यं लिङ्गविभक्तिभिश्च वचनैर्योगात् समासात् कृतेः
यन्नव्येति तदव्ययं क्वचिदपि प्रायोगिकेष्वर्थभाक् ॥
अत्यन्तर्बहिरूर्ध्वतश्च परितो नाना तदानीं स्वयं
स्वः सायं च दिवा पुनश्च बहुशः श्वः सर्वशः प्रायशः ॥१९॥

सोऽनुस्वारपरोऽखिलाक्षरशिरो बिन्दुः सदैकात्मकः
स्याद् वर्णात् पुरतः क्वचित्तु तदधो भाषालिपेर्भेदत ॥
सर्वत्रापि विसर्ग एव पुरतः पूर्वत्र सोऽर्धात्मकः
ते रेखाक्षरलेखनेषु विहितो वाचि स्वरैकात्मकाः ॥२०॥

वक्त्रोद्घाटनपूर्वकं सुवचने तत्सम्पिधानाद् असोः
नासाऽनुस्वरितो बहिर्निजगतेरुच्छ्वासतः सर्वतः ॥
नासिक्योऽयमनुश्रुतः श्रुतिमुखात् पूर्णात्मकः सन् स्वयं
पूर्णात्मानमनूदितोऽखिलमुखात् तस्मादनुस्वारभाक् ॥२१॥

तस्मादक्षरनादबिन्दुककलारूपाद्यतीतात्मनः
सानुस्वारमयं समं रसमयं विद्यादनुज्ञाक्षरम् ॥
सर्वाद्यं परमं स्वमन्त्रकमयं स्वावर्तयन् योगतः
तत्त्वैक्येन समासतः समरसात् प्रज्ञानभाक् स्यात् स्वतः ॥२२॥

वेदे मन्त्रमुखे तु बिन्दुरुदितः सोऽप्यर्धमात्रात्मकः
वाग्रूपोऽयममात्रकोऽपि विदितो नोच्चारणीयः परः ॥
गुप्तः स प्रणवाक्षरादिषु हितः सन्नेकबिन्दुः स्वरः
ब्रह्मैकात्मक एव सन् निगदितः पूर्णः पराशक्तिकः ॥२३॥

सद्बिन्दुस्वररूपकं परतमं प्रत्नं जगत्कारणं
विश्वस्यास्य हि सङ्क्षयेऽपि सततं विश्वाप्ययैकास्पदम् ॥
साक्षाद्ब्रह्मगुणान्वयादिह पुनस्तन्निर्गुणे निर्गुणं
तस्मिन् वस्तुपरेऽक्षरे स्थितमिदं पूर्णं समं सद्गुणम् ॥२४॥

विश्वेषां जगतां परं पदमदो विश्वाद्यधिष्ठानकं
विश्वारम्भणचित्क्रियादिकरणं सन्मूलबीजात्मकम् ॥
सङ्ख्यामानगुणक्रियादिरहितं विश्वैकमानात्मकं
प्रत्यक्षं परवस्तुनः समुदगाद् बिन्दुः प्रतीकं स्वयम् ॥२५॥

वाच्यार्थेष्टमनाद्यनन्तमुदितं लक्ष्यार्थकं वाचकं
छन्दःसस्वरसद्रसानुनदितं तद्बीजमन्त्रात्मकम् ॥

चिन्नादस्वरनामरूपचितिभिः स्फूर्त्यक्षराद्यात्मकं
बिन्दुर्मन्त्रमयः स्वसंविदुदये सन्मौनमुद्रात्मकः ॥२६॥

तन्मन्त्रानुजपात् तदर्थमननान्मूर्धन्यविज्ञानभाक्
तद्वाचाऽनुकृतेर्जपादिककृतौ लक्ष्यार्थसद्भावनात् ॥
हृद्योगेन समस्ततत्त्वमुखतो बिन्दुस्वरालम्बनात्
सद्यस्तत् समुदेति शक्तिकलितं सद्वस्तुसत्त्वं स्वयम् ॥२७॥

सत्त्वं शक्तिपुमात्मनोः समरसाज्जयोती रसैकात्मकं
तस्मिन्नभ्युदिते महाद्युतियुते सच्छान्तिशक्त्यूर्जिते ॥
अज्ञानान्धतमोभयादिशमनाद्दुष्पापतापोल्लयात्
प्रज्ञानामृतपूर्णबिन्दुरुदियान्मूर्ध्नि स्वशान्त्यै श्रियै ॥२८॥

बिन्दुः सोऽयमणोरनादिरकलः सन्नप्यणीयान् स्वयं
ब्रह्मात्मादिरिवैव सत्यशबलश्चिन्मात्रसत्त्वान्वयात् ॥
व्याप्त्या विश्वविभूतियोगमुखतः प्रज्ञानभावाश्रयः
पूर्णश्चन्द्र इवेन्द्र एव महतो भूमा महीयान् समः ॥२९॥

सानुस्वारविसर्गबिन्दुयुगलो हंसः समन्त्राक्षरः
सोऽहञ्चित्स्फुरणात्मवाक्स्वररसब्रह्मात्मसत्त्वाक्षरः ॥
हंसीं वाचमनुष्टुभं समनुयन् इन्द्रोऽयमात्मा मुदा
हंसात्मा स सुसन्दृगेव परमः सन्दर्शनीयो विदा ॥३०॥

"हिङ्कृण्वती वसुपत्नी वसूनां" इति दीर्घतमाः ऋषिः।
वाग्धेनुर्देवता। त्रिष्टुप्छन्दः ॥

हिङ्कृण्वती वसुपत्नी वसूनां
वत्समिच्छन्ती मनसाऽभ्यागात् ॥
दुहामश्विभ्यां पयो अघ्न्येयं
सा वर्धतां महते सौभगाय ॥

(ऋ० मं, १, १६४, २७)

॥ पदपाठः ॥

"हिम्ऽकृण्वती । वसुऽपत्नी । वसूनाम् ।
वत्सम् । इच्छन्ती । मनसा । अभि । आ । अगात् ॥
दुहाम् । अश्विभ्याम् । पयः । अघ्न्या इयम् ।
सा । वर्धताम् । महते । सौभगाय ॥

॥ कल्पलता ॥

वाग्धेनुर्वसुपालिका वसुमती पत्नी वसूनां सती
सेच्छन्ती मनसाऽखिलं जनगणं हिङ्कुर्वती साऽऽभ्यगात् ॥
अश्विभ्याममृतं महो-रसमयं सत्त्वं दुहाना सतां
विश्वस्यैव हि सौभगाय महते योगाय सा वर्धताम् ॥३१॥

वाग् वै वेदचतुष्टयस्तनमुखा संविद्रसानां निधिः
वेदात्मा भुवि "कामधेनु"—रुदगात् सर्वार्थदोग्धी सताम् ॥
अघ्न्या सेयमहिंस्यवाक् सुललिता सा "दैवरातोदिता"
धन्या "कल्पलता" सुधादिकलिता (ऽऽ) कल्पान्तमा वर्धताम् ॥३२॥

॥ इति द्वात्रिंशी कला सम्पूर्णा ॥

॥ प्रथमा वेदार्थकल्पलता समाप्ता ॥

सेयं जनता-जगद्-ईशस्य
करकमलाञ्जलौ
समर्पिता
॥ चिरं विजयताम् ॥

लेखनम्
नई देहली
सं० २०१९
शके—१८८४
आश्विनपूर्णिमायां
स्थिरवासरे समाप्तिं नीता

सन्—१३-१०-१९६२

इत्यादि विज्ञापयिता
भवदीयः
वेद-विद्वद्-विधेयः
दैवरातः
ऋषिकुल—योगाश्रमः
गोकर्णः